॥ श्रीहरिः ॐ तत्सत् ॥

सद्धर्मानुशासनं नाम ।

# श्रीश्रीमधुसूदनसंहिता

शास्त्रम् ॥

श्रीनिगमागममंडलीद्वाराप्रकाशितम्

कलेर्गताब्दाः ५००२

मुम्बय्यां

"ज्ञानसागर" मुद्रणयंत्रालयाधिपति

पं॰श्रीधरात्मज

श्रीकृष्णलालशर्म्मणा

मुद्रितम् ।

द्वितीयं संस्करणम् २००० पुस्तकानि ।



संवत् १९५८ सन १९०१



श्रीपरमात्मने नमः ।

# श्रीश्रीमधुसूदनसंहिता ।

## प्रथमोऽध्यायः ।

## भारतोत्कर्षवर्णनम् ।

यस्मिन् सर्व्वे यतः सर्व्वे यः सर्व्वे सर्व्वतश्च यः । यश्च सर्व्वमयो देवस्तस्मै सर्व्वात्मने नमः ॥ १ ॥ यतो भूतानि जायन्ते येन जीवन्ति सर्व्वतः । यस्मिँस्तु विलये यान्ति नमस्तस्मै परात्मने ॥ २ ॥ मूकं करोति वाचालं पंगुं लंघयते गिरिम् । यत्कृपा तमहं वन्दे श्रीजगद्गुरुमव्ययम् ॥ ३ ॥ ब्रह्मपुत्र इति ख्यातो नदः स्रोतस्विनीपतिः । प्राच्यां यस्य वहन्नास्ते वीचिमालासमाकुलः ॥ ४ ॥ प्रतीच्यां च नदीनाथः सिन्धुः शाखागणैः सह । वहति प्रोच्चलद्वीचिरार्द्रयन् सततं स्थलीम् ॥ ५ ॥ उत्तरां शोभयन्नाशां नगराजो हिमालयः । दैवीं भूतिं समालंब्य स्थितो गौरीगुरुर्गिरिः ॥ ६ ॥ दक्षिणां दिशमालम्ब्य वीचिभिस्ताड़यन् तटम् । राजते लवणाम्भोधिर्दुर्द्धर्षो लोकदुस्तरः ॥ ७ ॥ सोऽयं विस्तीर्णभूभागो नानारत्नविशोभितः । नानावृक्षलतापूर्णो नानागिरिनदीयुतः ॥ ८ ॥ नानापशुगणैर्जुष्टो नानापक्षिनिषेवितः ।

आर्य्याणां पुण्यभूमिः सा भारतं वर्षमुच्यते ॥ ९ ॥ मन्ये विधा-
त्रा जगदेककाननम् विनिर्मितं वर्षमिदं सुशोभनम् । धर्माख्य-
पुष्पाणि कियन्ति यत्र वै कैवल्यरूपं च फलं प्रचीयते[1] ॥ १० ॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः । स ज्ञेयो यज्ञियो देशो
म्लेच्छदेशस्ततः परः[2] ॥ ११ ॥ विष्णुर्वरिष्ठो देवानां ह्रदानामु-
दधिर्यथा । नदीनाञ्च यथा गङ्गा पर्व्वतानां हिमालयः ॥ १२ ॥
अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा वरः । देवीनाञ्च यथा
दुर्गा वर्णानां ब्राह्मणो यथा । तथा श्रेष्ठा कर्म्मभूमिर्भूमौ भारत-
मंडलम्[3] ॥ १३ ॥ इतः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते । न
खल्वन्यत्र मर्त्यानां कर्मभूमौ विधीयंते[4] ॥ १४ ॥ चत्वारि भार-
ते वर्षे युगान्यत्र भवंति हि । कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न
क्वचित् ॥ १५ ॥ अत्रापि भारतं श्रेष्ठं जंबुद्वीपे विशेषतः । यतो
हि कर्मभूरेषा अतोन्या भोगभूमयः ॥ १६ ॥ गायन्ति देवाः
किल गीतकानि धन्यास्तु ये भारतभूमिभागे । स्वर्गापवर्गास्पद-
हेतुभूते भवंति भूयः पुरुषाः सुरत्वात् ॥ १७ ॥ कर्माण्यसंक-
ल्पिततत्फलानि संन्यस्य विष्णौ परमात्मरूपे । अवाप्य तां क-
र्ममहीमनंते तस्मिन्लयं ये त्वमलाः प्रयांति ॥ १८ ॥ जानीम नै-
तत्क्व वयं विलीने स्वर्गप्रदे कर्मणि देहबंधम् । प्राप्स्याम धन्याः
खलु ते मनुष्या ये भारतेनेंद्रियविप्रहीनाः[5] ॥ १९ ॥ अहो अमीषां

---

१ परिदृश्यते परिणामात्मिका प्राकृतिकी पूर्णता केवलमेकस्मिन्नेव वर्षे धरायाम्—तच्च भारतन्नाम वर्षम् । तथा हि तुल्या धृते वर्षान्तराणाम्भारतस्य च प्रकृतिजाते विविधैश्वर्यसमूहे भारतमेव वर्षं वसुधायां केवलमेकं पूर्णप्रकृतिपरिणामपूरितामिति स्वतः सिद्धतया प्रतीयते निरस्यते चात्र संशयस्सर्वथा विशेषविदाम् । प्रकृतिपूर्णपरिणामयुतायामेव च भूमौ मानवस्य पूर्णप्रकृतिसम्पन्नस्य संभवस्सम्भवितुमर्हतीति युक्तमेव । एवञ्च भारते एव वर्षे युगे युगे भगवदवतारस्य चाविर्भावो भवति सम्भवति च पूर्णप्रकृतिपरिणामात्पूर्णमानवता ततश्च पूर्णविकाशो धर्मस्य ज्ञानस्य च प्रज्ञात्मकस्य परिजायते । पूर्णज्ञानञ्च जीवानामपवर्गसाधकमिति सर्वसम्मतम् । २ राजर्षिवर्यस्य मनोः । ३ शिवसारतंत्रम् । ४ इतः श्लोकषट्कं श्रीविष्णुपुराणस्थम् । ५ इन्द्रियविप्रहीनाः अंधपंग्वादयस्ते न भवंति ।

किमकारि शोभनम् प्रसन्न एषां स्विदुत स्वयं हरिः । यैर्जन्म ल-
ब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः ॥ २० ॥
किं दुष्करैर्नः क्रतुभिस्तपोव्रतैर्दानादिभिर्वा द्युजयेन फल्गुना ।
न यत्र नारायणपादपंकजस्मृतिः प्रमुष्टाऽतिशयेन्द्रियोत्सवात्
॥ २१ ॥ कल्पायुषां स्थानजयात् पुनर्भवात् क्षणायुषां भा-
रतभूजयो वरम् । क्षणेन मर्त्येन कृतं मनस्विनः संन्यस्य सं-
यांत्यभयं पदं हरेः ॥ २२ ॥ न यत्र वैकुण्ठकथासुधापगा न
साधवो भागवतास्तदाश्रयाः । न यत्र यज्ञेशमखा महोत्सवः
सुरेशलोकोऽपि न वै स सेव्यताम् ॥ २३ ॥ यद्यत्र नः स्वर्गसु-
खावशेषितम् स्विष्टस्य सूक्तस्य कृतस्य शोभनम् । तेनाजना-
भे स्मृतिमज्जन्म नः स्यात् वर्षे हरिर्यद्भजतां शं तनोति ॥ २४ ॥
हरिकीर्त्तनशीलो वा तद्भक्तानां प्रियोऽपि वा । शुश्रूषुर्वापि मह-
तां स वन्द्योऽस्माभिरुत्तमः ॥ २५ ॥ वेदार्थश्रवणे बुद्धिः पुराण-
श्रवणे तथा । सत्संगेऽपि हि यस्यास्ति स वन्द्योऽस्माभिरुत्तमः
॥ २६ ॥ संप्राप्य भारते जन्म सत्कर्म्मसु पराङ्मुखः । पीयूष-
कलशं हित्वा विषभाण्डं स इच्छति ॥ २७ ॥ वासुदेवार्चनं हि-
त्वा दुष्कर्म्माणि करोति यः । कामधेनुमतिक्रम्य ह्यर्कक्षीरं स
इच्छति ॥ २८ ॥ एवं भारतभूभागं प्रशंसंति दिवौकसः । तं प्रा-
प्य विषयासक्तास्ते मुष्टा मायया हरेः ॥ २९ ॥ हिमवद्विन्ध्य-
योर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः
प्रकीर्त्तितः ॥ ३० ॥ आसमुद्रात् तु वै पूर्वात् आसमुद्राच्च प-
श्चिमात् । तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं विदुर्बुधाः ॥ ३१ ॥
सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्र-
ह्मावर्त्तं प्रचक्षते ॥ ३२ ॥ तस्मिन् देशे य आचारः पारंपर्य्य-

१ इतः पंच श्लोकाः श्रीमद्भागवतस्थाः । २ पूर्वं हीदं भारतमजनाभमिति प्रसिध्दम् । ३ इतः पंच श्लोका राजर्षिवर्यस्य मनोः । ४ इदानीमन्तस्सलिला या सरस्वती सा पुरा यमुनासिन्धुशाखा शतद्रु नाम सरितोरन्तरा भूभागे प्रवहतिस्मेति प्रतीयते ।

क्रमागतः । वर्णानां सान्तरालानां स सदाचार उच्यते ॥ ३३ ॥ एतद्देशप्रसूतस्य सकाशादग्रजन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥ ३४ ॥ सर्व्वर्त्तुकुसुमामोदमुदिते सुमनोहरे । शैत्यसौगन्ध्यमान्द्याढ्यमरुद्भिरुपवीजिते ॥ ३५ ॥ मत्तकोकिलसन्दोहसंघुष्टविपिनान्तरे । सिद्धर्षिमुनिभक्तैश्च योगित्यागिगणैर्वृत्ते ॥ ३६ ॥ अस्मिन्द्विजातयो देशे संश्रयेरन् प्रयत्नतः । शूद्रस्तु यस्मिन् कस्मिन् वा निवसेद्वृत्तिकर्षितः ॥ ३७ ॥ यत्र साक्षादजन्मापि जन्म जग्राह वै हरिः । रामकृष्णादिनाम्ना च प्रसिद्धोऽद्भुतचेष्टितः ॥ ३८ ॥ व्यासो वशिष्ठः कपिलो गौतमश्च पतञ्जलिः । मरीचिरङ्गिरा ह्यत्रिः पुलस्त्यः पुलहः क्रतुः ॥३९॥ वाल्मीकिर्याज्ञवल्क्यश्च कश्यपश्च पराशरः । विश्वामित्रश्च शुक्रश्च मार्कण्डेयो हि रोमशः ॥ ४० ॥ शङ्खश्च लिखितश्चैव कणादः कण्व एवच । शाण्डिल्य–जैमिनि–भृगु–भरद्वाजादयो बुधाः ॥ ४१ ॥ महर्षयः समुत्पन्ना यत्र त्रैलोक्यपावनाः । यत्र षड्ऋतवः सर्वे दर्शयन्त्यात्मवैभवम् ॥ ४२ ॥ सैषा जयति सद्भूमिस्त्रिलोकीजनमोदिका । जीवैः प्रभूतसुकृतैर्यत्र वै जन्म लभ्यते

१ कालस्यादौ वर्षे भारतएव ज्ञानज्योतिषः पूर्णविकाशोऽभूत् ततश्च मिसरयवनरोमकादिदेशक्रमेण निखिलपाश्चात्यप्रदेशेषु ज्ञानज्योतिषस्संविकाशः क्रमश एवाभूत् । वस्तुतस्तु वर्षम्भारतमेव निखिलजगतामादिगुरुस्थानीयमित्यत्र नाणुमात्रः संशयो विद्यते । एतद्विषयकं विस्तृतविवरणं प्रत्नतत्वविदाम्पाश्चात्यपण्डितानां संदर्भेषु द्रष्टव्यम् । २ राजर्षिवर्यस्य मनोः। ३ नान्यद्भारतवर्षाद्देशान्तरं किमपि षड्ऋतुवैभवगौरवं शक्नोति प्रदर्शयितुम् । अत्रैव देशे खलु षड्ऋतवो यथाकालम्पूर्णसम्पदा समाविर्भूय जीवानामपारसुखकारणतां व्रजन्ति । देशान्तरेषु तु त्रयश्चत्वारो वा ऋतवः सम्भवंति । भारतवर्षस्य तु सर्वत्रैव षड्ऋतूनाम्पूर्णविकाशः परिदृश्यते । वत्सरस्य प्रतिमासमेवं चात्र प्रदेशभेदेन ऋतुसुखानुभवस्सम्भवतीति भारतीयप्रकृतेः परमं वैलक्षण्यम् । एवञ्च प्रदेशविशेषे वास्य ग्रीष्मातिरेकेपि सुखशीतलता प्रदेशान्तरे तदैवानुभूयते । शैत्यातिशये च प्रदेशविशेषे निदाघसौन्दर्यमपरत्र तदैव गोचरीक्रियते ।

॥ ४३ ॥ देहाङ्गेषु यथा श्रेष्ठं प्राणिनां मस्तकं तथा । भूभागे पावनो देश आर्य्यावर्त्त इति स्मृतः ॥ ४४ ॥ ब्रह्मावर्त्तो जनपदस्तत्रापि परमोत्तमः । कालिन्दी वहते यत्र गङ्गा च मुनिसेविता ॥ ४५ ॥ ब्रह्मावर्त्तस्य मध्येऽपि नानाहर्म्यविभूषितम् । कान्यकुब्जाख्यनगरं सर्वश्रेष्ठं स्वकैर्गुणैः ॥ ४६ ॥ यस्य श्रेष्ठत्वरम्यत्वपवित्रत्वादिकान् गुणान् । श्रुत्वा पुरापि समभूत् विस्मितः सर्वतो जनः ॥ ४७ ॥ यत्र च ब्राह्मणगणा जगत्पूज्यपदांबुजाः । राजानः क्षत्रियाश्चासन् प्रथितोरुपराक्रमाः ॥ ४८ ॥ अस्यैव भूमिभागस्य लोकस्य वसतो गुणान् । कीर्त्तयंतोऽपि कवयो न तृप्तिं लेभिरे पराम् ॥ ४९ ॥ पञ्च तस्मात् कान्यकुब्जाद्दूतनीता द्विजोत्तमाः । प्राच्येष्वासन् वेदविज्ञाः सर्वशास्त्रविशारदाः ॥ ५० ॥ भट्टनारायणो दक्षो वेदगर्भोऽथ छांदरः । श्रीहर्षश्च कविश्चैते कान्यकुब्जात्समागताः ॥ ५१ ॥ गोयानेष्वधिरूढांस्तान् विप्रान् खड्गादिभिर्युतान् । पत्तिवेशान् समालोक्य विषादो नृपतेरभूत् ॥ ५२ ॥ अश्रद्धाविकलं ज्ञात्वा राजानं ते द्विजोत्तमाः । आशीर्वादार्थनिर्म्माल्यं मल्लकाष्ठे निचिक्षिपुः ॥ ५३ ॥ प्रक्षिप्ते चैव निर्म्माल्ये विप्रैस्तैर्ब्रह्मवादिभिः । अभूत् काष्ठं सजीवं तत् फलपल्लवसंयुतम् ॥ ५४ ॥ दृष्ट्वैतन्महदाश्चर्यं राजा कम्पान्वितोऽभवत् । स्तोत्रञ्च बहुधा तेषामकरोत् स नृपोत्तमः ॥ ५५ ॥ ततो मनीषिणां तेषां योगशक्तिं निरीक्ष्य ताम् । पूर्वभारतभूपालाः सेवातत्परमानसाः ॥ ५६ ॥ आज्ञानुकूलवर्त्तित्वे शिष्यत्वेऽपि च निष्ठिताः । पौरोहित्ये स्ववंशीये प्रायुंजत महात्मनः ॥ ५७ ॥ पुरासीत् योगिनां श्रेष्ठो ब्रह्मवेत्ता त्रिकालवित् । मुनिभिर्वन्द्यचरणो महर्ष्यग्र्यः प्रतापवान् ॥ ५८ ॥ तेजस्वी च तपोनिष्ठः सर्वशास्त्रार्थवित् कविः । त्रैलोक्यपूजितश्चाऽसौ सर्वजीवोपकारकः ॥ ५९ ॥ पवित्रमूर्त्तिशीलश्च पूतकर्म्मा

१ श्रीहर्षजन्म महर्षिभरद्वाजकुलेऽभूदित्याह—पुरेत्यादि ।

जितेन्द्रियः । कर्म्मणो गतिसंवेत्ता भरद्वाजो महामतिः ॥ ६० ॥ तस्य तेजःप्रभावेन ह्याश्रमाभ्याशवर्त्तिनः । व्याघ्रादयोऽपि हिंस्रत्वं तत्यजुर्हीनजन्तुषु॥६१॥तस्यैव निर्म्मले वंशे मुनिराजो महायशाः । वेदान्तज्ञो महाप्राज्ञः श्रीहर्षोऽजनि धार्म्मिकः ॥६२॥ तस्य वंशे योगिनश्च गुणवन्तस्तपस्विनः । विद्वांसः पुण्यचरिताः प्रसिद्धा बहुशोऽभवन्॥६३॥कवीनां कृतहर्षस्य श्रीहर्षस्य महाकवेः । कियत्स्वपि शताब्देषु गतेषु जगतीतले ॥ ६४ ॥ जातस्तद्विमले वंशे गंगानारायणो द्विजः । वेदादितत्वशास्त्राणां पारायणपरायणः ॥ ६५ ॥ ज्येष्ठः पुत्रो गुणाधारस्तस्य श्रीमधुसूदनः । अभूत् विषयविद्वेषी तेजसा भास्करोपमः ॥ ६६ ॥ महापवित्रास्ते देशा ये गंगातीरवर्तिनः । तेषु मुक्तत्रिवेणीति महातीर्थं मतं शुभम् ॥ ६७ ॥ यस्मिन् तीर्थे मुनिवरो जन्मागृह्णात् शुभेऽहनि । यत्र प्रवहते गंगा देवर्षिनरपूजिता ॥६८॥ जलोद्घाताट्टहासोग्रा फेननिर्म्मलहासिनी । क्वचिद्वेणीकृतजला क्वचिदावर्त्तशोभिता ॥ ६९ ॥ क्वचित् स्तिमितगम्भीरा क्वचिद्भयसमाकुला । क्वचित् गम्भीरनिर्घोषा क्वचिन्निस्तब्धनिस्वना ॥७०॥ भक्तसंघाप्लुतजला

---

१ विद्वज्जनशिरोमणिर्मुनिवरो भरद्वाजः सुरगुरोर्देवर्षिकुलतिलकस्य बृहस्पतेस्तनूजः । तस्यैव महर्षेर्भरद्वाजस्य पुरुषान्तरितो वंशधरो मुनिवरः श्रीहर्षः अलौकिककवित्वशक्तिसम्पन्नस्सुपण्डितो बहुविज्ञानविच्चासीत् । तत्प्रणीता नैषधचरितादिग्रन्था भारतीयकाव्यसागरस्य महामूल्यरत्नरूपेणाद्रियन्ते । महापुरुषाणाञ्जगति प्रसिध्दानां सर्वेषामेव बालचरितं किमपि विस्मयकरनानाघटनावलीपूर्णमनुश्रूयते । महापुरुषस्य कविचूडामणेः श्रीहर्षस्य च बालजीवनविषयिण्यो नानैव किंवदन्त्यस्संश्रूयन्ते । २मुनिवरस्य श्रीहर्षस्य चतुर्विंशतिपुरुषान्तरितः सुप्रसिध्दो महात्मा श्रीगंगाधर आसीत् । स च श्रीहर्षवंशस्य समुज्ज्वलतममिव रत्नमद्योतत । श्रीगंगाधरात्षट् पुरुषान्तरितो महात्मा गंगानारायणोऽभूत् । तस्यैवौरसजः परमधार्मिको यशस्वी दानशीलो गार्हस्थ्यधर्मइव देहवान् स्वकुलभूषणम्मुनिवरः श्रीमधुसूदनस्समभवत् । एवञ्च स महाकवेः श्रीहर्षस्य त्रिंशत्पुरुषाऽन्तरित आसीत् । ३ गंगायमुनासरस्वतीति नदीत्रयाणाम्परस्परसंगमापगमानुसारतो यथाक्रमं युक्तत्रिवेणी मुक्तत्रिवेणीति महातीर्थद्वयं समुद्भूतम् तत्र युक्तत्रिवेणीति तीर्थं प्रयागे दृश्यते । मुक्तत्रिवेणीत्यपरञ्च वंगदेशेष्वास्थितम् । तस्यैव महातीर्थस्य सान्निकृष्टे ग्रामविशेषे मुनिवरस्य श्रीमधुसूदनस्य जानिरभूत् ।

निर्म्मलोत्पलसंकुला । क्वचिदुद्धूतपुलिना क्वचिदुत्कीर्णवालुका ॥ ७१ ॥ हंससारससंघुष्टा चक्रवाकोपशोभिता । मत्तैः सदा विहंगैश्च ह्यभिपन्ना समन्ततः ॥ ७२ ॥ क्वचित्तीररुहैर्वृक्षैर्मालाकारैर्विशोभिता । क्वचित् फुल्लोत्पलाच्छन्ना क्वचित् पद्मवनाकुला ॥ ७३ ॥ क्वचित् कुमुदपुष्पाणां कुड्मलैरुपशोभिता । नानापुष्प रजोध्वस्ता रम्या मुनिनिषेविता ॥ ७४ ॥ व्यपेतमलसंयोगा मणिनिर्म्मलदर्शना । फलपुष्पैः किसलयैर्युक्ता गुल्मैश्च सर्वतः ॥ ७५ ॥ विष्णुपादोद्भवा दिव्या ह्यपापा पापनाशिनी । शिशुमारैश्च नक्रैश्च भुजंगैश्च समाकुला ॥ ७६ ॥ शङ्करस्य जटाजूटात् भ्रष्टा सागरगामिनी । समुद्रमहिषी गंगा सारसक्रौञ्चनादिता ॥ ७७ ॥ रंजिता पुष्पमालाभिर्भूषिता भूषणोत्तमैः । मुक्तिदा दर्शनादेव पापघ्नी जाह्नवी नदी ॥ ७८ ॥ तत्रैव ब्रह्मचर्य्येण क्षमया च दमेन च । वैराग्यार्जवसन्तोषैः परोपकृतिवृत्तिभिः ॥ ७९ ॥ सदाचारप्रचारैश्च भगवद्भावभक्तिभिः । आसीन्महर्षिचरितः स श्रीमान् मधुसूदनः ॥ ८० ॥ प्रज्ञेया वा विसारिण्या यो बलेन धनेन वा । धुरं वहति गोत्रस्य जननी तेन पुत्रिणी ॥ ८१ ॥ एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् । सहैव दशभिः पुत्रैर्भारं वहति रासभी ॥ ८२ ॥ कुम्भः परिमितमम्भः पिबत्यसौ कुम्भसम्भवोऽम्भोधिम् । अतिरिच्यते सुजन्मा कश्चिज्जनकं निजेन चरितेन ॥ ८३ ॥ पात्रं न तापयति नैव मलं प्रसूते स्नेहं न संहरति नैव गुणान् क्षिणोति । द्रव्यावसानसमये चलतां न धत्ते सत्पुत्र एष कुलसद्मनि कोऽपि दीपः ॥ ८४ ॥ सत्पुत्रस्तादृशः सोऽभूत् श्रीहर्षकुलभूषणम् । धनवानपि निष्पापः प्रकृत्योदारचेष्टितः ॥ ८५ ॥ दानशीलः सुशीलश्च परोपकृतिदीक्षितः । निर्लिप्तो विषयेष्वासीत् जलेष्वम्बुजपत्रवत् ॥ ८६ ॥ प्राच्यदेशेषु लब्ध्वा स जन्म कल्या-

१ इदमपूर्ववर्णनं त्वादिकविमहर्षिवाल्मीकिकृतम् । २ श्लोकचतुष्टयं सुभाषितम् ।

णवांछकः । यज्ञियेषु प्रदेशेषु शास्त्रशंसननोदितः ॥ ८७ ॥ विप्रमुख्यो मुनिश्रेष्ठः सदसद्भावचिंतकः । ब्रह्मावर्त्तेषु वासं वै मेने स शुभकारकम् ॥ ८८ ॥ तपोवनेषु लुप्तेषु प्राचीनेषु कलौ युगे । स उवास महोद्याने श्यामाशुकनिनादिते ॥ ८९ ॥ मयूरकेकाक्कणिते कोकिलैः कलनादिते । विविधैः पुष्पसंघैश्च चारुचित्रविचित्रिते ॥ ९० ॥ माधवीमल्लिकाजातिपुष्पगुच्छविशोभिते । स्थलपद्मैर्गन्धराजैः स्वर्णगुल्मैश्च भूषिते ॥ ९१ ॥ रसालैर्बदरीभिश्च सिन्दुवारैः शिरीषकैः । कदम्बार्जुनसर्ज्जैश्च सुरम्यैरुपशोभिते ॥९२ ॥ चन्दनैस्तिलकैस्तालैस्तमालैरतिमुक्तकैः । पद्मकैः सरलैश्चैव ह्यशोकैश्चारु सज्जिते । वानीरैस्तिमिदैश्चैव बकुलैः केतकैरपि ॥९३ ॥ द्रुमैर्बहुविधैर्युक्ते विचित्रे चित्तहारके । गह्वरं योगसिध्यर्थं तत्र पञ्चवटीतले[2] । निर्म्मायाऽसौ मुनिस्तस्थौ ब्रह्मध्यानपरायणः ॥९४॥ गृहस्थाश्रमकर्म्माणि कुर्वन् धर्म्मरतः सदा । भक्तितो भार्य्यया शश्वत् सेव्यमानो दिवानिशम् ॥९५ ॥ दुःखपूर्णोऽपि संसारो यस्य दर्शनमात्रतः । आसीदमन्दसंशातिसुखधर्मालयः क्षणात् ॥ ९६ ॥ मानुष्यं वरजन्म भूरिविभवो दीर्घायुरारोग्यता सन्मित्रं सुसुतः सती प्रियतमा भक्तिश्च नारायणे । विद्वत्वं सुजनत्वमिन्द्रियजयः पात्रेषु दाने रतिः आसंस्तस्य सतस्त्रयोदशगुणाः संसारिणां दुर्लभाः ॥ ९७ ॥

इति श्रीश्रीमधुसूदनसंहितायां भारतोत्कर्षवर्णनं नाम प्रथमोऽध्यायः ।

---

१ आध्यात्मिककल्याणप्रार्थिना भिन्नदेशजातेनापि मुमुक्षुणा स्वश्रेयोलिप्सुना कर्मभूमिर्ब्रह्मावर्त्तदेश एववासार्थमाश्रयणीय इति शास्त्रेषु विहितन्दृश्यते । अत एव मुनिवरः श्रीमधुसूदनः पूर्वभारतसंजातोपि सदैव ब्रह्मावर्त्तेषु वासमियेष । २ अश्वत्थवटबिल्वधात्र्यशोकादि पंचवृक्षसमन्वितं पवित्रस्थानं शास्त्रेषु पंचवटीति नाम्नाऽभिधीयते पंचवटीस्थानं गंगातीरादिमहातीर्थतुल्यमिति तन्त्रशास्त्रेषु कथितम् । विशेषतश्चाध्यात्मिकसाधनविषयेषु सर्वविधेषु पंचवटीस्थानमाश्रित्य साधने कृते साधकस्याशु संसिध्दिः संजायत इति प्रसिध्दम् ।

## द्वितीयोऽध्यायः ।

# सदाचारवर्णनम् ।

श्रीमधुसूदनं पुण्यं सर्वज्ञं ज्ञाननिर्मलम् । सर्वशास्त्रेषु तत्वज्ञं सदा ध्यानपरायणम् । जितेन्द्रियं जितक्रोधं जिताहारं जितामयम् ॥ १ ॥ पञ्चवट्यां स्थितं सौम्यं सन्ध्योपासनतत्परम् । ब्रह्मविद्भिर्महाभागैर्ब्राह्मणैश्च समावृतम् ॥ २ ॥ गुणज्ञं सर्वभूतानां परार्थैकप्रयोजनम् । ब्रुवन्तं परमात्मानं मुनीनामुग्रतेजसाम् ॥ ३ ॥ तमेवं गुणसम्पन्नं नारीणामुत्तमा वधूः । सुन्दरी या प्रिया वामासुन्दरी[1] तत्वविद्वरा ॥ ४ ॥ पञ्चवट्यां स्थिता साध्वी मुनींस्ताँत्साधुकर्म्मणः । प्रणम्य दण्डवद्भूमौ स्वामिनं[2] वाक्यमब्रवीत् ॥ ५ ॥ देव्युवाच । भगवन् सर्वशास्त्रज्ञ सर्वभूतहिते रत । धर्म्मतत्वं तु मां ब्रूहि साङ्गोपाङ्गविधानतः ॥ ६ ॥ एवं पृष्टः स भगवान् सभामध्ये स्त्रिया तदा । मुनीनालोक्य नेत्राभ्यां वाक्यमेतदभाषत ॥ ७ ॥ श्रीश्रीमधुसूदन उवाच । उत्तिष्ठोत्तिष्ठ भद्रं ते देवि तत्वविदाम्वरे । वक्ष्यामि धर्म्मसर्वस्वं ब्रह्मणा कीर्त्तितं पुरा ॥ ८ ॥ समाहितमना देवि शृणु त्वं गदतो मम । इत्युक्त्वा ब्रह्मवित् श्रेष्ठो मुनीन्द्रः स तपोनिधिः ॥ ९ ॥ नारायणं जगन्नाथं सर्वभूतहृदि स्थितम् । वासुदेवं जगद्योनिं योगिध्याननिरंजनम् ॥ १० ॥ आनन्दममृतं नित्यं परमात्मानमीश्वरम् । ध्यायन् हृदि हृषीकेशं मनसा सुसमाहितः ।

---

१ वामासुन्दरीति नाम न विशेषणम् । २ मुनिः श्रीमधुसूदनो बंधुसमावृतः स्वावसरक्रमेण धर्म्मोपदेशदानादिभिर्लोकोपकारसंसाधने प्रकृत्यैव नितराम्प्रीतिमन्वभावि । पतिप्राणश्रीरिवापरा सहधर्मिणी च तस्य गृहकार्यतोऽवसरं लब्ध्वैव धर्मरूपिणं पतिन्धर्मोपदेशश्रवणेच्छया तत्वजिज्ञासादिभिश्च सदैव प्रीणितवती । एवं च तत्र श्रोतृमण्डलेषु धर्मज्ञानजिज्ञासिषु सदैव विविधशास्त्रपुराणतन्त्रादिव्याख्या समाख्याताऽभूत् ।

नेत्राभ्यां तां समालोक्य कृपया वाक्यमब्रवीत् ॥ ११ ॥ धर्म्मेणैव जगत् सुरक्षितमिदं धर्म्मो धराधारकः धर्म्माद्वस्तु न किञ्चिदस्ति भुवने धर्म्माय तस्मै नमः ॥१२॥ एक एव सुहृद्धर्मो निधनेप्यनुयाति यः । शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ १३ ॥ धर्म्मं वक्ष्यामि तत्वेन यथोक्तं परमेष्ठिना । चराचराणां वोढारं पावनं शुभमव्ययम् ॥ १४ ॥ सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १५ ॥ देवान् भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥१६ ॥ इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः । तैर्दत्ता न प्रदायैभ्यो यो भुंक्ते स्तेन एव सः॥१७॥यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः । भुंजते ते त्वघं पापा ये पचन्त्यात्मकारणात्॥१८॥अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः । यज्ञाद्भवति पर्जन्यो यज्ञः कर्म्मसमुद्भवः॥१९॥कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् । तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥२०॥एवं प्रवर्त्तितं चक्रं नानुवर्त्तयतीह यः । अघायुरिन्द्रियारामो मोघं देवि स जीवति ॥ २१ ॥ आचारः प्रथमो धर्म्मः श्रौतः स्मार्तः सतां मतः । तस्मादेतत् समायुक्तं गृह्णीयादात्मनो

१ श्रीमद्भगवतः पूज्यपादश्रीकृष्णद्वैपायनवेदव्यासस्य । अतएव " धर्म्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्म्मेण पापमपनुदाति धर्म्मे सर्व्वं प्रतिष्ठितं तस्माद्धर्म्मं परमं वदन्ति" ॥ इति श्रुतिः । २ यज्ञशब्देनात्र धर्मो विवाक्षितः । धर्मेण हि जीवानामनादिसम्बन्धो विद्यते । एते सप्त श्लोकाः श्रीमद्भगवद्गीतायाम् । ३ एवं धर्मभावमभिधारयन् जगदीश्वरो विभुर्विश्वं व्याप्यावास्थितः धर्मसाधनेनैव जीवो निजामुन्नातिं क्रमेण संसाधयाति धर्मसाधनरूपेणैव सत्पुरुषार्थेन च जन्मान्तरमवाप्य दैवीसंपदम् स्वयोग्यां समनुभुंक्ते एवं च सम्पदां सम्भोगेषु धर्मस्यैव एककारणतामनुचिन्त्य पूर्वजन्मानुष्ठितधर्मस्योपकारितामनुसृत्य च निखिलैश्वर्यादीन्धर्मबललब्धान्धर्मार्जनार्थमेव बुद्धिमान् नियुंक्ते स्वोपकारार्थञ्च स्वल्पमेव तदवाशिष्टं व्ययीकरोति । जीवोऽज्ञानहतोऽपरिज्ञाय धर्मस्यैवमलौकिकमाहात्म्यं प्रयोजनैकान्त्यञ्च धर्मसाधनस्य यो विस्मरति धर्ममिन्द्रियासक्तो ध्रुवमेव सदुःखमनुभवाति दुर्बुद्धिः इति नास्ति कश्चित्सन्देहः ।

द्विजैः ॥ २२ ॥ चतुर्णामपि वर्णानामाचारो धर्म्मपालनम् । आचारभ्रष्टदेहानां भवेद्धर्म्मः पराङ्मुखः ॥ २३ ॥ वैदिकैः कर्म्मभिः पुण्यनिषेकादिर्द्विजन्मनाम् । कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ २४ ॥ गार्भैर्होमैर्जातकर्म्मचौडमौञ्जीनिबंधनैः । बैजिकं गार्भिकञ्चैनो द्विजानामपमृज्यते ॥ २५ ॥ मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् । वैश्यस्य धनसंयुक्तं शूद्रस्यतु जुगुप्सितम् ॥ २६ ॥ शर्म्मवत् ब्राह्मणस्य स्यात् राज्ञो रक्षासमन्वितम् । वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥ २७ ॥ स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् । नाम स्याद्दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥ २८ ॥ गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ २९ ॥ गार्हस्थ्यं परमं धर्म्मं सर्वेषां मनुजन्मनाम् । तदेव कथयाम्यादौ शृणु भामिनि ! तत्वतः ॥ ३० ॥ पञ्चयज्ञविधानं तु गृही नित्यं न हापयेत् । ब्रह्मयज्ञो देवयज्ञः पितृयज्ञस्तथैव च । भूतयज्ञो नृयज्ञश्च पञ्चयज्ञाः प्रकीर्तिताः ॥ ३१॥ स्वाध्यायो ब्रह्मयज्ञः स्यात्पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ ३२ ॥ ब्रह्मनिष्ठो गृहस्थः स्याद्ब्रह्मज्ञानपरायणः । यद्यत् कर्म्म प्रकुर्वीत तद्ब्रह्मणि समर्पयेत् ॥ ३३ ॥ न मिथ्याभाषणं कुर्य्यान्न च शाठ्यं समाचरेत् । देव-

---

१ सदाचारानुष्ठानमेव मनुष्याणाम् मुख्यकर्त्तव्यतया निर्दिष्टम् । सदाचारपालनेन हि सदसद्व्यक्तिसम्पन्नो जीवः सकामः स्वर्गराज्यस्य ततः क्रमेण सत्कर्मसाधनादिना चित्तशुद्धौ सञ्जातायान्निष्कामस्य च ज्ञानराज्यस्य भवत्यधिकारी । अतो हि सदाचारानुष्ठानमेव शास्त्रेषु सर्वश्रेष्ठतया समादिष्टम् इदं वचनद्वयम् श्रीदक्षस्मृतेः । अत एव "आचारः प्रथमः" "एष आदेश—उपदेशः "—वेदोपनिषत्—" एतदनुशासनम् "—"एवमुपासितव्यम् "—" नो इतराणि" । इत्यादिश्रुतिः । २ वैदिकैरित्यादि षड्वचनानि श्रीमत्पूज्यपादराजर्षिवर्यस्य मनोः । ३ गर्भसम्बन्धिभिः । ४ इदानींतनकाले चतुर्ष्वपि वर्णेषु ( छज्जु घसीटे रूडे खूडे ) नामानि व्यवहरन्ति स व्यवहारश्च धर्मशास्त्रविरुद्ध एव । ५ श्रीयमस्मृतौ । ६ श्रीमत्पूज्यपादराजर्षिवर्यस्य मनोः ।

तातिथिपूजासु गृहस्थो निरतो भवेत् ॥ ३४ ॥ मातरं पितरश्चैव साक्षात् प्रत्यक्षदेवताम्। मत्वा गृही निषेवेत सदा सर्व्वप्रयत्नतः॥३५॥आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः।भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात्क्षितेस्तनुः॥३६॥ दयाया भगिनी मूर्तिर्धर्मस्यात्माऽतिथिः स्वयम्। अग्नेरभ्यागतोमूर्तिः सर्वभूतानि चात्मनः[2] ॥ ३७॥ तुष्टायां चैव मातरि तुष्टे पितरि भामिनि !। देवप्रीतिर्भवेत्साध्वि! परं ब्रह्म प्रसीदति ॥ ३८ ॥ आसनं शयनं वस्त्रं पानं भोजनमेव च। तत्तत्कालं परिज्ञाय मात्रे पित्रे नियोजयेत् ॥ ३९ ॥ श्रावयेन्मृदुलां वाणीं सर्वदा प्रियमाचरेत्। पित्रोराज्ञानुसारी स्यात् सत्पुत्रः कुलपावनः ॥ ४० ॥ जीवतो वाक्यकरणान्मृताहे भूरिभोजनात्। गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता[3] ॥ ४१ ॥ औद्धत्त्यं परिहासश्च तर्ज्जनं परिभाषणम्। पित्रोरग्रे न कुर्वीत यदीच्छेदात्मनो हितम्॥४२॥ मातरं पितरं वीक्ष्य नत्वोत्तिष्ठेत्ससंभ्रमः। विनाज्ञया नोपविशेत्संस्थितः पितृशासने ॥४३॥ विद्याधनमदोन्मत्तो यः कुर्य्यात्पितृहेलनम्। स याति नरकं घोरं सर्वधर्म्मबहिष्कृतः॥४४॥ मातरं पितरं पुत्रं दारानतिथिसोदरान्। हित्वा गृही न भुंजीयात्प्राणैः कण्ठगतैरपि॥४५॥ वञ्चयित्वा गुरून् बन्धून् यो भुंक्ते स्वोदरंभरिः। इहैव लोके गर्ह्योऽसावमुत्र नरकं व्रजेत् ॥ ४६ ॥ गृहस्थो गोपयेद्दारान् विद्यामभ्यासयेत् सुतान्। पोषयेत् स्वजनान् बन्धूनेष धर्म्मः सनातनः ॥ ४७ ॥ जनन्या वर्द्धितो देहो जनकेन प्रयोजितः। स्वजनैः शिक्षितः प्रीत्या कोऽधमस्तान् परित्यजेत् ॥ ४८ ॥ एषामर्थे प्रिये नित्यं कृत्वा कष्टशतान्यपि। प्रीणयेत्ससततं शक्त्या धर्म्मो

१ ब्रह्मनिष्ठ इत्यादि वचनत्रयं श्रीमहानिर्वाणतंत्रस्थम् अतएव "मातृदेवो भव" पितृदेवो भव " इति श्रुतिः। २ श्रीमद्भागवतम्। ३ श्रीमद्भगवतः पूज्यपादकृष्णद्वैपायनस्य।

ह्येष सनातनः ॥ ४९ ॥ स धन्यः पुरुषो लोके स कृती परमार्थवित् । ब्रह्मनिष्ठः सत्यसन्धो यो भवेद्भुवि मानवः ॥ ५० ॥ न भार्य्यां ताडयेत् क्वापि धनवत् पालयेत्सदा । न त्यजेत् घोरकष्टेऽपि यदि साध्वी पतिव्रता ॥ ५१ ॥ ऋते स्वीयां चेतसापि स्त्रियमन्यां न संस्पृशेत् । दुष्टेन चेतसा विद्वानन्यथा नारकी भवेत् ॥ ५२ ॥ विरले शयनं वासं त्यजेत् प्राज्ञः परस्त्रिया । अयुक्तभाषणञ्चैव स्त्रियं शौर्य्यं न दर्शयेत् ॥ ५३ ॥ धनेन वाससा प्रेम्णा श्रद्धयामृतभाषणैः । सततं तोषयेद्दारान् नाप्रियं क्वचिदाचरेत् ॥ ५४ ॥ उत्सवे लोकयात्रायां तीर्थेष्वन्यनिकेतने । न पत्नीं प्रेषयेत् प्राज्ञः पुत्रामात्यादिवर्जिताम् ॥ ५५ ॥ यस्मिन् नरे स्वसर्वस्वे तुष्टा भार्य्या पतिव्रता । सर्वो धर्म्मः कृतस्तेन पितृदेवप्रियो हि सः ॥ ५६ ॥ चतुर्वर्षावधि सुतान् लालयेत् पालयेत् पिता । ततः षोडशपर्यन्तं गुणान् विद्याश्च शिक्षयेत् ॥ ५७ ॥ विंशत्यब्दाधिकान् पुत्रान् प्रेरयेद्गृहकर्म्मसु । ततस्तान् तुल्यभावेन मत्वा स्नेहं प्रदर्शयेत् ॥ ५८ ॥ कन्याप्येवं पालनीया शिक्षणीयातियत्नतः । देया वराय विदुषे धनरत्नसमन्विता ॥ ५९ ॥ एवं क्रमेण भ्रातॄंश्च स्वसृभ्रातृसुतानपि । ज्ञातीन् मित्राणि भृत्यांश्च पालयेत् तोषयेद्गृही ॥ ६० ॥ ततः स्वधर्म्मनिरतानेकग्रामनिवासिनः । अभ्यागतानुदासीनान् गृहस्थः परितोषयेत्[1] ॥ ६१ ॥ देवर्षिपितृभूतानि ज्ञातीन्बन्धूंश्च भागिनः । असंविभज्य चात्मानं यक्षवित्तः पतत्यधः ॥ ६२ ॥ यद्येवं नाचरेद्देवि! गृहस्थो विभवे सति । पशुरेव स विज्ञेयः स पापी लोकगर्हितः ॥ ६३ ॥ निद्रालस्यं देहयत्नं केशविन्यासमेव च । आसक्तिमशने वस्त्रे नातिरिक्तां समाचरेत् ॥ ६४ ॥ युक्ताहारो युक्तनिद्रो मितवाङ्मितमैथुनः । स्वच्छो नम्रः शुचिदक्षो युक्तः

१ इदमपि सर्वं वचनजातं श्रीमहानिर्वाणतन्त्रस्थम् । २ श्रीमद्भागवतम् ।

स्यात्सर्व्वकर्म्मसु ॥ ६५ ॥ शूरः शत्रौ विनीतः स्याद्बान्धवे गुरुसन्निधौ । जुगुप्सितान् न मन्येत नावमन्येत मानिनः ॥ ६६ ॥ सौहार्दं व्यवहारांश्च प्रवृत्तिं प्रकृतिं नृणाम् । सहवासेन तर्कैश्च विदित्वा विश्वसेत्ततः ॥ ६७ ॥ त्रसेद्द्वेष्टुरपि क्षुद्रात्समयं वीक्ष्य बुद्धिमान् । प्रदर्शयेदात्मभावान् नैव धर्म्मं विलङ्घयेत् ॥ ६८ ॥ स्वीयं यशः पौरुषञ्च गुप्तये कथितञ्च यत् । कृतं यदुपकाराय धर्म्मज्ञो न प्रकाशयेत् ॥ ६९ ॥ जुगुप्सितप्रवृत्तौ च निश्चितेऽपि पराजये । गुरुणा लघुना चापि यशस्वी न विवादयेत् ॥ ७० ॥ विद्याधनयशोधर्म्मान् यतमान उपार्जयेत् । व्यसनञ्चासतां संगं मिथ्याद्रोहं परित्यजेत् ॥ ७१ ॥ अवस्थानुगताश्चेष्टाः समयानुगताः क्रियाः । तस्मादवस्थां समयं वीक्ष्य कर्म्म समाचरेत्[1] ॥ ७२॥ वयोबुध्यर्थवाग्वेषश्रुताभिजनकर्मणाम् । आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा[2]॥ ७३ ॥ योगक्षेमरतो दक्षो धार्म्मिकः प्रियबान्धवः । मितवाक् मितहासः स्यान्मान्याग्रे तु विशेषतः ॥७४॥ जितेन्द्रियः प्रसन्नात्मा सुचिन्तः स्याद्दृढव्रतः । अप्रमत्तो दीर्घदर्शी मात्रास्पर्शान् विचारयेत् ॥ ७५ ॥ सत्यं मृदु प्रियं धीरो वाक्यं हितकरं वदेत् । आत्मोत्कर्षं तथा निन्दां परेषां परिवर्जयेत् ॥ ७६ ॥ सन्तुष्टौ पितरौ यस्मिन्ननुरक्ताः सुहृद्गणाः । गायन्ति यद्यशो लोकास्तेन लोकत्रयं जितम् ॥ ७७ ॥ सत्यमेव व्रतं यस्य दया दीनेषु सर्वथा । कामक्रोधौ वशे यस्य तेन लोकत्रयं जितम् ॥ ७८ ॥ विरक्तः परदारेषु निःस्पृहः परवस्तुषु । दम्भमात्सर्य्यहीनो यस्तेन लोकत्रयं जितम् ॥ ७९॥ ज्ञानिना लोकयात्रायै सर्वत्र समदृष्टिना । क्रीयंते येन कर्म्माणि तेन लोकत्रयं जितम्[3] ॥ ८०॥ सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके । अन्नञ्चैव

१ इमानि वचनानि श्रीशिवसारतंत्रस्थानि । २ श्रीयाज्ञवल्क्यस्मृतौ । ३ इमान्यपि वचनानि श्रीमहानिर्वाणतंत्रस्थानि ।

यथाशक्ति सत्कृत्य विधिपूर्वकम् ॥ ८१ ॥ शिलानप्युंछते नित्यं पञ्चाग्नीनपि जुह्वतः । सर्व्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन् ॥ ८२ ॥ न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् । धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथिपूजनम् ॥ ८३॥ आसनावसथौ शय्यां अनुव्रज्यामुपासनाम् । उत्तमेषूत्तमं कुर्य्याद्धीने हीनं समे समंम् ॥ ८४ ॥ पात्रे दानं मतिः कृष्णे मातापित्रोश्च पूजनम् । श्रद्धा बलिर्गवां ग्रासः षड्विधं धर्म्मलक्षणम्[2] ॥ ८५ ॥ आचारः परमो धर्म्मः सर्वेषामिति निश्चयः । हीनाचारः परीतात्मा प्रेत्य चेह विनश्यति ॥ ८६ ॥ सदाचारविशेषज्ञामपि त्वां वरवर्णिनि । सदाचाररहस्यं वै स्थूलतः प्रोक्तवानहम् ॥ ८७ ॥ सदाचारविचारेषु दृष्टान्ता बहवः प्रिये ! । निर्दिश्यन्ते कतिपये मया तव हितेच्छुना ॥८८॥ नियतं भर्त्तृशुश्रूषा रूपे साध्व्यः शुभे व्रते । सावित्री सत्यवद्भार्य्या सती श्रेष्ठा प्रगीयते ॥८९॥ सौभ्रात्रे परमे चैव गृहस्थानां शुभावहे । भ्रातृप्रेमपराः सर्व्वे ख्याता दशरथात्मजाः ॥ ९० ॥ श्रेष्ठस्य सत्यधर्म्मस्य पालने देवरञ्जकः । हरिश्चन्द्रो नृपश्रेष्ठो विख्यातः पृथिवीतले ॥ ९१ ॥ प्रजानुरञ्जने चैव नृपाणां परसाधने । श्रीरामो राघवो लोके दृष्टान्तो गीयते बुधैः ॥ ९२ ॥ भीष्मश्च जाह्नवीपुत्रः पितृभक्तिप्रकाशने । चिराय स्मरणीयोऽभूत् पाण्डवानां पितामहः ॥ ९३ ॥ मातृभक्तिप्रकाशे च दृष्टान्तान्साधवो विदुः । पाण्डवान् पञ्च विख्यातान् वीरमुख्यान्नृपात्मजान् ॥ ९४ ॥ गृहस्थस्य च धर्म्मस्य सम्यक् साधु प्रसाधने । आदर्शरूपो जनको राजर्षिर्गीयते जनैः॥९५॥आर्य्याणां पुण्यवृत्तानां ऋषीणामखिला गणाः । सदाचाररताः ख्याताः सर्व्वलोकप्रपूजिताः ॥ ९६ ॥ ते सदैवानुसर्तव्याः सदाचारविधौ जनैः । त एव परमाप्ताश्च त एवाचारशिक्षकाः ॥ ९७ ॥ सदाचा-

१ इमानि वचनानि श्रीमत्पूज्यपाद राजर्षिवर्यस्य मनोः । अत एव "अतिथिदवोभव" इति श्रुतिः । २ श्रीमद्भगवतः पूज्यपादकृष्णद्वैपायनस्य । ३ श्रीमत्पूज्यपादमहर्षिवसिष्ठस्य ।

रो हि जीवानां सर्वेषां भूमिवासिनाम् । शुभाय कल्पते नित्यं नित्यो धर्म्मः सदेहिनाम् ॥ ९८ ॥ न चात्र संशयः कश्चित् त्वया कार्य्यो मनस्विनि ! । सदाचारमनुष्ठाय शुभं सर्व्वैरवाप्यते ॥ ९९ ॥

इति श्रीश्रीमधुसूदनसंहितायां सदाचारवर्णनं नाम द्वितीयोऽध्यायः ।

## तृतीयोऽध्यायः ।

## वर्णाश्रमधर्म्मवर्णनम् ।

देव्युवाच । श्रुतो बहुविधो धर्म्म इहामुत्रसुखप्रदः । धर्म्मार्थकामदो विघ्नहरो निर्व्वाणकारणम् ॥ १ ॥ साम्प्रतं श्रोतुमिच्छामि ब्रूहि वर्णाश्रमान् प्रभो ! । तत्र ये विहिताचाराः कृपया वद तानपि ॥ २ ॥ श्रीश्रीमधुसूदन उवाच । ज्ञानस्य विविधौ ज्ञेयौ पन्थानौ वेदचोदितौ । अनुष्ठितौ तौ विद्वद्भिः प्रवर्त्तकनिवर्त्तकौ ॥ ३ ॥ वर्णाश्रमोक्तं यत् कर्म्म कामसंकल्पपूर्वकम् । प्रवर्त्तकं भवेदेतत् पुनरावृत्तिहेतुकम् ॥ ४ ॥ कर्त्तव्यमिति विध्युक्तं कामसंकल्पवर्जितम् । यत् कर्म क्रियते सम्यक् ज्ञानयुक्तं निवर्त्तकम् ॥ ५ ॥ निवर्त्तकं हि पुरुषं निवर्त्तयति जन्मतः । प्रवर्त्तकं हि सर्वत्र पुनरावृत्तिहेतुकम् ॥ ६ ॥ अध्यापनं चाध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत् ॥ ७ ॥ प्रजानां रक्षणं दानमिज्याध्ययनमेव च । विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥ ८ ॥ पशूनां रक्षणं दानमिज्याध्ययनमेव च । वणिक्पथं कुसीदञ्च वैश्यस्य कृषि-

१ चत्वारि वचनानि श्रीमत्पूज्यपादराजर्षिवर्यस्य मनोः ।

रेव च ॥ ९ ॥ एकमेव तु शूद्रस्य प्रभुः कर्म्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ १० ॥ ब्राह्मणक्षत्रियविशां शूद्राणाञ्च सुभाषिणि । कर्म्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥११॥ शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजम् ॥ १२ ॥ शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रंकर्म्म स्वभावजम् ॥ १३॥ कृषिगोरक्षवाणिज्यं वैश्यकर्म्म स्वभावजम् । परिचर्य्यात्मकं कर्म्म शूद्रस्यापि स्वभावजम् ॥ १४ ॥ स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः । स्वकर्म्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ १५ ॥ वर्णाश्रमोक्तं सर्व्वत्र विध्युक्तं कामवर्जितम् । विधिवत् कुर्व्वतस्तस्य मुक्तिर्देवि करे स्थिता ॥ १६ ॥ उद्भिज्जाश्चाण्डजाश्चैव स्वेदजाश्च जरायुजाः । जीवाश्चतुर्विधां जातिं लभन्ते स्वस्वभावतः ॥ १७ ॥ यथा जरायुजा यान्ति जातिभेदं चतुर्विधम् । आर्य्यानार्य्यनराश्चैव पशवश्चोत्तमाधमाः ॥ १८ ॥ तथा निसर्गसंसिद्धो ह्यार्यानामार्यमानिनाम् । चतुर्द्धा जातिभेदोऽयं चातुर्वर्ण्यं तदुच्यते ॥ १९ ॥ चातुर्वर्ण्यात्

१ जन्मान्तरवादे स्वीकृते भवति स्वत एव ब्राह्मणादिचातुर्वर्ण्यस्य संसिद्धिः । पूर्वजन्मार्जितकर्मसंस्कारानुसारेणैव शरीरबुद्धिभोगादीनामैहिकानां सँल्लाभो नरस्य जायते तथा च प्रारब्धबलेनैव तस्य ब्राह्मणादिकुले जनिस्सम्भवति । मातापितृसंयोगजं स्थूलशरीरन्तावज्जीवानाम्पूर्वजन्मार्जितकर्म्मभोगानामुपभोगस्य निमित्तमात्रमेव भवति । गुणकर्म्मभ्यामेव हि जातिविभागो जायते । स्वेच्छया एव जीवो ब्राह्मणादिचतुर्वर्णानामन्यतमवर्णोपयोगिकर्मसमूहमनायासेनाभ्यासितुम्प्रभवतीति जीवाधीनान्येव कर्म्माणि । शरीरस्य तु गुणैस्सहातिघनिष्ठो नित्यसम्बन्धो विद्यते । तथा हि मातापितृसंयोगवशाद्यदेव शरीरं यादृशगुणानामाधाररूपतया सञ्जायते तत्र शरीरे तेषामेवाधेयानां गुणानामशेषेण विकासस्सम्भवति । वस्तुतस्तु गुणैः सह स्थूलशरीरस्य घनिष्ठसम्बन्धमवलोक्य जन्मना सह जातिविशेषस्य विलक्षणसम्बन्धोऽवश्यमेव स्वीकर्तव्यः अतएव " चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागश ' इति श्रीमद्भगवद्गीतायाम् ।" ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यःकृतः ॥ ऊरू तदस्य यद्वैश्यः पद्भ्याᳪ शूद्रोऽअजायत " इति श्रुतिः । २ इमानि पंच वचनानि श्रीमद्भगवद्गीतायाम् । ३ चतुर्वर्णविज्ञानमाह उद्भिज्जा इत्यादि चतुर्भिः ।

स्वतःसिद्धादन्यद्वर्णान्तरं यदा । विरुद्धं तद्भवेत्सर्व्वं प्रकृते नात्र संशयः ॥ २० ॥ वर्णाश्रमोक्तं कर्मैव विधिवत् कामपूर्व्वकम् । येनैतत् क्रियते कर्म्म गर्भवासः करे स्थितः ॥ २१ ॥ संसारभीरुभिस्तस्माद्विध्युक्तं कामवर्ज्जितम् । विधिवत् कर्म्म कर्त्तव्यं ज्ञानेन सह सर्व्वशः ॥ २२ ॥ ज्ञानाच्च त्रिषु वर्णेषु आनुलोम्येन मानवाः । ते देवानामृषीणाञ्च पितृणामनृणास्तथा ॥ २३ ॥ ऋषिभ्यो ब्रह्मचर्य्येण पितृभ्यश्च सुतैस्तथा । कुर्याद्यज्ञेन देवेभ्य आनृण्यं धर्ममाचरन् ॥ २४ ॥ कृतोपनयनस्यास्य व्रतादेशनमिष्यते । ब्रह्मणो ग्रहणञ्चैव क्रमेण विधिपूर्वकम् ॥ २५ ॥ सेवेतेमाँस्तु नियमान् ब्रह्मचारी गुरौ वसन् । सन्नियम्येंद्रियग्रामं तपोवृद्धयर्थमात्मनः ॥२६॥नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् । देवताभ्यर्चनञ्चैव समिदाधानमेव च ॥ २७ ॥ वर्जयेन्मधु मां-

१ चत्वारीमानि वचनानि श्रीमत्पूज्यपादमहर्षियाज्ञवल्क्यस्य । २ " जाते ब्रह्मोपदेशे तु कर्म सन्ध्यादिकं चरेत् । " इति पूज्यपादमहर्षिजैमिनीवचनेनोपदेशोत्तरं सन्ध्योपासनकर्तव्यता पूर्वत्र प्रदर्शिता । तच्चोपासनं कथं कार्य्यमित्याकांक्षायां सन्ध्यात्रयस्वरूपप्रदर्शनपूर्वकं तदभिधीयते । तत्र सन्ध्यास्वरूपं प्राह श्रुतिः " रक्षाꣳसि ह वा पुरोनुवाके तपोग्रमतिष्ठन्त तान्प्रजापतिर्वरेणोपामन्त्रयत तानि वरमवृणीताऽऽदित्यो नो योद्धा, इति तान्प्रजापतिरब्रवीद्योधयध्वमिति तस्मादुत्तिष्ठन्तꣳह वा तानि रक्षाꣳस्यादित्यं योधयन्ति यावदस्तमन्वगात्तानि ह वा एतानि रक्षाꣳसि गायत्रियाऽभिमंत्रितेनाम्भसा शाम्यन्ति तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्रियाऽअभिमंत्रिता आप ऊर्ध्वं विक्षिपन्ति ता एता आपो वज्रीभूत्वा तानि रक्षाꣳसि मन्देहारुणे द्वीपे प्राक्षिपान्ति यत्प्रदक्षिणां प्रक्रमन्ति तेन पाप्मानमवधून्वन्त्युद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद " इति । अथ सन्ध्यास्वरूपमाह पूज्यपादः महर्षिः पराशरः " अहोरात्रस्य यः संधिः सूर्यनक्षत्रवर्जितः । सा तु संध्या समाख्याता मुनिभिस्तत्वदर्शिभिः " इति अत एव पूज्यपादकृष्णद्वैपायनव्यासः " उपास्ते संधिवेलायां निशाया दिवसस्य च । तामेव संन्ध्यां तस्मात्तत्प्रवदन्ति मनीषिणः ॥ " इति । तामेव क्रियां विदधाति पूज्यपादमहर्षियाज्ञवल्क्यः । " संधौ संध्यामुपासीत नास्तगे नोद्गते रवौ " इति । तत्रकालभेदेन देवताया नामादिभेदमाह पूज्यपादकृष्णद्वैपायनव्यासः—"गायत्री नाम पूर्वाण्हे सावित्री दिनमध्यके । सरस्वती च सायान्हे सैव सन्ध्या त्रिषु स्मृता ॥ प्रतिग्रहान्नदोषात्तु पातकादु-

सञ्च गंधम्माल्यं रसाँस्त्रियः । शुक्तानि[1] यानि सर्वाणि प्राणिनाञ्चैव हिंसनम् ॥२८॥ अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम् । कामं क्रोधञ्च लोभञ्च नर्तनङ्गीतवादनम् ॥ २९ ॥ द्यूतञ्च जनवादञ्च परीवादन्तथाऽनृतम् । स्त्रीणाञ्च प्रेक्षणालम्भमुपघातम्परस्य च ॥ ३० ॥ एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित् । कामाद्धिस्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ॥ ३१ ॥ स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः । स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचम्पठेत् ॥ ३२ ॥ चोदितो गुरुणा नित्यमप्रचोदित एव वा । कुर्यादध्ययने यत्नमाचार्य्यस्य हितेषु च ॥ ३३ ॥ शरीरञ्चैव वाचञ्च बुद्धीन्द्रियमनांसि च । नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ॥ ३४ ॥ तञ्चेदभ्युदियात् सूर्यः शयानङ्कामचारतः । निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ ३५ ॥ गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि । उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्[2] ॥ ३६ ॥ चतुर्थमायुषो भागमुषित्वाद्यङ्गुरौ द्विजः । द्वितीयमायुषो भागं कृतदारो गृहे वसेत् ॥ ३७ ॥ अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः । या वृत्तिस्तां समास्था-

---

–पपातकात् । गायत्री प्रोच्यते तस्माद्गायन्तं त्रायते यतः ॥ सवितृद्योतनात्सैव सावित्री परिकीर्तिता । जगतः प्रसवित्री वा वाग्रूपत्वात्सरस्वती ॥ " इति ॥ वर्णभेदः स्मृत्यन्तरे विहितः– " गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका ॥ सरस्वती तथा कृष्णा उपास्या वर्णभेदतः "॥ इति ॥ तत्रैव " गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी । सरस्वती विष्णुरूपा उपास्या रूपभेदतः "॥ इति ॥ अथ देशः–पूज्यपादकृष्णद्वैपायनव्यासः–" गृहे त्वेकगुणा सन्ध्या गोष्ठे दशगुणा स्मृता । शतसाहस्त्रिका नद्यामनन्ता विष्णुसंनिधौ ॥ बहिःसंध्या दशगुणा गर्तप्रस्रवणेषु च । खाते तीर्थे शतगुणा ह्यनन्ता जान्हवीजले " ॥ इति ॥ अथ गायत्रीजपनियमः श्रीभगवतः व्यासस्य " अष्टोत्तरशतं नित्यमष्टाविंशतिमेव वा । विधिना दशकं वाऽपि त्रिकालं प्रजपेद्बुधः " ॥ इति ॥

1 यानि स्वभावतो मधुरादिरसानि कालवशेन उदकवासादिना चाम्लयन्ति तानि शुक्तानि न खादयेत् इति श्रीकुल्लूकभट्टाः । २ "अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥" इत्यादि याज्ञवल्क्यस्मृत्युक्तलक्षणैरन्विताम् ।

य विप्रो जीवेदनापदि ॥ ३८ ॥ ऋतामृताभ्याञ्जीवेत्तु मृतेन प्रमृतेन वा । सत्यानृताभ्यामपि वा न श्ववृत्त्या कदा च न ॥३९॥ ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् । मृतन्तु याचितम्भैक्ष्यम्प्रमृतं कर्षणं स्मृतम् ॥ ४० ॥ सत्यानृतन्तु वाणिज्यन्तेन चैवापि जीव्यते । सेवा श्ववृत्तिराख्याता तस्मात्ताम्परिवर्जयेत् ॥ ४१ ॥ षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते । द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥ ४२ ॥ ऋषियज्ञन्देवयज्ञम्भूतयज्ञञ्च सर्वदा । नृयज्ञम्पितृयज्ञञ्च यथाशक्ति न हापयेत् ॥ ४३ ॥ सर्वेषामपि चैतेषां वेदस्मृतिविधानतः । गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्ति हि ॥ ४४ ॥ यथा नदी नदाः सर्वे सागरे यान्ति संस्थितिम् । तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥ ४५ ॥ गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यन्तदारण्यं समाश्रयेत् ॥ ४६ ॥ संत्यज्य ग्राम्यमाहारं सर्वञ्चैव परिच्छदम् । पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत्सहैव वा ॥ ४७ ॥ अग्निहोत्रं समादाय गृह्यञ्चाग्निपरिच्छदम् । ग्रामादरण्यान्निःसृत्य निवसेन्नियतेन्द्रियः ॥ ४८ ॥ मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा । एतानेवमहायज्ञान्निर्वपेद्विधिपूर्व-

१ ओषधिवनस्पति तृणगुल्मादिभ्योऽत्र फलपत्रादिसंग्रहेऽपि जायते खलु द्रोह इति तस्य नांतरीयकतया पंचसूनादिदोषपरिहारार्थं नित्ययज्ञेषु बलिदानादिर्विधीयत एवेति ज्ञेयम् ।
२ तत्स्वरूपं श्रुतावप्युक्तम् " पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति संतिष्ठन्ते तद्ब्रह्मयज्ञः संतिष्ठते " इति । " पञ्चयज्ञविधानं तु गृही नित्यं न हापयेत् " । इति पूज्यपादमहर्षिणा शंखेन । " ततः पंच महायज्ञान्कुर्यादहरहर्गृही " । इति पूज्यपादमहर्षिसंवर्तेन च स्पष्टतयाऽभिधानाच्च । पञ्चयज्ञाकरणप्रायश्चित्तमुक्तं । " अकृत्वाऽन्यतमं यज्ञं यज्ञानामधिकारतः । उपवासेन शुद्ध्येत पाकसंस्थासु चैव हि "॥ इति पूज्यपादमहर्षियाज्ञवल्क्यः । " अकृत्वा तु महायज्ञान्भुक्त्वा चान्द्रायणं चरेत् " इति पूज्यपादमहर्षिवेदव्यासः । " अनिर्वर्त्य महायज्ञान्यो भुंक्ते प्रत्यहं गृही । अनातुरः सति धने कृच्छ्रार्धेन विशुध्यति " इति पूज्यपाददेवर्षिबृहस्पतिः ।

कम् ॥ ४९ ॥ वसीत चर्म चीरं वा सायं स्नायात्प्रगे तथा । जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखानि च ॥ ५० ॥ यद्भक्ष्यं स्यात्ततो दद्याद्बलिं भैक्ष्यांश्च शक्तितः । अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतान् ॥ ५१ ॥ सद्यः प्रक्षालको वा स्यान्मासस‌ञ्चयिकोऽपि वा । षण्मासनिचयो वा स्यात्समानिचय एव वा ॥५२॥ नक्तश्चान्नं समश्नीयाद्दिवा वाऽहृत्य शक्तितः । चतुर्थकालिको वा स्यात्स्याद्वाप्यष्टमकालिकः ॥ ५३ ॥ अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराश्रयः । शरणेष्वममश्चैव वृक्षमूलनिकेतनः ॥ ५४ ॥ तापसेष्वेव विप्रेषु यात्रिकं भैक्ष्यमाहरेत् । गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ॥ ५५ ॥ ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन् । प्रतिगृह्य पुटेनैव पाणिना शकलेन वा॥५६॥एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन् । विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः॥५७॥आसां महर्षिचर्य्याणां त्यक्त्वान्यतमया तनुम् । वीतशोकभयो विप्रो ब्रह्मलोके महीयते॥५८॥वनेषु च विहृत्यैवं तृतीयं भागमायुषः । चतुर्थे त्वायुषो भागे त्यक्त्वा सङ्गान् परिव्रजेत् ॥ ५९ ॥ आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः । भिक्षाबलिपरिश्रान्तः प्रव्रजन् प्रेत्य वर्द्धते ॥ ६० ॥ ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः ॥ ६१ ॥ अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान् । अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥ ६२ ॥ प्राजापत्यां निरूप्येष्टिं सर्व्ववेदसदक्षिणाम् । आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ॥ ६३ ॥ अनग्निरनिकेतः स्याद्ग्राममन्नार्थमाश्रयेत् । उपेक्षकोऽसङ्कुसुको मुनिर्भावसमाहितः ॥ ६४ ॥ कपालं वृक्षमूलानि कुचैलमसहायता । समता चैव सर्व्वस्मिन्ने-

१ श्रीमत्पूज्यपादराजर्षिवर्यस्य मनोः । असंकुसुकः स्थिरमतिः ।

तन्मुक्तस्य लक्षणम् ॥ ६५ ॥ नाभिनिन्देत मरणं नाभिनिन्देत जीवितम् । कालमेव प्रतीक्षेत निदेशं भृतको यथा ॥ ६६ ॥ एककालं चरेद्भैक्ष्यं न प्रसज्जेत विस्तरे । भैक्ष्ये प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥ ६७ ॥ नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा । तथा त्यजन्निमं देहं कृच्छ्राद्ग्राहाद्विमुच्यते॥६८॥ अनेन विधिना सर्व्वांस्त्यक्त्वा सङ्गान् शनैः शनैः । सर्व्वद्वन्द्व-विनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥ ६९ ॥ चत्वारो ब्राह्मणस्योक्ता-स्त्वाश्रमाः श्रुतिचोदिताः । क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः[२] ॥ ७० ॥ अधीत्य वेदं वेदार्थं साङ्गोपाङ्गं विधानतः । स्नायाद्विध्युक्तमार्गेण ब्रह्मचर्य्यव्रतं चरन् ॥ ७१ ॥ संस्कृतायां सवर्णायां पुत्रमुत्पादयेत्ततः । यजेताग्नौ तु विधिना भार्य्यया सह तां विना ॥ ७२ ॥ कान्तारे निर्ज्जने देशे फलमूलोदका-न्विते । तपश्चरन् वसेन्नित्यं साग्निहोत्रः समाहितः ॥ ७३ ॥ आ-त्मन्यग्नीन् समारोप्य संन्यसेद्विधिना ततः । संन्यासाश्रमसं-युक्तो नित्यकर्म्म समाचरेत् ॥ ७४ ॥ यावत् क्षेत्री[३]भवेत्तावत् त्य-जेदात्मानमात्मनि । क्षत्रियश्च चरेदेव मासंन्यासाश्रमात् सदा ॥ ७५ ॥ वानप्रस्थाश्रमादेवं चरेद्वैश्यः समाहितः । शूद्रः शुश्रू-षया नित्यं गृहस्थाश्रममाचरेत् ॥ ७६ ॥ शूद्रस्य ब्रह्मचर्य्यत्वं मुनिभिः कैश्चिदिष्यते । अनुलोमप्रसूतानां त्रयाणामाश्रमास्त्र-यः । शूद्रवच्छूद्रजातानामाचारः कीर्तितो बुधैः ॥ ७७ ॥ चतुर्णा[४]-माश्रमस्थानामहन्यहनि नित्यशः । विध्युक्तं कर्म्म कर्त्तव्यं का-

१ इमे आश्रमधर्मा राजर्षिवर्यमनुस्मृत्युक्ता वर्णिताः । "यन्मनुरवदत्तद्भिषजम्" इति श्रुतिप्रमितत्वान्मन्वर्थस्य । २ उक्तो विस्तरेण वर्णाश्रमधर्मः इदानीं ज्ञानाभिमुखीकरणार्थं पुनः संक्षेपेण वर्णाश्रमधर्ममेवाह एभिर्वचनैः श्रीमत्पूज्यपादमहर्षियाज्ञवल्क्यस्य । अत एव "यतीनान्तु शमो धर्म्मो नियमो वनवासिनाम् । दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम्" इतिश्रुतिः । ३ क्षेत्री क्षेत्रज्ञः । ४ चतुर्भिराश्रमस्थैरित्यर्थः ।

मसंकल्पवर्जितम् ॥ ७८ ॥ तस्मात्त्वमपि कल्याणि स्वधर्ममनुसृत्य च । श्रद्धया विधिवत् सम्यक् ज्ञानकर्म्म समाचर ॥ ७९ ॥ श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात्स्वनुष्ठितात् । स्वभावनियतं कर्म्म कुर्वन्नाप्नोति किल्बिषम् ॥ ८० ॥ सहजं कर्म्म सुभगे सदोषमपि न त्यजेत् । सर्व्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥८१॥ असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः । नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छेति[२] ॥ ८२ ॥

इति श्रीश्रीमधुसूदनसंहितायां वर्णाश्रमधर्मवर्णनं नाम तृतीयोऽध्यायः ।

---

१ स्वकीयप्रकृतेरनुकूलतया साधनानुष्ठानेन साधकः स्वकार्येषु सफलतांल्लभते । प्रकृतौ हि प्रतिकूलायां कार्याणाङ्गतिरोधो भवत्येव । स्रोतसोऽनुकूलगामिनी नौर्ह्यनायासेनैवाग्रतः प्रसरति प्रतिकूले तु स्रोतसि सुचालितापि सा विपदामायासस्य च ध्रुवमेव हेतुतां भजते । एवं च यामेव प्रकृतिमाश्रितो जीवः संजायते तदनुकूलतया संसाधयन् साधनं शीघ्रमेव तत्र साफल्यं समश्नुते । कर्म्मजातं हि यावदीयमेव प्रकृतिनिष्ठम् न तेन सह निष्क्रियस्य ब्रह्मणो वर्त्तते कश्चित्सम्बन्धः । पदार्थाः सर्वे प्राकृतिकतया त्रिगुणात्मकत्वान्न हि भवन्ति दोषलेशवर्जिताः कथमपि । अतः सर्वमेव कर्मजातं सामान्यतो दोषावृतं भवति । प्रकृत्यनुकूलः पुरुषार्थो यथा हि सकामस्य पुरुषस्य हितमाधत्ते निष्कामस्य कर्मयोगिनोपि पक्षे स तथैव परमानन्दभोगोपयोगितां संव्रजति स्वर्गादिकाममभिसँल्लक्ष्य साधकेन स्वप्रकृत्यनुकूलमारब्धे पुरुषार्थे ह्यचिरेणैव तस्य मनःकामनासिद्धिः संभवति निष्कामकर्मयोगिनश्च तथैवानुष्ठाने तथैव स्वाभिप्रायसिद्धिः संजायते । साधको निष्कामः साधनावस्थायान्निष्क्रियजीवन्मुक्तिपदाधिकारात्प्राक् विशिष्टतत्वज्ञानसम्पन्नोपि न कथमपि विक्षेपादेरभिभवादात्मानं परित्रातुं समर्थः । स्थूलशरीरेण सूक्ष्मशरीरस्य घनिष्ठसम्बन्धात्स्थूलशरीरस्याभिभवो न्यूनाधिकतया नियतमेवान्तःकरणे जीवस्य संक्रमते । वस्तुतस्तु प्रकृतिप्रतिकूलतया निष्कामसाधनेऽपि क्रियागतिरोधवशादवश्यं भाविनो नियतमेवान्तःकरणस्य विक्षेपाद्यभिभवः संजायते तथा च निष्कामसाधनाभ्यसनशीलस्यापि कर्मयोगिनः स्वप्रकृत्यनुकूलतया स्वधर्मानुसारेण समाचरणमेव युक्तमिति स्वीकर्तव्यम् । २ श्रीमद्भगवद्गीतास्थानि त्रीणि वचनानि ।

## चतुर्थोऽध्यायः ।

# नारी-धर्म-वर्णनम् ।

देव्युवाच—वर्णाश्रमोक्तधर्म्माणामाश्रयं परमं प्रभो । नारीधर्म्ममृषिप्रोक्तं प्रचक्षस्व ममाऽधुना ॥ १ ॥ येनाऽहं कृतकृत्या स्यां समाकर्ण्य मुखात्तव । मम जातिहितं धर्म्मं धर्म्मतत्वार्थविद्विभो ॥ २ ॥ श्रीश्रीमधुसूदन उवाच—पारमेष्ठ्यमिदं गात्रं प्रधानपुरुषात्मकम् । पिण्डनामधरं दुःखसुखभोगाय कल्पितम् ॥ ३ ॥ बिन्दुः शिवो रजःशक्तिरुभयोर्मेलनात्तयोः । ब्रह्माण्डपिण्डावुद्भूतौ समष्टिव्यष्टिरूपतः ॥ ४ ॥ अनेन विधिना या वै ब्रह्माण्डं वेत्ति विग्रहम् । सर्व्वपापविनिर्मुक्ता सा याति परमां गतिम् ॥ ५ ॥ प्रकृतेः क्षेत्रभूतास्तु स्त्रियः प्रकृतिचञ्चलाः । धर्म्मोपदेशशिक्षां वै हितामर्हन्ति केवलाम् ॥ ६ ॥ अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम् । विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे ॥ ७ ॥ पिता रक्षति कौमारे भर्ता रक्षति यौवने । रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥ ८ ॥ विशीलः कामवृत्तो वा गुणैर्वा परिवर्ज्जितः । उपचर्य्यः स्त्रिया साध्व्या सततं देववत् पतिः ॥ ९ ॥ नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाऽप्युपोषितम् । पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ १० ॥ संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ।

---

१ नारीशरीरोत्पत्तिविज्ञानमाह, पारमेष्ठ्यमित्यादि महासनत्कुमारतंत्रवचनैः । २ स्वभावत एव चञ्चला नार्यः इति ताः सर्व्वदैव अनुशासनाधीनाः कर्तव्याः स्त्रीणां क्षेत्रत्वात् सृष्टिविषयकन्तासाम्मुख्यकार्यकारित्वं विद्यते । क्षेत्रस्य दुष्टत्वे हि वर्णसंकरप्रसङ्गः सर्वजातिविभागनाशप्रसङ्गश्च । अत एव स्त्रीणां स्वातन्त्र्यं सर्व्वथैव वेदेषु निषिद्धम् । उक्तञ्च "न स्त्री स्वातंत्र्यमर्हति" इति । श्रीमत्पूज्यपादराजर्षिवर्यस्य मनोः । ३ श्रीमत्पूज्यपादराजर्षिवर्यस्य मनोः । अत एव "पतिदेवा भव" "पतिरेको गुरुः स्त्रीणाम्" । इत्यादि श्रुतिः ।

कुर्य्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा ॥ ११ ॥ अहंकारं वि-
हायाऽथ कामक्रोधौ च सर्व्वदा। मनसो रञ्जनं पत्युः कार्य्यं
नाऽन्यस्य कस्य[2] चित् ॥ १२ ॥ पाणिग्राहस्य साध्वी स्त्री जीवतो
वा मृतस्य वा। पतिलोकमभीप्सन्ती नाचरेत् किञ्चिदप्रियम्[3]
॥ १३ ॥ भुङ्क्ते भुक्तेऽथ या पत्यौ दुःखिते दुःखिता च या।
मुदिते मुदिताऽत्यर्थं प्रोषिते मलिनाम्बरा ॥ १४ ॥ सुप्ते पत्यौ
च या शेते पूर्व्वमेव प्रबुद्ध्यते। प्रविशेच्चैव या वह्नौ याते भर्तरि
पञ्चताम्। नाऽन्यं कामयते चित्ते सा विज्ञेया पतिव्रता ॥ १५॥
क्षेत्राद्वनाद्वा ग्रामाद्वा भर्तारं गृहमागतम्। प्रत्युत्थायाऽभिन-
न्देत आसनेनोदकेन च ॥ १६ ॥ ततोऽन्नसाधनं कृत्वा स्वभर्त्रे
विनिवेद्य तत्। वैश्वदेवकृतैरन्नैर्भोजनीयांश्च भोजयेत् ॥ १७ ॥
प्रसन्नवदना नित्यं काले भोजनदायिनी। भुक्तवन्तं तु भर्तारं न
वदेत्किञ्चिदप्रियम्। भुक्त्वा नयेदहःशेषमायव्ययविचिन्तया
॥ १८ ॥ पुनः सायं पुनः प्रातर्गृहशुद्धिं विधाय च। कृतान्नसा-
धना साध्वी सुभृशं भोजयेत् पतिम् ॥ १९ ॥ नाऽतितृप्त्या
स्वयं भुक्त्वा गृहनीतिं विधाय च। आस्तीर्य्य साधु शयनं ततः
परिचरेत् पतिम् ॥ २० ॥ आसने भोजने दाने सम्माने प्रियभा-
षणे। दक्षया सर्व्वदा भाव्यं भार्य्यया गृह[4]मुख्यया ॥ २१ ॥ अ-
न्यालापमसंतोषं परव्यापारवर्णनम्। अतिहासातिरोषातिकामं
च परि[5]वर्ज्जयेत् ॥ २२ ॥ यच्च भर्ता न पिबति यच्च भर्ता न चे-
च्छति। यच्च भर्ता न चाश्नाति सर्व्वं तद्वर्ज्जयेत्सती ॥ २३ ॥
तैलाभ्यङ्गं तथा स्नानं शरीरोद्वर्तनक्रियाम्। मार्ज्जनं चैव दन्ता-
नां कुर्य्यात् पतिमुदे सती ॥ २४ ॥ भर्त्सिता निन्दिताऽत्यर्थं

---

१ श्रीयाज्ञवल्क्यस्मृतौ। २ श्रीमत्पूज्यपादभगवतः कृष्णद्वैपायनस्य। ३ श्रीमत्पूज्यपाद-राजर्षिवर्यस्य मनोः। ४ श्रीमत्पूज्यपादभगवतः कृष्णद्वैपायनस्य। ५ श्रीमत्पूज्यपादमहर्षिश्रीवसिष्ठस्य।

ताडिताऽपि पतिव्रता । व्यथिताऽपि भयं त्यक्त्वा कण्ठे गृह्णीत वल्लभम् ॥ २५ ॥ उच्चैर्न रोदनं कुर्य्यात् नैवाक्रोशेच्छिशुं प्रति । पलायनं न कर्तव्यं निजगेहाद्बहिः स्त्रिया ॥ २६ ॥ आहूता गृहकार्य्याणि त्यक्त्वा गच्छेच्च सत्वरम् । किमर्थं व्याहृता स्वामिन् सुप्रसादो विधीय[1]ताम् ॥ २७ ॥ सेवेत भर्तुरुच्छिष्टमिष्टमन्नं फलादिकम् । महाप्रसाद इत्युक्त्वा मोदमाना निरन्तरम् ॥ २८ ॥ सुखसुप्तं सुखासीनं रममाणं यदृच्छया । अवश्येष्वपि कार्य्येषु पतिं नोत्थापयेत् [2]क्वचित् ॥ २९ ॥ नैकाकिनी क्वचिद्गच्छेन्न नग्ना स्नानमाचरेत् । भर्तृविद्वेषिणीं नारीं साध्वी नो भाषयेत् क्वचित् ॥ ३० ॥ गृहव्ययनिमित्तं च यद्द्रव्यं प्रभुणाऽर्पितम् । निर्वृत्य गृहकार्य्यं सा किञ्चिद्बुध्याऽवशेषयेत् ॥ ३१ ॥ त्यागार्थमर्पिताद्द्रव्याल्लोभात्किञ्चिन्न धारयेत् । भर्तुराज्ञां विना नैव स्वबन्धुभ्यो दिशेद्धनम् ॥ ३२ ॥ छायेवाऽनुगता स्वच्छा सखीव हितकर्म्मसु । दासीवाऽदिष्टकार्य्येषु भार्य्या भर्तुस्सदा भ[3]वेत् ॥ ३३ ॥ त्रेतामौपासनं वाग्निं तुलसीं गामुमां रमाम् । यथा विधि यथाकालं स्त्री दीक्षामंत्रमाश्रयेत् ॥ ३४ ॥ गृहिधर्मधुरं साध्वी पत्या सह वहेत्सदा । यतो गृहस्थधर्म्मस्य फलभोक्त्रीति कथ्यते ॥ ३५ ॥ पतिर्नारायणः स्त्रीणां व्रतं धर्म्मः सनातनः । सर्व्वं कर्म वृथा तासां स्वामिनां विमुखाश्च याः ॥ ३६ ॥ स्नानं च सर्व्वतीर्थेषु सर्व्वयज्ञेषु दक्षिणा । सर्व्वदानानि पुण्यानि व्रतानि नियमानि च ॥ ३७ ॥ देवार्च्चनं चाऽनशनं सर्व्वाणि च तपांसि च । स्वामिनः पादसेवायाः कलां नाऽर्हन्ति षोडशीम् ॥ ३८ ॥ गर्भिणी चेद्भवेन्नारी तदा नियमतत्परा । तिष्ठेत् प्रसन्न-

---

१ इति प्रार्थनां कुर्यात् इति शेषः । एतदंतानि श्रीमत्पूज्यपादवेदव्यासभगवतः । २ श्रीमत्पूज्यपादमहर्षेरंगिरसः । ३ श्रीमत्पूज्यपादवेदव्यासभगवतः । ४ श्रीमद्भगवतः पूज्यपादकृष्णद्वैपायनस्य ।

वदना सद्धर्म्मनिरता शुचिः ॥ ३९ ॥ न बीभत्सं किञ्चिदीक्षेन्न रौद्रां शृणुयात् कथां । गुरुं वाऽत्युष्णमाहारं अजीर्णं न समाचरेत् ॥ ४० ॥ गुर्विणी न तु कुर्वीत व्यायाममपतर्पणम् । मैथुनं च न सेवेत न कुर्य्यादतितर्पणम् ॥ ४१ ॥ नोच्चैर्ब्रूयान्न तत्कुर्य्याद्येन गर्भ्भो विनश्यति । एतांस्तु नियमान् सर्व्वान् यत्नात्कुर्वीत गुर्विणी ॥ ४२ ॥ बालमङ्के सुखं दध्यान्न चैनं तर्ज्जयेत् क्वचित् । सहसा बोधयेन्नैव नाऽयोग्यमुपवेशयेत् ॥ ४३ ॥ नाकृष्य स्थापयेत्क्रोडे न क्षिप्रं शयने क्षिपेत् । रोदयेन्न क्वचित् कार्य्ये विधिमावश्यकं विना ॥ ४४ ॥ तच्चित्तमनुवर्त्तेत तं सदैवाऽनुमोदयेत् । निम्नोच्चस्थानतश्चाऽपि रक्षेद्बालं प्रयत्नतः ॥४५॥ अभ्यङ्गोद्वर्तनं स्नानं नेत्रयोरञ्जनं तथा । वसनं मृदु यत्तच्च तथा मृद्वनुलेपनम् । जन्मप्रभृति पथ्यानि बालस्यैतानि सर्व्वदा॥४६॥ प्रस्थानाऽभिमुखे पत्यौ नासन्मङ्गलभाषिणी । न वार्य्योऽसौ निषेधोक्त्या न कार्य्यं रोदनं तदा ॥ ४७ ॥ अकृत्त्वोद्वर्त्तनं नित्यं पत्यौ देशान्तरे गते । बन्धुर्जीवनरक्षार्थं कर्म्म कुर्यादनिन्दितम् ॥ ४८ श्वश्रूश्वशुरयोः पार्श्वे निद्रा कार्य्या न चाऽन्यथा । प्रत्यहं पतिवार्त्ता च तयाऽन्वेष्या प्रयत्नतः ॥ ४९ ॥ अप्रक्षालनमङ्गानां मलिनाम्बरधारणम् । तिलकाञ्जनहीनत्वं गन्धमाल्यविवर्ज्जनम् ॥ ॥ ५० ॥ नखरोम्णामसंस्कारो दशनानाममार्ज्जनम् । एवमादि विधातव्यं सत्या प्रोषितकान्तया ॥ ५१ ॥ स्त्रीणां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका॥ ॥ ५२ ॥ मृते भर्तरि या नारी ब्रह्मचर्य्यव्रते स्थिता । सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ॥ ५३ ॥ अनुयाति न भर्तारं यदि दैवात्कथं च न । तत्राऽपि शीलं संरक्ष्यं शीलभङ्गात्पतत्यधः ॥ ५४ ॥ विधवाकबरीबन्धो भर्तृबन्धाय जायते । शि-

१ इति श्रीआयुर्वेदः ।

रसो वपनं कार्य्यं तस्माद्विधवया सदा ॥ ५५ ॥ एकाहारः सदा कार्य्यो न द्वितीयः कदा च न । पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् ॥ ५६ ॥ तस्माद्भूशयनं कार्य्यं पतिसौख्यसमीहया । नैवाङ्गोद्वर्तनं कार्य्यं न ताम्बूलस्य भक्षणम् ॥ ५७ ॥ गन्धद्रव्यस्य संभोगो नैव कार्य्यस्तया क्वचित् । श्वेतवस्त्रं सदा धार्य्यं अन्यथा रौरवं व्रजेत् । इत्येवं नियमैर्युक्ता विधवाऽपि पतिव्रता ॥ ५८ ॥ उभौ नरश्च नारी च कलौ देवि सुदुर्ब्बलौ । कामजन्मवशात्स्यातामक्षमाविन्द्रियग्रहे[२] ॥ ५९ ॥ अतो नियोगः कल्याणि सर्व्वथा परिवर्ज्जयेत् । नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित्[३] ॥ ६० ॥ अयं द्विजैर्हि विद्वद्भिः पशुधर्म्मो विगर्हितः । पारतन्त्र्याद्धि धर्म्मस्य स्त्रियः सर्व्वत्र कर्म्मसु । सम्बन्धस्य च नित्यत्वात्पतिपत्नीशरीरयोः[४] ॥ ६१ ॥ स्थूले सूक्ष्मे शरीरेऽपि न स्त्री स्वातन्त्र्यमर्हति । न वा पत्यौ मृते भूयो नरमन्यं समुद्वहेत् ॥ ६२ ॥ विधवाया विवाहो हि शास्त्रयुक्तिविगर्हितः । धर्म्मनाशकरो यस्मात् हेयः स शुभमिच्छुभिः ॥ ६३ ॥ भर्ता देवो गुरुर्भर्ता धर्म्मतीर्थव्रतानि च । तस्मात्सर्व्वं परित्यज्य पतिमेकं समर्च्चयेत् ॥ ६४ ॥ अनेन नारी वृत्तेन मनोवाग्देहसंयुता । इहाग्र्यां कीर्तिमाप्नोति पतिलोकं परत्र च ॥ ६५ ॥ यतो बीजाङ्कुरोत्पत्तौ तरूणां पुष्टिवर्द्धने । कारणं केवला भूमिर्नाऽन्यदस्तीह कारणम् ॥ ६६ ॥ अतो जगति नाऽत्राऽस्ति मातुर्गुरुतरो जनः । प्राधान्यं प्रकृतेः

---

१ श्रीमत्पूज्यपादभगवतो वेदव्यासस्य । २ श्रीकामधेनुतंत्रम् । ३ श्रीमत्पूज्यपादराजर्षिवर्यस्य मनोः । ४ "स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति" इति श्रुतिः । ५ स्त्रीस्वातंत्र्याभावविज्ञानमिदं यद्येवं न स्यात्तर्हि सर्वा अपि स्त्रियः जन्मांतरेऽपि पतिप्राप्तिकामा न स्युः "संपत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूतां संजानानौ विजिहतामरातीर्दिवि ज्योतिरजरमारभेताम्" इति च श्रुतिः पतिसाहित्येनैव स्वर्गमुपदिशति स्फुटम् । ६ श्रीमत्पूज्यपादमहर्षियाज्ञवल्क्यस्य ।

सिद्धं सृष्टिकार्य्यप्रसारणे ॥ ६७ ॥ पातिव्रत्यमनुष्ठाय मम त्वं सहधर्म्मिणि । स्वर्गं चैवाऽपवर्गं च लभस्व वरवर्णिनि ॥ ६८ ॥ सुतान् संरक्ष सरसां जननीवृत्तिमाश्रिता । गृहनीतिपरा शश्वत्सम्पालय कुटुम्बकम् ॥ ६९ ॥

इति श्रीश्रीमधुसूदनसंहितायां नारीधर्मवर्णनं नाम चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

# धर्म्मविज्ञानवर्णनम् ।

श्रीश्रीमधुसूदन उवाच । सर्व्वजीवहितं धर्म्मं सार्व्वभौमस्वरूपकम् । अद्वैतरूपं वक्ष्यामि तव कल्याणकारणात् ॥ १ ॥ एतद्धि परमं तत्वं सर्व्वज्ञानिसमादृतम् । विलोपमधुना यातं घोरकालप्रभावतः ॥ २ ॥ आचारमूला जातिः स्यादाचारः शास्त्रमूलकः । वेदवाक्यं शास्त्रमूलं वेदः साधकमूलकः[2] ॥३ ॥ क्रियामूलः साधकश्च क्रियाऽपि फलमूलिका । फलमूलं सुखं देवि सुखमानन्दमूलकम्[3] ॥ ४ ॥ आनन्दो ज्ञानमूलश्च ज्ञानं तु ज्ञेयमूलकम् । तत्वमूलं ज्ञेयमात्रं तत्वं हि ब्रह्ममूलकम् ॥ ब्रह्मज्ञानं त्वैक्यमूलमैक्यं स्यात्सर्व्वमूलकम् ॥ ५ ॥ ऐक्यं हि परमेशानभावाऽतीतं सुनिश्चितम् । भावाऽतीतमिदं सर्व्वप्रकाशभावमात्रकम् ॥ ६ ॥ एवमद्वैतभावोऽयमेकः सर्व्वोत्तमः प्रिये । साधनीयोऽवलम्ब्यश्च सर्व्वैः श्रेयोऽभिकाङ्क्षिभिः ॥ ७ ॥ यो हि जानाति धर्मस्य

---

१ शिवसारतंत्रस्थं वचनद्वयम् । २ वैदिकसाधनसंपन्नाः श्रीमहर्षिवर्याः साधकास्त एव वेदद्रष्टारः । ३ प्राकृतिकाप्राकृतिकभेदात्सुखमानंदश्चात्र भिन्नो विवक्षितः । ४ सदाचारानुष्ठानमारभ्य ब्रह्मसद्भावभावनपर्यन्तेषु सर्वकार्येष्वेव विज्ञानविदो विभुं परमात्मानमेकरूपमेव प्रत्यक्षीकुर्वन्ति धर्मविज्ञानस्यैतदेव सर्वव्यापकं स्वरूपम् । वचनचतुष्टयमिदं श्रीराजराजेश्वरतंत्रस्थम् ।

सर्व्वव्यापकतां जनः । वेत्ति सार्वजनीनत्वं स ज्ञानी परमः स्मृतः
॥ ८ ॥सर्व्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु
तज्ज्ञानं विद्धि सात्त्विकम्[1] ॥ ९ ॥ अधुना सम्प्रवक्ष्यामि धर्म्माधर्म्म-
परीक्षणम् । अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं दमश्च
यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१०॥अहिंसा सत्यमक्रोधस्त्यागः
शान्तिरपैशुनम् । दया भूतेष्वलोलुप्त्वं मार्द्दवं ह्रीरचापलम्॥११॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता । भवन्ति सम्पदं
दैवीमभिजातस्य मानिनि ॥ १२॥ दम्भो दर्पोऽभिमानश्च क्रोधः
पारुष्यमेव च । अज्ञानं चाभिजातस्यानघे सम्पदमासुरीम्[2]
॥ १३ ॥ दैवीसंपत्तिसर्वस्वो धर्मः स्याच्छास्त्रसंमतः । विपरीत-
स्त्वधर्मः स्यादासुरैराहृतश्च यः ॥ १४ ॥ ऊर्ध्वं वहति धर्मस्य
स्रोतोऽधर्मस्य चाप्यधः । तस्माद्धर्मे रतिं कुर्य्यात्कृत्वा चैव प्र-
वर्द्धयेत् ॥ १५ ॥ दैवी संपद्विमोक्षाय निबंधायासुरी मता । सु-
खदां संपदं दैवीमभिजाताऽसि वल्लभे[3] ॥ १६ ॥ वेदप्रणिहितं
धर्म्मः कर्म्म[4] तन्मङ्गलं परम् । प्रतिषिद्धक्रियासाध्यः स गुणोऽ
धर्म्म उच्यते[5] ॥१७॥ प्राप्नुवन्ति यतः स्वर्गमोक्षौ धर्म्मपरायणे ।
मानवा मुनिभिर्नूनं स धर्म्म इति कथ्यते[6] ॥ १८ ॥ सत्ववृद्धिकरो
योऽत्र पुरुषार्थोऽस्ति केवलः । धर्म्मशीले तमेवाहुर्धर्म्मं केचि-
न्महर्षयः[7] ॥१९॥ या बिभर्ति जगत्सर्व्वमीश्वरेच्छा ह्यलौकिकी ।
सैव धर्म्मो हि सुभगे नेह कश्च न संशयः ॥ २० ॥ उन्नतिं नि-

१ श्रीमद्भगवद्गीतायां । २ दैवासुरसम्पत्ती इति तु क्लिष्टाक्लिष्टवृत्तीत्यादिकेषु शब्देषु शास्त्रप्रयुक्तेषु यथाक्रमन्देवा अक्लिष्टास्तथाक्लिष्टाऽसुरादयोऽपीति सदैवैकार्थवाचके द्वन्द्वप्रतीतिकरे च भवतः पापकर्मानुष्ठानेन जीवः क्रमशोऽधोगतिं संप्राप्य परिगच्छत्यासुरभावम् पुण्यानुष्ठानेन च देवभावमनुप्रपद्य क्रमशो विज्ञानोन्नतिद्वारेण स्वोत्कर्षं संविधाय च पूर्णतत्वज्ञानस्याधिकारी संपद्यते, कैवल्यपदञ्चान्ते सँल्लभ्य कृतार्थो भवति । ३ श्रीमद्भगवद्गीतायां । ४ धर्मशास्त्रसंमतं लक्षणं । ५ न्यायवैशेषिकविज्ञानसम्मतं । ६ सांख्ययोगविज्ञानसम्मतं । ७ मीमांसात्रयविज्ञानसम्मतं ।

खिला जीवा धर्म्मेणैव क्रमादिह । विद्धानाः सावधाना लभन्तेऽन्ते परं पदम् ॥ २१ ॥ न हि धर्म्माद्दते कश्चिदीश्वरोऽन्योऽस्ति वस्तुतः । पुरुषार्थो हि धर्म्मस्य विभक्तो भवति त्रिधा ॥ २२ ॥ साधनञ्च तपो दानं त्रिभेदं तत्र साधनम् । कर्म्मोपास्तिज्ञानभेदाद्यज्ञस्त्रिविध ईरितः ॥ २३ ॥ प्रकृते यज्ञशब्देन साधनं बोध्यते जनैः । देवानां परमो धर्म्मः सदा यज्ञादिकाः क्रियाः ॥ स्वाध्यायवेदवेत्तृत्वं विष्णुपूजा इति श्रुतिः ॥ २४ ॥ सत्वं रजस्तमइति गुणाः प्रकृतिसम्भवाः । निबध्नन्ति महाप्राज्ञे देहे देहिनमव्ययम् ॥ २५ ॥ सत्वं सुखे सञ्जयति रजः कर्म्मणि शोभने । तमस्तु ज्ञानमावृत्य प्रमादे सञ्जयत्युत ॥ २६ ॥ रजस्तमश्चाभिभूय सत्वमुद्वर्तते प्रिये । रजः सत्वं तमश्चैव तमः सत्वं

---

१ या हि शक्तिर्जीवमज्ञानरूपजडावस्थातः क्रमेण ज्ञानालोकितचैतन्यावस्थायां समानेतुमभिमुखीकरोति सा एव शक्तिर्धर्मशब्देनाभिधीयते । स्वोन्नतिमभिसंपाद्य साधकाः सकामाः स्वर्गादिकं निष्कामाश्च कैवल्यं सँलभंते । अतश्च धर्मः स्वर्गापवर्गयोरुभयोरपि कारणम्प्रवदन्ति। परन्तु मोक्षपदमेव धर्मानुष्ठानस्य मुख्यलक्ष्यतया निर्दिश्यते । धर्मसाधनद्वारेण हि क्रमशः सत्वगुणस्य वृद्धौ चरमे च पूर्णतायां संजातायां जीवा जीवनफलं कैवल्यं समनुभवन्ति । सत्वगुणपूर्णपरिणतौ संजातायामेव त्रिगुणातीता समुदेति कैवल्यरूपिणी मुक्तिसम्पत् । एवं च यदनुष्ठाय क्रमोन्नतिमार्गस्वरूपः सत्वगुणवर्धकः पुरुषार्थश्चैताद्दशः सुखसाधनीभवति तदेव विद्वद्भिर्धर्मनाम्ना निर्दिश्यते । २ धर्मस्वरूपत्वादीश्वरस्य अत एव रामोविग्रहवान्धर्म इति पूज्यपादमहर्षिर्वाल्मीकिः । ३ धर्मसाधनरूपः पुरुषार्थो महर्षिभिर्वेदविद्भिस्त्रिधा विभज्यते साधनधर्मस्तपोधर्मो दानधर्मश्चेति । एतेषु बहिरंतःसम्बन्धभेदाद्दानन्तृतीयस्थानीयमवरं तपश्च द्वितीयस्थानी यम्मध्यमम् साधनन्तु प्रथमस्थानीयं सर्वोत्कृष्टम् । एष एव साधनरूपः प्रथमस्थानीयः श्रेष्ठः पुरुषार्थः पुनस्त्रिधा विभज्यते, तत्र स्वाध्यायरूपो ज्ञानसम्बन्धीयः पुरुषार्थः प्रथमः क्रियायोगोपासनाविविधभेदरूपो द्वितीयः पुरुषार्थश्चोपासनासम्बन्धीयः, नित्यनैमित्तिकयागयज्ञाद्यनुष्ठानरूपश्च कर्म्माधिकारस्तृतीयः पुरुषार्थः । अत एव वेदाः ज्ञानोपसनाकर्मेति त्रिकांडैः संविभक्ताः । अत एव " कस्मिन्नंगे दानं कस्मिन्नंगे तपोस्याधितिष्ठति कस्मिन्नंगे ऋतमस्याध्यापितम् कस्मिन्नंगे सत्यमस्य प्रतिष्ठितम् " इतिश्रुतिः । ४ पूज्यपादश्रीभगवतो वेदव्यासस्य । ५ उक्तभेदत्रयस्य धर्मसाधनस्य त्रिगुणविषयत्वात् श्रीमद्भगवदुपदिष्टं त्रिगुणविज्ञानमाह सत्वमित्यादि ।

रजस्तथा ॥ २७ ॥ सर्व्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्वृद्धिं सत्वस्य धीमति ॥२८॥ लोभः प्रवृत्ति-
रारम्भः कर्म्मणामशमः स्पृहा । रजस्येतानि जायन्ते विवृद्धे त-
त्वविद्वरे ॥ २९ ॥ अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च । तम-
स्येतानि जायन्ते विवृद्धे योगवल्लभे ॥ ३० ॥ न जीवोऽस्ति पृ-
थिव्यां वा दिव्यलोकेषु वा पुनः । यः स्यात्प्रकृतिजैर्हीन एतैः
ख्यातैस्त्रिभिर्गुणै[1]ः ॥ ३१ ॥ नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म्म[2] यत्तत्सात्विकमुच्यते ॥ ३२ ॥ यत्तु कामे-
प्सुना कर्म साहङ्कारेण वा पुनः । क्रियते बहुलायासं तद्राजसमुदा-
हृतम् ॥ ३३ ॥ अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् । मोहादा-
रभ्यते कर्म्म यत्तत्तामसमुच्यते ॥ ३४॥ मुक्तसङ्गोऽनहंवादी धृत्यु-
त्साहसमन्वितः । सिद्ध्यसिद्ध्योर्निर्व्विकारः कर्ता सात्विक उच्य-
ते ॥३५॥ रागी कर्म्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः । हर्षशो-
कान्वितः कर्ता राजसः परिकीर्तितः ॥ ३६ ॥ अयुक्तः प्राकृतः
स्तब्धः शठो नैष्कृतिकोऽलसः । विषादी दीर्घसूत्री च कर्त्ता ता-
मस उच्यते ॥ ३७ ॥ अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इ-
ज्यते । मनो यष्टव्यमेवेति समाधाय स सा[3]त्विकः ॥ ३८ ॥
फलं वा ह्यभिसन्धाय दम्भार्थमपि चैव यत् । इज्यते ज्ञानस-
म्पन्ने तं यज्ञं विद्धि राजसम् ॥ ३९ ॥ विधिहीनमसृष्टान्नं मन्त्र-
हीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ ४० ॥
इत्थं दानस्य तपसो भेदाः कतिपये मताः । देवद्विजगुरुप्राज्ञ

१ सृष्टिक्रिया ह्येषा प्रकृतिकारणा प्रकृतिपरिणामरूपा च । प्रकृतेस्त्रिगुणात्मकत्वादवश्य-मेव प्रकृतिगतायाः सृष्टेरपि त्रिगुणात्मकत्वं भवतीत्यत्र कः सन्देहः वस्तुतस्तु स्थावरजंगमात्मका यावंत एव सृष्टिपदार्थाः सत्वादित्रिगुणपरिणामाधीना जायन्ते, ततश्च त्रिगुणभेदेन धर्मविभागोपि त्रिधैव भवितुमर्हति । २ कर्मोपासनाज्ञानमिति त्रितयमपि व्यापकरूपेण "कर्म" शब्दवाच्यमभिप्रेतम् । ३ अत्र यज्ञशब्देन यागविशेषा नित्यनैमित्तिककाम्यरूपा गृह्या वैतानिकाश्चोच्यंते ।

पूजनं शौचमार्ज्जवम् । ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते ॥ ४१ ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ ४२ ॥ मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत्तपो मानसमुच्यते॥४३॥ श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः । अफलाकाङ्क्षिभिर्युक्तैः सात्विकं परिचक्षते ॥ ४४ ॥ सत्कारमानपूजार्थं तपो दम्भने चैव यत् । क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ ४५ ॥ मूढग्राहेणात्मनो यत्पीडया क्रियते तपः । परस्योत्सादनार्थं वा तत्तामससमुदाहृतम् ॥ ४६ ॥ दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्विकं स्मृतम् ॥४७॥ यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः । दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ ४८ ॥ अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामससमुदाहृतम् ॥ ४९ ॥ यज्ञो दानं तपश्चैव न त्याज्यं कार्य्यमेव तत् । यदेतानि समस्तानि पावनानि मनीषिणाम् ॥ ५० ॥ एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च । कर्त्तव्यानीति मे देवि निश्चितं मतमुत्तमम् ॥ ५१ ॥ अकामस्य क्रिया का चिद्दृश्यते नेह कर्हिचित् । यद्धुद्धा कुरुते किञ्चित् तत्तत्कामस्य[3] चेष्टितम् ॥ ५२ ॥ तेषु सम्यग्वर्त्तमानो

१ "श्रद्धया देयं अश्रद्धयाऽदेयं ह्रिया देयं भिया देयं संविदा देयम् इति " च श्रुतिः ।

२ तत्र तावत्त्रिगुणभेदेनैव दानधर्मस्य त्रैविध्यमुक्तम् यथा हि ज्ञानोपासनाकर्म्मभेदेन साधनधर्मस्य त्रैविध्यं प्रकीर्त्यते, तथा दानधर्म्मस्यापि वेदविदस्त्रिधा विभागमाचक्षन्ते एव चार्थदानं ( विषयभोगसम्बन्धीयम् ), विद्यादानं, अभयदान नाम—दीक्षादानं चेति त्रिधा भवति दानधर्मः ।

३ निष्कामतैव जीवन्मुक्तस्य लक्षणम् । जीवे हि पूर्णतया निष्कामे संवृत्ते तस्य कर्तव्याकर्तव्यसदसत्सुखदुःखस्वर्गनरकादिभिर्द्वन्द्वैः सह निवर्तते सम्बन्धः, स हि धृतशरीरोऽपि मुक्तः संपद्यते । यद्यदेव कर्म जीवन्मुक्तः समाचरति सर्वमेव तत्प्रकृतिस्वभावक्रियमाणमिव भवति । अतश्च सबन्धनरूपात्कामप्रपंचादतीतः सँराजते कामन परिचालित एव स कामी सदैव कर्मभिः सँक्लिश्यते जीवः । कर्मबन्धनागतेन च जीवेन यदेव कर्म समाचर्यते निखिलमेव तत्तस्यकामनापरिस्फुरितमेव ज्ञातव्यम् । इत उत्तरं श्रीमत्पूज्यपादराजर्षिवर्यस्य श्रीमनोः षड्वचनानि ।

गच्छत्यमरलोकताम् । यथासंकल्पितांश्चेह सर्व्वान् कामान्त्सम-
श्नुते ॥ ५३ ॥ वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ ५४ ॥ यः कश्चित्
कस्यचित् धर्म्मो मनुना परिकीर्त्तितः । सर्व्वः सोऽभिहितो
वेदे सर्व्वशास्त्रमयो हि सः ॥ ५५ ॥ वेदः स्मृतिः सदाचारः
स्वस्य च प्रियमात्मनः । एतच्चतुर्व्विधं प्राहुः साक्षाद्धर्म्मस्य
लक्षणम् ॥ ५६ ॥ परमार्थेष्वसक्तानां धर्म्मज्ञानं विधीयते ।
धर्म्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥ ५७ ॥ देव्युवाच ।
श्रुतं त्वत्कृपया नाथ दयामय मयाऽधुना । अपूर्व्वं धर्मविज्ञानं
परमं सार्व्वलौकिकम् ॥ ५८ ॥ कः स्यात्पुरुषकारो मेऽनुष्ठेयः
कश्च वाऽन्यथा । एवं विचारमापन्ना बुद्धिर्मोहयतीव माम् ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥५९॥ श्रीश्रीमधुसू-
दन उवाच । अव्यक्त आत्मा क्षेत्रज्ञः शाश्वतो विभुरव्ययः ।
ज्ञायते ज्ञानसंयोगात्ततो ज्ञानीति कीर्त्यते[3] ॥ ६० ॥ साधकानां
मनः सत्वप्रधानं हितकारकम् । तद्वारैव सुविज्ञानं लभंते सा-
धका जनाः ॥ ६१ ॥ मनो महान् मतिर्ब्रह्मा अन्तःकरणमेव
च । प्रज्ञा संवित् चित्तिर्मेधा पूर्व्बुद्धिस्मृतिचश्चलाः । पर्य्याय-
वाचकाः शब्दा मनसः परिकीर्तिताः ॥ ६२॥ स्थूलः सूक्ष्मोऽपि
देहो वै कार्यकारणरूपतः । एक एव तु विज्ञेयो मनः केन्द्रमिव

---

१ एवं धर्मस्य लक्षणं भेदाश्च विज्ञानसहिता उक्ता इदानीं तस्य धर्मस्य निर्णयो वेदविदां स्मृतिशीलाचारादिभिः कार्य इति च स्मृत्याऽऽह वेद इत्यादि यथा "अथ यदि ते कर्म्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये यत्र ब्राह्मणाः सम्मर्शिनः युक्ता आयुक्ताः अलूक्षाः धर्म्मकामाः स्युः यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः " इति श्रुतिः । २ कौर्मे " विरोधो वाक्ययोर्यत्र नाप्रामाण्यं तदिष्यते । यथा विरुद्धता च स्यात्तथाऽर्थः कल्प्यते तयोः " प्रामाण्यविचारश्चास्य शास्त्रस्य परिशिष्टाध्याये द्रष्टव्यः । ३ धर्म्मरूपत्वात् यथा श्रीमद्भगवद्गीतायां । " ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च " ।

स्थितम् ॥ ६३ ॥ मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम् । संशयो निश्चयो गर्व्वः स्मरणं विषया अमी ॥ ६४ ॥ अतीतानुस्मृतिर्मेधा तत्कालग्राहिणी मतिः । शुभाशुभविचारज्ञा बुद्धिर्धीरैरुदाहृता ॥ ६५ ॥ सत्वादिगुणभेदेन बुद्धेस्त्रैविध्यमीरितम् । गीतायां वासुदेवेनाऽर्जुनायपरिपृच्छते ॥ ६६ ॥ अधर्म्मं धर्म्ममिति या मन्यते तमसावृता । सर्व्वार्थान् विपरीतांश्च बुद्धिः सा देवि तामसी ॥ ६७ ॥ यया धर्म्ममधर्म्मं च कार्य्यञ्चाकार्य्यमेव च । न यथावत् प्रजानाति बुद्धिः सा देवि राजसी ॥ ६८ ॥ प्रवृत्तिश्च निवृत्तिश्च कार्य्याकार्य्ये भयाभये । बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा देवि सात्विकी ॥ ६९ ॥ उत्तमाऽधमभेदेन तद्राज्यं द्विविधं मतम् । योगानुशासनं प्रज्ञा शब्दो बुद्धिः प्रकीर्त्तितः । अन्तर्बहिः प्रकाशाय विज्ञानज्ञानहेतुकम् ॥ ७० ॥ बुद्ध्या यया धारयते मनःप्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या प्रज्ञा सा वै परोच्यते[2] ॥ ७१ ॥ एवमाश्रित्य चोत्कृष्टाम् सात्विकीं बुद्धिमेव च । लप्स्यसे परमां प्रज्ञामभ्रान्ताऽमुत्रलाभदाम् ॥ ७२ ॥ लब्ध्वा चैतां परां प्रज्ञां ज्ञास्यसे देवि माचिरम् । धर्मस्य परमं तत्वं यथा सर्वजनीनताम् ॥ ७३ ॥ अत एव स्थिरलक्ष्या स्थिरध्याना भवानघे । धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः । यत्स्याद्धारणसंयुक्तं स धर्मइति निश्चयः[3] ॥ ७४ ॥ ध-

१ वचनमिदं श्रीज्ञानभाष्यतंत्रस्थं । अनुशासनन्द्विविधम्, शब्दानुशासनं योगानुशासनंचेति । मुनिस्त्रिकालदर्शी श्रीभगवान् पतञ्जलिर्द्विविधमेवानुशासनं व्याचकार । बहिर्जगत्सम्बन्धिनी विचारशक्तिर्ज्ञाननाम्ना विज्ञाननाम्ना, चान्तर्जगत्सम्बधिनी विचारशक्तिः संकथ्यते । बहिर्जगदाधिपत्यम्मनुष्यस्य बुद्धिबलायत्तम् । अन्तर्जगदाधिपत्यन्तु केवलेन योगानुशासनप्रज्ञावलम्बनेन कर्तुं शक्यते । अत एव महर्षिभिः पूर्णज्ञानसम्पन्नानां शुद्धधियां पक्षे योगानुशासनरूपो विज्ञानाधिकार एवं संसाररतानान्तु रजःप्रधानानां पक्षे शब्दानुशासनरूपः शब्दाधिकार एवानुज्ञातः । तामसिकानान्तु अज्ञानान्धजीवानां पक्षे राजाऽनुशासनमपि विधेयतया विवक्षितम् । तच्च शब्दानुशासनान्तर्गतमपि समधिकस्थूलतरविषयकमिति वक्तव्यमेव ।
२ वचनमिदं श्रीकापिलतंत्रस्थम् । ३ पूज्यपादश्रीभगवतो वेदव्यासस्य श्रीमहाभारते ।

र्म्मं यो बाधते धर्म्मो न स धर्म्मः कुधर्म्म तत् । अविरोधी तु यो धर्म्मः स धर्म्मस्तत्वविद्वरे ॥ ७५ ॥

इति श्रीश्रीमधुसूदनसंहितायां धर्म्मविज्ञानवर्णनं नाम पंचमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

# श्री गुरुमाहात्म्य-वर्णनम् ।

श्रुत्वा सुधोपमं वाक्यं मुनिश्रेष्ठस्य धीमतः । पुनः प्राह महाभागा सभामध्ये यशस्विनी ॥ १ ॥ देव्युवाच ॥ जितेन्द्रिय मुनिश्रेष्ठ सर्व्वभूतहिते रत । नमस्ते सद्गुणाधार ! तत्वज्ञानं प्रदेहि मे ॥ २ ॥ केन मार्गेण विचरन् देही ब्रह्ममयो भवेत् । विज्ञापय कृपां कृत्वा नमामि चरणौ तव ॥ ३ ॥ श्रीश्रीमधुसूदन उवाच । "गु" शब्दस्त्वन्धकारः स्याद् "रु" शब्दस्तन्निरोधकः । अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥ ४ ॥ गुकारः प्रथमो वर्णो मायादिगुणभासकः । रुकारो द्वितीयो ब्रह्म मायाभ्रान्तिविमोचकः ॥ ५ ॥ गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः । उ-

---

१ अविद्यान्धकाराऽऽच्छन्नः खलु जीवो भगवत्कृपया ज्ञानचैतन्यस्याधिकारी सम्भूय क्रमश एव स्वोन्नतिं विदधाति । तच्चात्मज्ञानञ्जीवोत्कर्षविधायकं भगवदिच्छयैव संभवति । स एव भगवान् जीवानां ज्ञानदाता जगतां गुरुः । यस्मादेव च भगवच्चिद्विलासरूपात् जीवशरीरात्तस्यैव श्रीभगवतो ज्ञानप्रभा बहिर्व्यक्तिमवाप्य संप्रकाशते तेनैव हि शरीरेण शरीरवान् भवति श्रीगुरुदेवः । कार्यकारणसम्बन्धविचारेण परमात्मा जगद्गुरुः श्रीभगवान् जीवानां यथा ज्ञानोपदेशको दृश्यते गुरुदेवश्च तथैव जीवानां ज्ञानविस्तारे भवति तुल्यसम्बन्धवानेव । "आचार्यदेवो भव" "आचार्यं मां विजानीयात्" इत्यादिश्रुतिः स्मृतिश्च ।

कारः शम्भुरित्युक्तस्त्रितयात्मा गुरुः स्मृतः ॥ ६ ॥ यादृगस्तीह सम्बन्धो ब्रह्माण्डस्येश्वरेण वै । तथा क्रियाख्ययोगस्य सम्बन्धो गुरुणा सह ॥ ७॥ दीक्षाविधावीश्वरो वै कारणस्थलमुच्यते । गुरुः कार्य्यस्थलं चातो गुरुर्ब्रह्म प्रगीयते ॥८॥ स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति । उपनीय ददद्वेदमाचार्य्यः स उदाहृतः ॥ ९॥ आचार्य्यगुरुशब्दौ द्वौ सदा पर्यायवाचकौ । कश्चिदर्थगतो भेदो भवत्येवं तयोः क्वचित् ॥ १० ॥ औपपत्तिकमंशन्तु धर्म्मशास्त्रस्य पण्डितः । व्याचष्टे धर्म्ममिच्छूनां स आचार्य्यः प्रकीर्तितः ॥ ११॥ सर्वदर्शी तु यः साधुर्मुमुक्षूणां हिताय वै । व्याख्याय धर्म्मशास्त्रांशं क्रियासिद्धिप्रबोधकम् ॥ १२ ॥ उपासनाविधेः सम्यगीश्वरस्य परात्मनः । भेदान् प्रशास्ति धर्म्मज्ञः स गुरुः समुदाहृतः ॥ १३ ॥ सप्तानां ज्ञानभूमीनां शास्त्रोक्तानां विशेषतः । प्रभेदान् यो विजानाति निगमस्यागमस्य च ॥ १४ ॥ ज्ञानस्य चाधिकारांस्त्रीन् भावतात्पर्यलक्ष्यतः । तन्त्रेषु च पुराणेषु भाषायास्त्रिविधां स्मृतिं ॥ १५ ॥ सम्यग्भेदैर्विजानाति भाषातत्वविशारदः । निपुणो लोकशिक्षायां श्रेष्ठाचार्य्यः स उच्यते ॥ १६ ॥ पञ्चतत्वविभेदज्ञः

---

१ श्रीगुरुगीतायाम् । २ श्रीगुरुमाहात्म्यविज्ञानम् । ३ श्रीमत्पूज्यपादमहर्षियाज्ञवल्क्यस्य । ४ सप्त ज्ञानभूमयो हि सप्तसु दर्शनशास्त्रेषु प्रसिद्धाः । एतेषां विवरणविशेषो योगभेदाध्याये राजयोगप्रकरणस्य टिप्पण्यां द्रष्टव्यः । ५ ज्ञानाधिकारस्य त्रैविध्यं यथा,– " आधिभौतिकः– आधिदैविकः– आध्यात्मिकश्चेति । " यथा श्रीमद्भगवद्गीताष्टमाध्याये सृष्टिविज्ञानवर्णनप्रस्तावे स्वभावस्याध्यात्मत्वमीश्वरस्याधिदैवत्वं तथा क्षरस्याधिभौतिकत्वमुक्तमेवं सर्वत्र निगमागमेषु प्रस्तुतप्रस्तावेषु वाच्यलक्ष्यव्यंग्यतात्पर्यरूपवृत्तिचतुष्टयात्मरूपशब्दैर्भावादिविविच्य संशयाँछेत्तुं समर्थइतिभावः । ६ परकीयलौकिकसमाधिसम्बन्धीयभेदात् भाषायास्त्रैविध्यन्द्रष्टव्यम् । समाधिप्रज्ञाद्वारायमर्थं वर्णयितुं या भाषांगीक्रियते सा समाधिभाषा; यथा श्रीमद्भगवतो गीताभाषा । लौकिकरूपेण वर्णनं भगवद्भावं धर्मादिजिज्ञासा वा यया वर्ण्यते सा लौकिकी; यथा श्रीश्रीरासपंचाध्यायी । परकृतिपुराकल्परूपार्थवादात्मकोपाख्यानादिना धर्मादितत्ववर्णनाय या भाषा तंत्रपुराणादिषु दृश्यते सा परकीयभाषा; यथा सतीधर्मतत्वनिर्णयाय सत्यवान्सावित्र्युपाख्यानम् । एतद्विस्तरस्तु श्रीभारद्वाजपुराणसंहितायां द्रष्टव्यः । ७ पंचतत्वानां भेदानुसारतो वैष्णवशाक्तादयःपंचविधोपासकाः प्रसिद्धाः । सगुणोपासनाध्याये प्रकृतार्थस्य विस्तरो द्रष्टव्यः ।

पञ्चभेदां विशेषतः। सगुणोपासनां यस्तु सम्यग् जानाति कोविदः॥ १७॥ चतुष्टयेन भेदेन ब्रह्मणः समुपासनाम्। गम्भीरार्थां विजानीते बुधो निर्म्मलमानसः॥ १८॥ सर्व्वकार्य्येषु निपुणो जीवन्मुक्तस्त्रितापहृत्। करोति जीवकल्याणं गुरुः श्रेष्ठः स कथ्यते॥ १९॥ सर्व्वशास्त्रपरो दक्षः सर्व्वशास्त्रार्थवित्सदा। सुवचाः सुन्दरः स्वङ्गः कुलीनः शुभदर्शनः॥ २०॥ जितेन्द्रियः सत्यवादी ब्राह्मणः शान्तमानसः। पितृमातृहिते युक्तः सर्व्वकर्मपरायणः॥ आश्रमी देशवासी च गुरुरेवं विधीयते॥ २१॥ गुरुर्ब्रह्म स्वयं साक्षात्सेव्यो वन्द्यो मुमुक्षुभिः। नोद्वेजनीय एवायं कृतज्ञेन विवेकिना॥ २२॥ यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः। मनसा कर्म्मणा वाचा श्रुतेरेवैष निश्चयः॥ २३॥ भावाऽद्वैतं सदाकुर्य्यात्क्रियाऽद्वैतं न कर्हिचित्। अद्वैतं त्रिषु लोकेषु नाद्वैतं गुरुणां सह॥ २४॥ अखंडमंडलाकारं व्याप्तं येन चराचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥ २५॥ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥ २६॥ अनेकजन्मसम्प्राप्तकर्म्मबन्धविदाहिने। आत्मज्ञानप्रदानेन तस्मै श्रीगुरवे नमः॥ २७॥ निष्फला हि विना दीक्षां जपपूजादिकाः क्रियाः। अतो दीक्षा प्रथमतः स्वीकार्या सततं बुधैः॥२८॥ दिव्यं ज्ञानं यतो दद्यात्कुर्य्यात्पापस्य संक्षयम्। तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः॥ २९॥

---

१ मन्त्रहठलयराजभेदाच्चतुर्विधा योगाः।योगभेदाध्याये योगचतुष्टयस्य लक्षणादि द्रष्टव्यम्। २ यद्यपि गुरुदेवो जगद्गुरोः श्रीभगवतः प्रतिनिधिस्वरूपत्वेन साक्षादिष्टदेव इव माननीयस्तथापि गुरुदीक्षाग्रहणात्प्राक् शिष्येण स्वीकर्तव्यगुरुनिष्ठगुणादयोऽवश्यमेव विचारणीयाः। मनुष्यैर्हि विमृश्यकारिभिर्भवितव्यमिति श्रीभगवता तेषु पुरुषार्थविषयकः कर्तव्यभारः समर्पितः। अत एव दीक्षाग्रहणात्प्रागवश्यमेव दीक्षाप्रार्थिभिः सदसद्विचारः कर्तव्यः। तन्त्रशास्त्रेषु सद्गुरुसमुचिता गुणसमूहा यथोल्लिखिताः सम्यगेव वर्णिताः। अत एव " आचार्य्याधीनो भवान्यत्राधर्म्माचरणात्। " इति श्रुतिः। ३ गुरुर्ब्रह्मेत्यादिवचनत्रयं श्रीमत्पूज्यपादशंकराचार्यभगवतः। ४ श्रीगुरुगीतायाम्।

दीक्षामूलं जपः सर्व्वो दीक्षामूलं परं तपः । दीक्षामाश्रित्य निवसे-
द्यत्र कुत्राश्रमे वसेत् ॥ ३० ॥ अदीक्षिता ये कुर्व्वन्ति जपपूजा-
दिकाः क्रियाः । न फलन्ति क्रियास्तेषां शिलायामुप्तबीजवत्
॥३१॥ देवि दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः । तस्मात्सर्व्व-
प्रयत्नेन गुरुणा दीक्षितो भवेत् ॥३२॥ अदीक्षिते हि मरणे रौरवं
नरकं व्रजेत् । अदीक्षितस्य मरणे पिशाचत्वं न मुञ्चति । तस्मा-
द्दीक्षां प्रयत्नेन गृह्णीत गुरुणा जनः ॥३३॥ देव्युवाच । मोक्षगर्भं
क्रियायोगं भक्तिज्ञानस्य कारणम् । योगतत्वञ्च योगेश भुक्तिमु-
क्तिविधायकम् ॥ ३४॥इदानीं श्रोतुमिच्छामि संसारार्णवतारणम् ।
तत्वतो ब्रूहि मे नाथ कृपां कुरु मयि प्रभो ॥ ३५ ॥ श्रीश्रीमधु-
सूदन उवाच ॥ सत्यं केचित्प्रशंसन्ति तपः शौचं तथापरे । क्षमां
केचित्प्रशंसान्ति तथैव शममार्ज्जवम् ॥ ३६ ॥ केचिद्दानं प्रशं-
सन्ति पितृकर्म्म तथापरे । केचित्कर्म्म प्रशंसन्ति केचिद्वैरा-
ग्यमुत्तमम् ॥ ३७ ॥ केचिद्गृहस्थकर्म्माणि प्रशंसन्ति विचक्षणाः ।
अग्निहोत्रादिकं कर्म्म तथा केचित्परं विदुः ॥ ३८ ॥ अहिंसां
हि प्रशंसन्ति केचित्तीर्थानुसेवनम् । एवं बहूनुपायांस्तु प्रवदन्ति
विमुक्तये ॥ ३९ ॥ संसारोत्तरणे युक्तिर्योगशब्देन कथ्यते ।
ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः ॥ ४० ॥ आ-
लोक्य सर्व्वशास्त्राणि विचार्य्य च पुनः पुनः । इदमेकं सुनि-
ष्पन्नं योगशास्त्रमतं तथा[3] ॥ ४१ ॥ यस्मिन् याति सर्व्वमिदं जातं

१ विना सदुपदेशान्नास्ति कश्चिदुपायो जीवानां स्वोत्कर्षसम्पादनस्य । अविद्याबहुले हि जगति स्वत एवावश्यंभाव्यविद्याप्राधान्यम् । विनोपदेशेन भगवज्ज्योतिःस्वरूपेण न कदापि जीवः समर्थः स्वोन्नतिं सम्पादयितुम् । यदि हि पितरौ बन्धवो वा शिशोर्बोधोदयकाले शब्दाद्युपदेशद्वारेण न तस्य ज्ञानोन्नतिं विदधति तदा मनुष्यस्वभावसुलभं लोकसामान्यमपि ज्ञानञ्च तस्य शिशोः संजायते इति सर्वजनविदितम् । पितरौ शास्त्राध्यापकाश्च शिक्षागुरुपदवाच्या भवन्ति, क्रियायोगोपदेशकश्चाध्यात्मिकज्ञानोन्नतिहेतुर्दीक्षागुरुनाम्नाभिधीयते । विना हि दीक्षाग्रहणं सर्वमेव साधनमसाधनमिव भवति । अतएव " आचार्य्यवान् पुरुषो वेद " । इति श्रुतिः । २ श्रीराजराजेश्वरतंत्रस्थमिदं सर्वं वर्णनम् । ३ श्रीशिवसंहितायाम् ।

यस्मिन्निदं जगत् । तत्प्राप्त्यै साधनं कार्य्यं किमन्यच्छास्त्रभाषितम् ॥ ४२ ॥ योगशास्त्रमिदं गोप्यमस्माभिः परिभाषितम् । सद्भक्ताय प्रदातव्यं भुवनेऽस्मिन्महात्मने ॥ ४३ ॥ योगांस्त्रीन्संप्रवक्ष्यामि नृणां श्रेयोविधित्सया । ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्र चित् ॥ ४४ ॥ ज्ञाने कर्मणि वा यस्य स्वतो धीः प्रीतिमावहेत् । तदनुष्ठानतस्तस्य क्रमान्मुक्तिर्न संशयः ॥ ४५ ॥ परं तूभययोरेव जीवातुर्भक्तिरुत्तमा । तस्मात्सा सर्वदा सर्वैरनुष्ठेया मुमुक्षुभिः ॥ ४६ ॥ तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् । शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥ ४७ ॥ तत्र भागवतान्धर्म्माञ्छिक्षेद्गुर्वात्मदैवतः । अमाययानुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः ॥ ४८ ॥ सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु । दयां मैत्रीं प्रश्रयं च मौनं स्वाध्यायमार्जवम् । ब्रह्मचर्य्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥ ४९ ॥ सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् । विविक्तचीरवसनं संतोषं येन केन चित्

१ वेदानां सांगानां कर्मोपासनाज्ञानपरत्वमिति सर्वसंमतं तदनुसारेणाधिकारश्च त्रैविध्यं भजते वेदद्रष्टृभिरपि मुनिभिस्त्रिरूपाणि शास्त्राणि प्रणीतानि ततोऽपि श्रीमत्पूज्यपादभगवान् कृष्णद्वैपायनः स्फुटतरमिदमेव तात्पर्यं पुराणैरितिहासेन चाविश्चकार तत्र प्राचुर्येण कर्मयोगविधायकं श्रीमन्महाभारतम् प्रणयतिस्म तथोपासनानां ( यो यच्छ्रद्धः स एव सः ) इत्युक्तेरधिकारिणां प्रतीकालंबनश्रद्धावैचित्र्यमवरुध्याथर्वादिषु ताद्रूप्यमवमृश्य शिवलिंगस्कंदपुराणादिषु श्रीशंकरनामकपरब्रह्मणस्तथा विष्णुपद्ममत्स्यपुराणादिषु श्रीविष्णुनामकपरब्रह्मणस्तथा श्रीदेवीभागवतमार्कंडेयकालिकापुराणादिषु श्रीशक्तिनामकपरब्रह्मणस्तथा श्रीगणेशब्रह्मवैवर्तगणेशखंडपुराणादिषु श्रीगणेशनामकपरब्रह्मणस्तथादित्यपुराणादिषु श्रीसवितृनामकपरब्रह्मणो माहात्म्यातिशयवर्णनादिना प्रकृतोपासनायाः पंचविधतां प्राधान्येन प्रकटीचकार । श्रीमत्पूज्यपादः भगवान्वाल्मीकिरपि महारामायणे योगवासिष्ठे ज्ञानमेव सांगोपांगं प्राधान्येन वर्णयतिस्म। एवं सर्वोपि स महर्षिसंघः सर्वेषामधिकारिणां परमकल्याणसिद्ध्यर्थमधिकारभेदं ज्ञात्वा प्रमाणजातमनादिपरंपराप्राप्तमेव बहिः प्रकटीचकारेति रहस्यं विज्ञाय मात्सर्यमुत्सार्य साम्यं भजंतु सुधियः । २ अतएव " क्षरं प्रधानममृताक्षरं हरः क्षरात्मनाविशते देव एकः " ॥ " एको वशी सर्वभूतान्तरात्मा एकं रूपम्बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् " ॥ इत्यादि श्रुतिः ॥

॥ ५० ॥ श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि । मनोवाक्कर्मदण्डं च सत्यं शमदमावपि ॥ ५१ ॥ श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः । जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥५२॥ इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ॥ दारान्सुतान्गृहान्प्राणान्यत्परस्मै निवेदनम् ॥ ५३ ॥ एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् । परिचर्यां चोभयत्र महत्सु नृषु साधुषु॥५४॥ परस्परानुकथनं पावनं भगवद्यशः । मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥ ५५ ॥ स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् । भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम्॥५६॥ क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दन्ति वदन्त्य लौकिकाः । नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः ॥ ५७ ॥ इति भागवतान्धर्माञ्छिक्षन्भक्त्या तदुत्थया । नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥ ५८ ॥

इति श्रीश्रीमधुसूदनसंहितायां गुरुमाहात्म्यवर्णनं नाम षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः ।

# सगुणोपासनावर्णनम् ।

श्रीश्रीमधुसूदन उवाच । लोकेऽस्मिन्द्विविधा निष्ठा शुभा प्रोक्ता मयानघे । ज्ञानयोगेन सांख्यानां कर्म्मयोगेन योगिनाम् ॥ १ ॥ क्रियाया ज्ञानतो भेदाद्योगशास्त्रं द्विधा मतम् । अधुना

---

१ श्रीमत्पूज्यपादभगवान्वेदव्यासप्रणीतश्रीमद्भागवते । अतएव "सा परानुरक्तिरीश्वरे" इति श्रीमत्पूज्यपादमहर्षिशाण्डिल्यभक्तिदर्शने । २ श्रीभगवद्वाक्यं गीतायाम् ।

कथयिष्यामि क्रियायोगं सुदुर्लभम् ॥ २ ॥ वेदानामागमानाञ्च तन्त्राणाञ्च विशेषतः । सारमुद्धृत्य कल्याणि तवाग्रे कथ्यते मया ॥ ३ ॥ कृते विश्वहिते देवि विश्वेशः तत्वविद्वरे । प्रीतो भवति विश्वात्मा यतो विश्वं तदाश्रितम् ॥ ४ ॥ स एक एव सद्रूपः सत्योऽद्वैतः परात्परः । स्वप्रकाशः सदा पूर्णः सच्चिदानन्दलक्षणः ॥ ५ ॥ निर्विकारो निराधारो निर्विशेषो निराकुलः । गुणातीतः सर्व्वसाक्षी सर्व्वात्मा सर्व्वदृग्विभुः ॥ ६ ॥ गूढः सर्व्वेषु भूतेषु सर्व्वव्यापी सनातनः । सर्व्वेन्द्रियगुणाभासः सर्व्वेन्द्रियविवर्जितः ॥ ७ ॥ लोकातीतो लोकहेतुरवाङ्मनसगोचरः । स वेत्ति विश्वं सर्व्वज्ञस्तं न जानाति कश्चन ॥८॥ तदधीनं जगत्सर्व्वं त्रैलोक्यं सचराचरम् । तदालम्बनतस्तिष्ठेदवितर्क्यमिदं जगत् ॥९॥ तत्सत्यतामुपाश्रित्य सद्वद्भाति पृथक् पृथक् । तेनैव हेतुभूतेन सर्व्वे जाता वयं शुभे ॥ १० ॥ कारणं सर्व्वभूतानां स एकः परमेश्वरः । लोकानां सृष्टिकरणात्स्रष्टा ब्रह्मेति गीयते ॥ ११ ॥ विष्णुः पालयिता शम्भुः संहर्ता च तदिच्छया । इन्द्रादयो लोकपालाः सर्व्वे तद्वशवर्त्तिनः ॥ १२ ॥ स्वे स्वेऽधिकारे निरतास्ते शासति तदाज्ञया ॥ १३ ॥ तेनान्तर्य्यामिरूपेण तत्तद्विषययोजिताः । स्वस्वकर्म्म प्रकुर्व्वन्ति न स्वतन्त्राः कदाचन ॥ १४ ॥ द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः संति न संति यदुपेक्षया ॥ १५ ॥ यद्भयाद्वाति वातोऽपि सूर्य्यस्तपति यद्भयात् । वर्षन्ति तोयदाः काले पुष्प्यन्ति तरवो वने ॥ १६ ॥ कालं कालयते काले मृत्योर्मृत्युर्भियो भ-

---

१ मनुष्याणां स्वभावसिद्धमास्ति वृत्तिद्वयम् । एका तु वृत्तिस्तत्र कर्मपक्षपातिनी, ज्ञानपक्षपातिनीचापरा भवति । ज्ञानपक्षपातिनः खलु साधकाः कर्मजातं सर्वं गौणमित्यभिचिन्त्य ज्ञानमेव लक्ष्यीकुर्वन्ति, कर्मपक्षपातिनस्तु कर्मैव मुख्यलक्ष्यतया समनुतिष्ठन्ति ।

२ अस्मिन्नध्याये खलु सगुणपंचदेवमयसगुणब्रह्मोपासनाप्रकारः नानापुराणवाक्यैस्तथा महानिर्वाणादितंत्रवचनैः संगृह्यते ।

यम् । वेदान्तवेद्यो भगवान्यत्तच्छब्दोपलक्षितः ॥ १७ ॥ सर्व्वे देवाश्च देव्यश्च तन्मयाःकुलवन्दिते । आब्रह्मस्तम्बपर्य्यन्तं तन्मयं सकलं जगत् ॥ १८ ॥ तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत् । तदाराधनतो देवि सर्व्वेषां प्रीणनं भवेत् ॥ १९ ॥ तरोर्मूलाभिषेकेण यथा तद्भुजपल्लवाः । तृप्यन्ति तदनुष्ठानात्तथा सर्व्वेऽमरादयः ॥२०॥ तस्यैवोपासनां देवि क्रियायोगं विदुर्बुधाः । श्रद्धया विधिवत्सम्यक् सावधानः समाचरेत् ॥ २१ ॥ उपासना च योगश्च साधनश्चेति च त्रयम् । क्रियायोगपरं सर्वं सदा पर्यायवाचकम् ॥ २२ ॥ उपासनाया योगस्य न भेदो विद्यते क्वचित् । योगोपासनयोर्भेदं मृषा जल्पति मंदधीः ॥ २३ ॥ साकारा च निराकारा द्विधैवोपासना स्मृता । ज्ञानस्य द्विविधौ भेदौ प्रवर्त्तकनिवर्त्तकौ ॥ २४ ॥ निराकारात्समुत्पन्नं साकारं सकलं जगत् । तत्साकारं समाश्रित्य ध्याने भवति तन्मयम्॥२५॥ तत्वाद्ब्रह्माण्डमुत्पन्नं तत्वेन परिवर्त्तते । तत्वेन लीयते देवि तत्वाद्ब्रह्माण्डनिर्णयः ॥ २६ ॥ शिवः सूर्य्यो गणेशश्च विष्णुः शक्तिर्यथाक्रमम् । सगुणोपासनायाश्च देवताः पञ्च कीर्त्तिताः[३] २७ उपासनानां पञ्चानां[४] पञ्चतत्वविवेकतः । निर्णयो मुनिभिः पूर्वं

१ सगुणोपासनया जीवः सालोक्यादिकां प्राकृतिकीं मुक्तिं सँल्लभते, निर्गुणब्रह्मोपासनया तु मुक्तिमप्राकृतिकीं संप्राप्य कृतार्थो भवति । अतएव सगुणोपासना प्रवृत्तिकारिणी, ब्रह्मोपासना तु निवृत्तिकारिणी भवतीत्युक्तम् । निष्कामा येऽधिकारिणस्तैर्यदि सगुणाप्युपासना क्रियते चेद्भवत्येव सा निवृत्तिकारिणीत्यपि ज्ञेयम् । २ अतएव " यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ " " तस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व्वम् ॥ " " उपासनानि सगुणब्रह्मविषयमानसव्यापाराणि " इत्यादि श्रुतिः । ३ शिवसारतंत्रम् । ४ परिदृश्यमानमिदं विश्वं पंचभूतेभ्य एव समुत्पन्नम् । अतएव कस्य चिदपि तत्वानामेकतमस्य प्राधान्यात् साधकानामन्तःकरणमाकाशादिपंचतत्वान्यतमप्रधानम्भवति । एतदेव खलु वैज्ञानिकसत्यत्वमवलोक्य महर्षयो विश्वमान्याः सूर्यादिपंचदेवताधिष्ठितपंचोपासनाविधिमनुजज्ञिरे । अतएव कापिलतंत्रे " आकाशस्याधिपो विष्णुरग्नीनां च महेश्वरी । वायोः सूर्यः क्षितेरीशो जीवनस्य गणाधिपः " इति ।

कृतः सूक्ष्मार्थदर्शिभिः ॥ २८ ॥ वेदप्रामाण्यतश्चैव तथा युक्ति-
विचारतः। सिद्धः स सर्व्वथा देवि सर्व्वकल्याणकारकः ॥२९॥
विरोधो दृश्यते योऽसौ सम्प्रदायवतामिह। अज्ञानजोऽयं हेतुर्वै
दुर्गतेर्नात्र संशयः ॥ ३० ॥ त्यक्त्वा वितर्कशीलानां मतमज्ञान-
हेतुकम्। सगुणोपासनाभेदमात्मज्ञानाय वच्मि ते ॥ ३१ ॥ उ-
द्यत्कोटिदिवाकराभमनिशं शंखं गदां पंकजम् चक्रं बिभ्रतमि-
न्दिरावसुमतीसंशोभि पार्श्वद्वयम्। कोटीराङ्गदहारकुण्डलधरं
पीताम्बरं कौस्तुभोद्दीप्तं विश्वधरं स्ववक्षसि लसत् श्रीवत्सचिन्हं
भजे ॥ ३२ ॥ प्रकृतेः पर एवान्यः स नरः पञ्चविंशकः। तस्ये-
मानि च भूतानि तेन नारायणः स्मृतः ॥ ३३ ॥ भास्वद्रत्ना-
ढ्यमौलिः स्फुरदधररुचा रञ्जितश्चारुकेशो भास्वान्यो दिव्यतेजाः
करकमलयुतः स्वर्णवर्णः प्रभाभिः। विश्वाकाशावकाशे ग्रहग-
णसहितो भाति यश्चोदयाद्रौ सर्व्वानन्दप्रदाता हरिहरहृदयः
पातु मां विश्वचक्षुः ॥ ३४ ॥ सविता सर्व्वभूतानां सर्व्वान् भावान्
प्रसूयते। सवनात् पावनाच्चैव सविता तेन चोच्यते ॥ ३५ ॥ सिं-
हस्था शशिशेखरा मरकतप्रख्या चतुर्भिर्भुजैः शंङ्खं चक्रधनुः-
शरांश्च दधती नेत्रैस्त्रिभिः शोभिता। आमुक्ताङ्गदहारकङ्कणरण-
त्काञ्चीक्वणन्नूपुरा दुर्गा दुर्गतिहारिणी भवतु नो रत्नोल्लसत्कु-
ण्डला ॥ ३६ ॥ विपत्तिवाचको दुर्गश्चाकारो नाशवाचकः। तां
ननाश पुरा तेन बुधैर्दुर्गा प्रकीर्तिता ॥ ३७ ॥ उद्यदादित्यसंका-
शां पुस्तकाक्षकरां स्मरेत्। कृष्णाजिनधरां ब्राह्मीं ध्यायेत्तार-
किते़ऽम्बरे ॥ ३८ ॥ श्यामवर्णां चतुर्बाहुं शङ्खचक्रलसत्कराम्।

१ "विष्णोर्नु कं वीर्याणि प्रवोचं" इति ऋगादिश्रुतयः। २ "सूर्य आत्मा जगतस्त-स्थुषश्च" इत्यादिश्रुतिः। अतएव "तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः। तदेव शुक्रन्तद्ब्रह्म ता आपः स प्रजापतिः॥" इति यजुर्वेदीयसर्वमेधप्रकरणे। ३ विपत्तिस्त्रितापाः। "तामग्निवर्णां०" "दुर्गां देवीं शरणमहं प्रपद्ये०" "हिरण्यवर्णां०" "प्रणो देवी सरस्वती०" "गौरीर्मिमाय०" इत्याद्याः श्रुतयः।

गदापद्मधरां देवीं सूर्य्यासनकृताश्रयाम् ॥ ३९ ॥ सायाह्ने वरदां देवीं गायत्रीं संस्मरेद्यतः। शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम् ॥ ४० ॥ त्रिनेत्रां वरदां पाशं शूलञ्च नृकरोटिकाम्। सूर्य्यमण्डलमध्यस्थां ध्यायन् देवीं समभ्यसेत् ॥ ४१ ॥ या देवी सर्व्वभूतेषु विद्यारूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ४२ ॥ खर्व्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरम् प्रस्यन्दन्मदगन्धलुब्धमधुपव्यालोलगण्डस्थलम्। दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरम् वन्दे शैलसुतासुतं गणपतिं सिद्धिप्रदं कर्म्मसु ॥ ४३ ॥ गुणत्रयस्येश्वरोऽतितत्वो व्यक्तः सुनिर्म्मलः। गणानामीश्वरो यस्मात्तस्माद्गणेश्वरो मतः ॥ ४४ ॥ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसम् रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्। पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानम् विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥ ४५ ॥ ब्रह्मादीनां सुराणाञ्च मुनीनां ब्रह्मवादिनाम्। तेषां महत्वाद्देवोऽयं महादेवः प्रकीर्तितः ॥ ४६ ॥ महता पूजिता विश्वे मूलप्रकृतिरीश्वरी। तस्यादेवः पूजितश्च महादेवस्ततः स्मृतः ॥ ४७ ॥ देवपञ्चकमित्याहुरेकं देवं सुधीवराः। एकमेव परं ब्रह्म परमात्मपराभिधम् ॥ ४८ ॥ प्रकृतेश्चाधिकारस्यानुकूलं प्रत्यगात्मनि। सर्व्वेषां साधकानां वै स्वस्वप्रज्ञाप्रकल्पितम् ॥ ४९ ॥ तदेव सगुणं ब्रह्म पञ्चमूर्त्तिमयं कृतम्। पूज्यते ध्यायते चैव भक्तैर्भक्तिरसार्द्रितैः ॥ ५० ॥ सनातनस्य धर्मस्य सत्यस्यास्य सनातनम्। सगुणोपासनाकृत्ये विज्ञानं परमाद्भुतम्[३] ॥ ५१ ॥ चि-

१ " गणानां त्वा गणपतिं हवामहे० " " निषुसीद गणपते० " इत्याद्याः श्रुतयः।
२ " त्र्यंबकं यजामहे० " " यो भूतानामधिपती रुद्रस्तं तिचर " इत्याद्याः श्रुतयः।
३ " एकं सद्विप्रा बहुधा वदंति० " सुपर्णं विप्राः कवयो वचोभिरेकं संतं बहुधा कल्पयंति " इत्याद्याः श्रुतयः।

न्मयस्याप्रमेयस्य निर्गुणस्याशरीरिणः । साधकानां हितार्थाय ब्रह्मणो रूपकल्पना ॥ ५२ ॥ अरूपं रूपिणं कृत्वा क्रियायोग-रता नराः । ब्रह्मज्ञानामृतानन्दपराः सुकृतिनो नराः ॥ ५३ ॥ अभेदो नामरूपाणां नामात्परतरं न हि । तस्मान्निरन्तरं देवि नामसंस्मरणं चरेत् ॥ ५४ ॥ ज्ञानात्कोटिगुणं स्तोत्रं स्तोत्रा-त्कोटिगुणो जपः । जपात्कोटिगुणं गानं गानात्परतरं न हि[1] ॥ ५५ ॥ रहस्यं सर्व्ववेदानां तवाग्रे कथ्यते मया । [2]अजपां नाम गायत्रीं जपन्ति निखिला जनाः ॥ ५६ ॥ गायत्रीं ब्राह्मणाः सर्वे जपन्ति हृदयान्तरे । महिमानं न जानन्ति मायाया वैभवं महत् ॥ ५७ ॥ आत्ममंत्रो बीजमंत्रो मन्त्रश्चाजपसंज्ञकः । मननात् त्रा-यते यस्मात् तस्मात् मंत्रः प्रकीर्त्तितः ॥ ५८ ॥ ध्यानमूलं त्विष्टमू-

---

१ " मार्गो देशी च गानस्य प्रकारौ द्वावुदीरितौ " । पूज्यपाददेवर्षिर्नारदः । " गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते " । सङ्गीतरत्नाकरः । " दोलायां शायितो बालो रुद-न्नास्ते यदा क्वचित् । तदा गीतामृतं पीत्वा हर्षोत्कर्षं प्रपद्यते ॥ क्रुद्धो विषं वमन्तसर्पः फणा-मान्दोलयन्मुहुः । गानं जांगलिकाच्छ्रुत्वा हर्षोत्कर्षं प्रपद्यते ॥ मृगः सोऽपि तृणाहारो विचरन्नटवीं सदा । लुब्धकादपि संगीतं श्रुत्वा प्राणान्प्रयच्छति " इति सङ्गीतमहिमा सङ्गीतपारिजाते । अतएव सामवेदो गानप्रधानः स्वगांधर्वोपवेदेन सह ( गायंति यं सामगाः ) क्रतुष्वपि स्तोम-नाम्ना तद्गायकोद्गात्रा सुशिक्षितेन गीयते । श्रीभगवता चात एव ( वेदानां सामवेदोऽस्मीति ) स एव वेदविभूतित्वेन स्वस्वरूपतया वर्णितः "मद्भक्ता यत्र गायंति तत्र तिष्ठामि नारद " इति भगवद्वाक्यमन्यत्र । याज्ञवल्क्येनापि भगवता तृतीयेध्याये गानस्य परब्रह्मप्राप्तिसाधनत्व-मुक्तम् । " यथाविधानेन पठन्साम गायमविच्युतम् । सावधानस्तदभ्यासात्परं ब्रह्माधिग-च्छति ॥ अपरांतकमुल्लोप्यं मद्रकं मकरीं तथा । औवेणकं सरोबिन्दुमुत्तरं गीतकानि च ॥ ऋग्गाथा पाणिका दक्षविहिता ब्रह्मगीतिका गेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम् ॥ वी-णावादनतत्वज्ञः श्रुतिजातिविशारदः । तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥ गीतज्ञो यदि योगेन नाप्नोति परमं पदम् । रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥ अत्र ज्ञानादित्यस्य नाममाहात्म्यज्ञानादित्यर्थः । स्तोत्रं विष्णुसहस्रनामादिरूपं । जपश्च केवलनामजपः गानं च भगवद्गानं न तु ग्राम्यगीतमिति यथायथं ज्ञेयम् । २ अजपाजपविषयस्तु योगचतुष्टयांतर्गत-लययोगसंहितायां द्रष्टव्यः । रहस्यत्वाद्गुरूपदेशैकगम्यत्वान्न साधारण्येनात्र विवेचितः ।

र्त्तिः पूजामूलं स्वयं मनः । मन्त्रमूलं गुरोर्वाक्यं मोक्षमूलं हरेः कृपा ॥ ५९ ॥ उत्तमो मानसो यागो मध्यमं बहिरर्च्चनम् । मूलमन्त्रं समुच्चार्य्य पश्चाद्वियमुदीरयेत् ॥ ६० ॥ सम्प्रदानं तदन्ते तु त्यागार्थकपदं ततः । एवं क्रमेण सद्वृत्ते! उपचारान् प्रकल्पयेत् ॥ ६१ ॥ लिङ्गस्थण्डिलवन्ह्यम्बुयन्त्रकुडचपटेषु च । मण्डले विशिखे मूर्ध्नि हृदि वा दश कीर्त्तिताः ॥ ६२ ॥ एषु स्थानेषु कल्याणि यजन्ति परमं शिवम् । अरूपं रूपिणं कृत्वा कर्म्मकाण्डरता नराः ॥ ६३ ॥ गवां सर्व्वाङ्गजं क्षीरं स्रवेत्स्तनमुखाद्यथा। तथा सर्व्वाग्रतो देवः प्रतिमादिषु राजते ॥ ६४ ॥ आभिरूप्याच्च बिम्बस्य पूजायाश्च विशेषतः । साधकस्य च विश्वासाद्देवतासन्निधिर्भवेत् ॥ ६५ ॥ यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात् । एवं योगरतं चेतः आत्मानमविकारयत् ॥ ६६ ॥ युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः । सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ ६७ ॥ अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् ॥ श्रुतानुभावं शरणं व्रज भावेन भामिनि ॥ ६८ ॥ नारायणे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं

---

१ मन्त्रविज्ञानविषयेषु साधकानां सदसद्विचारशक्तिरेव नास्ति । शिष्यस्योपासनाधिकारं बीजमन्त्रोपयोगिनीं प्रकृतिञ्च परिज्ञाय श्रीगुरुदेव एव तस्मै बीजमन्त्रमिष्टम्प्रददाति । अतएव श्रीमद्गुरुदेवमुखपद्मविनिःसृतं वाक्यामृतमेव मूलमन्त्रस्वरूपतया सम्माननीयम् । २ यन्त्रं तु कृत्रिमाकृत्रिमभेदेन द्विविधं । शालग्रामशिलादिकं तत्र अकृत्रिमं यन्त्रम् शालग्रामादौ च सर्वा एव देवताः पूज्यन्ते । घटमाश्रित्य जले देवपूजनन्तुल्यमेव स्मर्यते । ३ श्रीहंसमाहेश्वरतंत्रम् । ४ ब्रह्मणो रूपं ब्रह्मवेत्तृभिः कार्यब्रह्म कारणब्रह्मेति द्विधा परिकीर्त्यते । गुणातीतं निःसंगं सच्चिदानंदरूपमेव ब्रह्म कारणब्रह्मतया समुच्यते, त्रिगुणात्मकं ब्रह्माण्डरूपञ्च विश्वं कार्यब्रह्मतया परिणिगद्यते । कार्यब्रह्म कारणब्रह्मेति कार्यकारणविचारेण द्विधा परिचिन्त्यमानमपि तद्ब्रह्मरूपं तत्ततो द्वैधरहितं । नामरूपस्थित्यवस्थायामात्मस्वरूपे नामरूपभावापन्नेपि तयोर्नामरूपयोः स्वत एव विलयावस्थायामेकमेव सच्चिदानन्दरूपमद्वैतस्वरूप समवशिष्यते । सगुणसाकारोपासनासु स्वेष्टदेवमूर्तिमयरूपस्य बीजमन्त्रमयशब्दरूपिणो नाम्नश्च साहाय्येन साधकस्यान्तःकरणमात्मसत्यस्वरूपपरिज्ञानोन्मुखं भवति, चरमे च नामरूपभेदसंपरित्यागेन शुद्धाद्वैतस्वरूपे विलयं गच्छति ॥

ज्ञानञ्च यदहैतुकम् ॥ ६९ ॥ तद्गुणश्रुतिमात्रेण तस्मिन् सर्वगुहाशये। मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥ ७० ॥ लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्। अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥ ७१ ॥ सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना तत्सेवनं जनाः ॥ ७२ ॥ तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम्। तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुजम् ॥ ७३ ॥

इति श्रीश्रीमधुसूदनसंहितायां सगुणोपासनावर्णनं नाम सप्तमोऽध्यायः।

---

## अष्टमोऽध्यायः।

# ब्रह्मोपासनावर्णनम्।

श्रीश्रीमधुसूदन उवाच। तव स्नेहेन वक्ष्यामि तत्त्वं साधु प्रियं शृणु। यज्ज्ञात्वा परमं श्रेय इह चामुत्र चाप्स्यसि ॥ १ ॥ समाधेर्निर्विकल्पस्य ब्रह्मो[1]पासनया मतः। सम्बन्धोऽतीव नेदिष्ठो वर्त्तते योगजः सदा ॥ २ ॥ सगुणोपास[2]ना गौणी गीयते ज्ञानको-

---

१ बृहत्वात् अपरिछिन्नरूपब्रह्मात्मकत्वात् बृंहणत्वात् वेदादीनां कारणत्वात् आविर्भावकर्तृत्वादिति यावत् इति ब्रह्मशब्दार्थः। २ उपासनायोगमारूढस्य सोपानरूपत्वात्तस्याः। ब्रह्मभावना चेयं महानिर्वाणतंत्रतः सर्वाऽपि संगृहीता। ब्रह्मोपासनाविस्तरश्च दशोपनिषत्सु "तत्त्वमस्यहं ब्रह्मास्मि" इत्यादिद्वादशमहावाक्योपदेशादिरूपः सर्वजनप्रसिद्ध एव अतएव "श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः। चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदिताधि। इति शुश्रुम पूर्व्वेषां ये नस्तद्व्याचचक्षिरे ॥ यद्वाचानभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ यन्मनसा न मनुते येनाहुर्मनो मतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ इत्यादि श्रुतिः।

विदैः । निर्गुणा तु परा मुख्या वर्ण्यते ब्रह्मभावना ॥ ३ ॥ ज्ञेयं भवति तद्ब्रह्म सच्चिद्विश्वमयं परम् । यथातथा स्वरूपेण लक्षणैर्वा शुचिव्रते ॥ ४ ॥ सत्तामात्रं निर्विशेषमवाङ्मनसगोचरम् । असत्रिलोकी सद्भावं स्वरूपं ब्रह्मणः स्मृतम् ॥ ५ ॥ समाधियोगैस्तद्वेद्यं सर्वत्र समदृष्टिभिः । द्वंद्वातीतैर्निर्विकल्पैर्देहात्माध्यासवर्जितैः ॥ ६ ॥ यतो विश्वं समुद्भूतं येन जातञ्च तिष्ठति । यस्मिन् सर्व्वाणि लीयन्ते ज्ञेयं तद्ब्रह्म लक्षणैः ॥ ७ ॥ स्वरूपबुद्ध्या यद्वेद्यं तद्वेद्यं लक्षणैः प्रिये । लक्षणैराप्तुमिच्छूनां विहितं तत्र साधनम् ॥ ८ ॥ तत्साधनं प्रवक्ष्यामि शृणु सावहिता प्रिये । तत्रादौ कथयिष्यामि मन्त्रोद्धारं महेशितुः ॥ ९ ॥ प्रणवं पूर्वमुद्धृत्य 'सच्चित्' पदमुदाहरेत् । एकं पदान्ते ब्रह्मेति मन्त्रोद्धारः प्रकीर्तितः ॥ १० ॥ सन्धिक्रमेण मिलितः सप्तवर्णो मनुर्मतः । तारहीनेन सुभगे षड्वर्णोऽयं मनुर्भवेत् ॥ ११ ॥ सर्व्वमन्त्रोत्तमः साक्षाद्धर्म्मार्थकाममोक्षदः । नात्र सिद्धाद्यपेक्षास्ति नारिमित्रादिदूषणम् ॥ १२ ॥ न तिथिर्न च नक्षत्रं न राशिगणनं तथा । कुलाकुलादिनियमो न संस्कारोऽत्र विद्यते । सर्व्वथा सिद्धमन्त्रोऽयं नात्र कार्य्या विचारणा ॥ १३ ॥ बहुजन्मार्ज्जितैः पुण्यैः सद्गुरुर्यदि लभ्यते । तदा तद्वक्त्रतो लब्ध्वा जन्मसाफल्यमाप्नुयात् ॥ १४ ॥ चतुर्व्वर्गं करे कृत्वा परत्रेह च मोदते । स धन्यः स कृतार्थश्च स कृती स च धार्म्मिकः । स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ॥ १५ ॥ सर्व्वशास्त्रेषु निष्णातः सर्व्वलोकप्रतिष्ठितः । यस्य कर्णपथोपान्तप्राप्तो मन्त्रमहामणिः ॥ १६ ॥ धन्या माता पिता तस्य पवित्रं

१ ब्रह्मस्वरूपलक्षणाधिकारे न ह्युपासकोपास्यभावः सम्भवति । अत एवोपासनासु नास्ति प्रयोजनं स्वरूपलक्षणभावाधिकारिणः । तटस्थलक्षणभावाधिकारिणस्तु ब्रह्मसाक्षात्कारेपि मनसि कश्चित्सम्बन्धोऽवशिष्यत एव । अत एव तटस्थलक्षणावस्थायां ब्रह्मोपासनाविधिः शास्त्रेषु विधीयते । अत एव " अत्र देवा ब्रह्मविदो ब्रह्म ज्येष्ठमुपासते । यो वै तान् विद्यात् प्रत्यक्षं स ब्रह्मवेदिता स्यात् ॥ " इतिश्रुतिः ।

तत्कुलं प्रिये । पितरस्तस्य सन्तुष्टा मोदन्ते त्रिदशैः सह ॥१७॥ मन्त्रार्थं मन्त्रचैतन्यं यो न जानाति साधकः । शतलक्षप्रजप्तोऽपि तस्य मन्त्रो न सिध्यति ॥ १८ ॥ अतोऽस्यार्थश्च चैतन्यं कथयामि शृणु प्रिये । अकारेण जगत्पाता संहर्त्ता स्यादुकारतः । मकारेण जगत्स्रष्टा प्रणवार्थ उदाहृतः॥१९॥ सच्छब्देन सदा स्थायि चिच्चैतन्यं प्रकीर्तितम् । एकमद्वैतमेवैतद्बृहत्त्वाद्ब्रह्म गीयते ॥ २० ॥ मन्त्रार्थः कथितो देवि साधकाभीष्टसिद्धिदः ॥ २१ ॥ मन्त्रचैतन्यमेतद्धि तदधिष्ठातृदेवता । तज्ज्ञानं भक्तमात्राणां सिद्धिदं तत्वविद्विदुरे ! ॥ २२ ॥ चैतन्यं तदधिष्ठातृ सर्व्वव्यापि सनातनम् । अवितर्क्यं निराकारं वाचातीतं निरञ्जनम् ॥ २३ ॥ ऋषिः सदाशिवो ह्यस्य छन्दोऽनुष्टुबुदाहृतम् । देवता परमं ब्रह्म सर्व्वान्तर्य्यामि निर्गुणम् ॥ २४ ॥ चतुर्व्वर्गफलावाप्त्यै विनियोगः प्रकीर्त्तितः ॥ २५ ॥ ततो ध्यानं प्रकुर्व्वीत साधकाभीष्टसाधनम् ॥ २६ ॥ हृदयकमलमध्ये निर्व्विशेषं निरीहं हरिहरविधिवेद्यं योगिभिर्ध्यानगम्यम् । जननमरणभीतिभ्रंशि सच्चित्स्वरूपम् सकलभुवनबीजं ब्रह्म चैतन्यमीडे ॥ २७॥ ध्यात्वैवं परमं ब्रह्म मानसैरुपचारकैः । पूजयेत्परया भक्त्या ब्रह्मसायुज्यहेतवे ॥२८॥ गन्धं दद्यान्महीतत्वं पुष्पमाकाशमेव च । धूपं दद्याद्वायुतत्वं दीपं तेजः समर्पयेत् ॥ २९ ॥ नैवेद्यं तोयत-

---

१ "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्व्वीत ॥ मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः आकाशात्मा सर्व्वकर्म्मा सर्व्वकामः सर्व्वगन्धः सर्व्वरसः सर्व्वमिदमभ्यात्तोऽवाक्यनादरः ॥ एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामकतन्डुलाद्वा एष म आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः ॥ सर्व्वकर्म्मा सर्व्वकामः सर्व्वगन्धः सर्व्वरसः सर्व्वमिदमभ्यात्तोऽवाक्यनादरः एष स आत्मान्तर्हृदय एतद्ब्रह्मैतमितः प्रेताभिसम्भवितास्मीति यस्य स्याद्वा न विचिकित्साऽस्तीति च स्माह शाण्डिल्यः॥"इत्यादि श्रुतिः । छान्दोग्योपनिषच्छाण्डिल्यविद्या।

त्वेन प्रदद्यात्परमात्मने । ततो जप्त्वा महामन्त्रं मनसा साधकोत्तमः ॥ समर्प्य ब्रह्मणे पश्चाद्बहिः पूजां समाचरेत् ॥ ३० ॥ उपस्थितानि द्रव्याणि गन्धपुष्पादिकानि च । वस्त्रालङ्करणादीनि भक्ष्यपेयानि यानि च ॥ ३१ ॥ मन्त्रेणानेन संशोध्य ध्यात्वा ब्रह्म सनातनम् । निर्मील्य नेत्रे मतिमानर्पयेत्परमात्मने ॥ ३२॥ " ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना " ॥ ३३ ॥ ततो नेत्रे समुन्मील्य जप्त्वा मूलं स्वशक्तितः । तज्जपं ब्रह्मसात्कृत्वा स्तोत्रञ्च कवचं पठेत् ॥ ३४ ॥ स्तोत्रं शृणु महाप्राज्ञे ब्रह्मणः परमात्मनः । यच्छ्रुत्वा साधको देवि ब्रह्मसायुज्यमश्नुते ॥ ३५ ॥ ओं नमस्ते सते सर्व्वलोकाश्रयाय नमस्ते चिते विश्वरूपात्मकाय । नमोऽद्वैततत्वाय मुक्तिप्रदाय नमो ब्रह्मणे व्यापिने निर्गुणाय ॥ ३६ ॥ त्वमेकं शरण्यं त्वमेकं वरेण्यं त्वमेकं जगत्कारणं विश्वरूपम् । त्वमेकं जगत्कर्तृ पातृ प्रहर्तृ त्वमेकं परं निश्चलं निर्व्विकल्पम् ॥ ३७ ॥ भयानां भयं भीषणं भीषणानां गतिः प्राणिनां पावनं पावनानाम् । महोच्चैःपदानां नियन्तृ त्वमेकं परेषां परं रक्षकं रक्षकाणाम् ॥ ३८ ॥ परेश प्रभो सर्व्वरूपाविनाशिन्न निर्द्देश्य सर्व्वेन्द्रियागम्य सत्य । अचिन्त्याक्षर व्यापकाव्यक्ततत्त्व जगद्भासकाधीश पायादपायात् ॥ ३९ ॥ तदेकं स्मरामस्तदेकं जपामस्तदेकं जगत्साक्षिरूपं नमामः । तदेकं निधानं निरालम्बमीशं भवाम्बोधिपोतं शरण्यं व्रजामः ॥ ४० ॥ वाचिकं कायिकं वापि मानसं वा यथामति । आराधने परेशस्य भावशुद्धिर्विधीयते ॥ ४१ ॥ एवं सम्पूज्य मतिमान्स्वजनैर्बान्धवैः सह । महाप्र-

१ अत एव "ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्व्वभूतेषु गूढम् । विश्वस्यैकं परिवेष्टितारं ईशं तं ज्ञात्वाऽमृता भवन्ति " " वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाविद्यतेऽयनाय ।" इत्यादि श्रुतिः ।

सादं स्वीकुर्य्याद्ब्रह्मणः परमात्मनः ॥ ४२ ॥ पूजने परमेशस्य नावाहनविसर्ज्जने । सर्व्वत्र सर्व्वकालेषु साधयेद्ब्रह्मसाधनम् ॥४३॥ अस्नातो वा कृतस्नानो भुक्तो वाऽपि बुभुक्षितः। पूजयेत्परमात्मानं सदा निर्म्मलमानसः ॥ ४४॥ अनेन ब्रह्ममन्त्रेण भक्ष्यपेयादिकञ्च यत् । दीयते परमेशाय तदेव पावनं महत् ॥ ४५ ॥ गङ्गातोये शिलादौ च स्पृष्टदोषोऽपि वर्त्तते । परब्रह्मार्पिते द्रव्ये स्पृष्टास्पृष्टं न विद्यते ॥ ४६ ॥ एतद्धर्म्मानुचारी स्यात्सत्यवादी जितेन्द्रियः । परोपकारनिरतो ब्रह्मचारी सदाशयः ॥ ४७ ॥ मात्सर्य्यहीनोऽदम्भी च दयावाञ्छुद्धमानसः । मातापित्रोः प्रीतिकारी तयोः सेवनतत्परः ॥ ४८ ॥ ब्रह्म श्रोता ब्रह्म मन्ता ब्रह्मान्वेषणमानसः । यतात्मा दृढबुद्धिः स्यात्साक्षाद्ब्रह्मेति भावयन् ॥ ४९ ॥ न मिथ्या भाषणं कुर्य्यान्न परानिष्टचिन्तनम् । विषये मननं चैव ब्रह्ममन्त्री विवर्ज्जयेत् ॥ ५० ॥ तत्सदिति वदेद्देवि प्रारम्भे सर्व्वकर्म्मणाम् । ब्रह्मार्पणमस्तु वाक्यं पानभोजनकर्म्मणोः ॥ ५१ ॥ येनोपायेन मर्त्यानां लोकयात्रा प्रसिध्यति । तदेव कार्य्यं ब्रह्मज्ञैरेष धर्म्मः सनातनः ॥ ५२ ॥ आत्मचिन्ताविनोदेन शौचक्रीडनकेन च । सर्व्वभूतसमत्वेन योगः सिध्यति नान्यथा ॥ ५३ ॥ यश्चात्मनि रतो नित्यमात्मक्रीडस्तथैव च । आत्मनिष्ठश्च सततमात्मन्येव स्वभावतः ॥५४॥रतश्चैव

१ शालग्रामादिकं भगवद्विग्रहादिकं वा । २ सर्वेषामेव लोकानां सगुणोपासनाधिकारसम्भवात् शास्त्रग्रन्थेषु सनातनेषु सगुणोपासनाविधेरतिविस्तरेणोपदेशो दृश्यते । ब्रह्मोपासनायान्तु केवलमवाप्तज्ञानोत्कर्षाणामेव मनुष्याणामधिकारः सम्भवति। तेषामेवोपकारार्थं लक्षणसमूहाः पूर्वोक्ताः परिवर्णिताः सर्वकार्यानुष्ठानात्सर्वभावोपलब्धिकरणा च प्राक् ब्रह्मोपासकस्य पक्षे तत्सदिति मन्त्रोच्चारणविधिर्विधेयतया शास्त्रेषु निर्दिश्यते । परन्तु केवलं मुखजातं मन्त्रशब्दोच्चारणमेव नैव भवति फलप्रदम् । मन्त्रोच्चारणसमये साधकस्यान्तःकरणवृत्तौ च सर्वदा सर्वत्रैव तत्सदितिमन्त्रप्रतिपाद्यब्रह्मभावाभिमुखिन्यामेव सत्यां साधकस्तत्त्वेन ब्रह्मोपासनायां भवत्यधिकारी ॥

स्वयं तुष्टः सन्तुष्टेनान्यमानसः। आत्मन्येव सुतृप्तोऽसौ योगस्तस्य प्रसिध्यति ॥ ५५ ॥ सुप्तोऽपि योगयुक्तः स्याज्जाग्रच्चापि विशेषतः। ईदृक्चेष्टः स्मृतः श्रेष्ठो गरिष्ठो ब्रह्मवादिनाम् ॥ ५६॥

इति श्रीश्रीमधुसूदनसंहितायां ब्रह्मोपासनावर्णनं नाम अष्टमोऽध्यायः।

---

## नवमोऽध्यायः।

# योगभेद-वर्णनम्।

देव्युवाच। योगीश्वर पते योगिन् सर्व्वशास्त्रविशारद। विस्तरेण श्रुतं त्वत्तः क्रियायोगसुकौशलम् ॥ १ ॥ येनोपायेन विचरन् देही ब्रह्ममयो भवेत्। इदानीं श्रोतुमिच्छामि योगभेदं तमुत्तमम् ॥ २ ॥ श्रीश्रीमधुसूदन उवाच। मन्त्रयोगो लयश्चैव राजयोगो हठस्तथा। योगश्चतुर्विधः प्रोक्तो योगिभिस्तत्त्वदर्शिभिः ॥ ३ ॥ कार्य्यं यत्र विभाव्यते किमपि तत् स्पन्देन सव्यापकम् स्पन्दश्चापि तथा जगत्सुविदितः शब्दान्वयी सर्व्वदा। सृष्टिश्चैव तथादिमाकृतिविशेषत्वादभूत्स्पन्दिनी शब्दश्चाविरभूत्तदा प्रणव इत्योङ्काररूपः शिवः ॥ ४ ॥ साम्यस्थप्रकृतेर्यथैव विदितः शब्दो महानोमिति ब्रह्मादित्रितयात्मकस्य परमं रूपं

---

१ तन्त्रसमूहेषु संहितासमूहेषु चार्षेषु योगसाधनचतुष्टयमत्रोल्लिखितमविभक्तरूपेण वर्णितन्दृश्यते। पुरा काले संविभक्ततया प्रदर्शनस्य योगानां प्रयोजनाभाव एवासीत् इति तत्र हेतुः। वर्तमानदेशकालपात्रानुसारेण तु लोककल्याणार्थं ग्रन्थकारेण पृथग्विभक्ततया प्रदर्शितस्य तस्यैव योगचतुष्टयस्य स्वप्रणीतमंत्रयोगसंहिता, हठयोगसंहिता, लययोगसंहिता, राजयोगसंहिताख्य ग्रन्थेषु विस्तृतं विवरणन्द्रष्टव्यम्। अयं च श्लोकः पूज्यपादश्रीयोगियाज्ञवल्क्यमहर्षेः।

शिवं ब्रह्मणः । वैषम्ये प्रकृतेस्तथैव बहुधा शब्दाः श्रुताः कालतस्ते मन्त्राः समुपासनार्थमभवन् बीजानि नाम्ना तथा ॥ ५ ॥ जगति भवति सृष्टिः पञ्चभूतात्मिका यत्तदिह निखिलसृष्टिः पञ्चभागै र्विभक्ता । श्रुतिरपि विधिरूपेणादिशन्तीह पञ्च विविधविहितपूजारीतिभेदान् जनानाम् ॥ ६ ॥ प्रकृतिमिहजनानां सम्परीक्ष्य प्रवृत्तिं गुरुरिह यदि दद्यान्मन्त्रशिक्षां यथावत् । रुचिसमुचितदेवोपासनामादिशेद्वा व्रजति लघु स शिष्यो मोहपारं मुमुक्षुः ॥ ७ ॥ आकारो न हि विद्यते किमपि वा रूपं परब्रह्मणः रूपन्तत्परिकल्प्यते बुधगणैः किम्वा जगद्रूपिणः । ध्यायद्भिर्निजवृत्तिमार्गचलितैर्देवं परं रूपिणम्मन्त्रं वा सततं जपद्भिरिह तैर्मुक्तिः परा लभ्यते ॥ ८ ॥ नभसोऽधिपतिर्विष्णुरग्नेश्चैव महेश्वरी । वायोः सूर्य्यः क्षितेरीशो जीवनस्य गणाधिपः[2] ॥ ९ ॥ मन्त्रार्थं मन्त्रचैतन्यं सिद्धमन्त्रं विशेषतः । अनुकूलं देवभावं गुरुवाक्येन लभ्यते॥१०॥दिक्शुद्धिः स्थानशुद्धिश्च वपुषश्चासनस्य च । शुद्धिश्चान्तरशुद्धिश्च पञ्चैताः शुद्धयः स्मृताः[3]॥११॥ [4]आसनावाहने मुद्रा न्यासो यागोऽप्यथापरः । हवनं मार्ज्जनं चैव तर्पणं बलिरेव च ॥ १२ ॥ पूजा चापि जपश्चापि अथ ध्यानं तथापरम् । लयावृत्त्यादयो ह्येते साधने नियमा मताः ॥ १३ ॥ योगोऽयं परिकथ्यते क्रमयुतः सन्मन्त्रयोगः स्थिरो योगः कर्म्मसु कौशलं निगदितः शास्त्रेषु विद्वद्वरैः । ध्यायन् रूपविवर्जितस्य निखिलाधारस्य रूपं शुभं देही भक्तिरतः प्रयाति परमां मुक्तिं शिवोपासकः[5] ॥१४॥ शोधनं दृढता चैव स्थैर्य्यं धर्यश्च लाघवम् ।

१ ग्रंथकारप्रणीतमंत्रयोगसंहितास्थलक्षणपद्यान्येतानि । २ श्रीकापिलतंत्रस्थं वचनम् । ३ शुद्धयश्चैता योगसारार्णवतंत्रस्थाः । ४ आसनादि १३ नियमाः क्रियासारवारिधितंत्रोक्ताः । ५ एतदेव मन्त्रयोगस्य संक्षिप्तं विवरणम् । अत एव " प्राणानां संक्लिप्त्यै मन्त्राः संकल्पन्ते मन्त्राणां संक्लृप्त्यै कर्माणि संकल्पन्ते " " मननात्त्रायते मंत्रः " " मंत्रयोगे ध्याने उपासना च " "मन्त्रोऽयं वाचकः " " सर्वेषामेव मन्त्राणाम् " इत्यादि श्रुतिः ।

प्रत्यक्षञ्च निर्लिप्तञ्च हठस्य सप्तसाधनम् ॥ १५ ॥ षट्कर्म्मणा शोधनञ्च आसनेन भवेद्दृढम् । मुद्रया स्थिरता चैव प्रत्याहारेण धीरता ॥ १६ ॥ प्राणायामाल्लाघवञ्च ध्यानात्प्रत्यक्षमात्मनः । समाधिना निर्लिप्तञ्च मुक्तिरेव न संशयः ॥ १७ ॥ धौतिर्बस्तिस्तथा नेतिर्लौलिकी त्राटकं तथा । कपालभातिश्चैतानि षट् कर्म्माणि समाचरेत् ॥ १८ ॥ सिद्धं पद्मं तथा भद्रं मुक्तं वज्रं च स्वस्तिकम् । सिंहञ्च गोमुखं वीरं धनुरासनमेव च ॥ १९ ॥ मृतं गुप्तं तथा मात्स्यं मत्स्येन्द्रासनमेव च । गोरक्षं पश्चिमोत्तानमुत्कटं सङ्कटन्तथा ॥ २० ॥ मायूरं कुक्कुटं कूर्म्मं तथा चोत्तानकूर्म्मकम् । उत्तानमण्डकं वृक्षं मण्डुकं गरुडं वृषम् ॥ २१ ॥ शलभं मकरं चोष्ट्रं भुजङ्गं योगनामकम् । द्वात्रिंशदासनानीह हठे सिद्धिप्रदानि वै ॥ २२ ॥ सहितः सूर्य्यभेदश्च उज्जायी शीतली तथा । भस्त्रिका भ्रामरी मूर्च्छा केवली चाष्ट कुम्भकाः[2] ॥ २३ ॥ महामुद्रा नभोमुद्रा उड्डीयानं जलन्धरम् । मूलबन्धं महाबन्धं महावेधश्च खेचरी ॥ २४॥ विपरीतकरी योनिर्वज्ज्रोली शक्तिचालिनी । ताडागी माण्डुकी मुद्रा शाम्भवी पञ्चधारणा ॥ २५ ॥ अश्विनी पाशिनी काकी मातङ्गी च भुजङ्गिनी । पञ्चविंशति मुद्राश्च सिद्धिदाश्चेह योगिनाम् ॥ २६ ॥ प्राणापानौ नादबिन्दू जीवात्मपरमेश्वरौ । मिलित्वा घटते यस्मात्तस्माद्वै घट उच्यते ॥२७॥ आमकुम्भमिवाम्भस्थो जीर्य्यमाणस्सदा घटः । योगानलेन संदह्य घटशुद्धिं समाचरेत् ॥ २८ ॥ शरीरं द्विविधं प्रोक्तं स्थूलं सूक्ष्मं पृथक् स्मृतम् । स्थूलसाधनमुख्यन्तु हठयोगं बुधा विदुः ॥ २९ ॥ अभ्यासात्कादिवर्णानां यथाशास्त्राणि बोधयेत् । हठयोगं[3] समा-

---

१ श्रीघेरण्डसंहितावचनानीमानि । २ कुंभकाः हठयोगप्राणायामभेदाः । ३ एषैव हठयोगस्य स्थूला विवृत्तिः। इदं च वचनद्वयं विशेषलक्षणात्मकं श्रीमत्पूज्यचरणमहर्षिभारद्वाजस्य । अत एव "हठाच्चेतसो जयम्" "हठेन लभ्यते शान्तिः" इत्यादि श्रुतिः ।

साध्य तत्वज्ञानं हि लभ्यते ॥ ३० ॥ बिन्दुः शिवो रजः शक्तिरुभयोर्मेलनात्स्वयम् । सुप्रभूतानि जायन्ते स्वशक्त्या जडरूपया ॥ ३१ ॥ देहेऽस्मिन्वर्ण्यते मेरुः सप्तद्वीपसमन्वितः । सरितः सागराः शैलाः क्षेत्राणि क्षेत्रपालकाः ॥ ३२ ॥ ऋषयो मुनयः सर्व्वे नक्षत्राणि ग्रहास्तथा । पुण्यतीर्थानि पीठानि वर्त्तन्ते पीठदेवताः ॥ ३३ ॥ सृष्टिसंहारकर्त्तारौ भ्रमन्तौ शशिभास्करौ । नभो वायुश्च वह्निश्च जलं पृथ्वी तथैव च ॥ ३४ ॥ त्रैलोक्ये यानि भूतानि तानि सर्व्वाणि देहतः । समष्टिव्यष्टिरूपेण ब्रह्माण्डः पिण्ड उच्यते ॥ ३५ ॥ मेरुं संवेष्ट्य सर्व्वत्र व्यवहारः प्रवर्त्तते । जानाति यः सर्व्वमिदं स योगी नात्र संशयः ॥ ३६ ॥ गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः । चतुरङ्गुलविस्तारमाधारं वर्त्तते समम् ॥३७॥ तस्मिन्नाधारपाथोजे कर्णिका शोभिता तु या । त्रिकोणा वर्त्तते योनिः सर्व्वतन्त्रेषु गोपिता ॥ ३८ ॥ तत्र विद्युल्लताकारा कुण्डली परदेवता । सार्द्धत्रिकारा कुटिला सुषुम्नामार्गसंस्थिता ॥ ३९ ॥ जगत्संसृष्टिरूपा सा निर्म्माणे सततोद्यता । वाचां वाचा च वाग्देवी सदा देवैर्नमस्कृता ॥ ४० ॥ षट्चक्रं षोडशाधारं द्विलक्ष्यं व्योमपञ्चकम् । स्वदेहे ये न जानन्ति कथं सिध्यन्ति योगिनः ॥ ४१ ॥ इडापिङ्गलयोर्मध्ये सुषुम्ना या भवेत्खलु । षट्स्थाने चैव षट् शक्तिं षट्चक्रं योगिनो विदुः ॥४२॥ षट्चक्रपरिभेदेन कुण्डलिनीलयो भवेत् । यदा विज्ञायतेऽखण्डज्ञानरूपी निरञ्जनः॥४३॥ उद्घाटयेत्कपाटं तु यथा कुञ्चिकया लयात् । कुण्डलिन्या तथा योगी मोक्षद्वारं विभेदयेत् ॥ ४४ ॥ द्विदलोर्द्ध्वं दिव्यरूपं सहस्रारं सरोरुहम् । ब्रह्माण्डाख्यस्य देहस्य बाह्ये तिष्ठति मुक्तिदम् ॥४५॥ कैलासो नाम तत्रैव महेशो यत्र तिष्ठति । नकुलाख्यो विलासी च क्षयवृद्धिविवर्जितः ॥ ४६ ॥ अत्र कुण्डलिनीशक्तिर्लयं याति कुलाभिधा । तदा चतुर्विधा सृष्टिर्लीयते परमात्मनि॥४७॥

येन मार्गेण गन्तव्यं ब्रह्मस्थानं निरामयम् । मुक्तिप्रदं मोक्षद्वारं ब्रह्मरन्ध्रं तदुच्यते ॥ ४८ ॥ कन्दोर्द्ध्वे कुण्डली शक्तिः सुप्ता मोक्षाय योगिनाम् । बन्धाय च विमूढानां यस्तां वेत्ति स योगवित् ॥ ४९ ॥ शिवे शक्तिर्लयं याति लययोगो भवेद्ध्रुवम् । सा शक्तिश्चालिता येन स मुक्तो नात्र संशयः ॥ ५० ॥ मन्त्रो हठो लयो राजो योगोऽयं मुक्तिदः क्रमात् । राजत्वात्सर्व्वयोगानां राजयोग इति [२]स्मृतः ॥ ५१ ॥ नादबिन्दुसहस्राणि जीवकोटिशतानि च । सर्व्वश्च भस्मनिर्भूतं यत्र देवो निरञ्जनः ॥५२॥ अहं ब्रह्मेति नियतो मोक्षहेतुर्महात्मनाम् । दृश्यन्ते दृशि रूपाणि गगनं भाति नि[३]र्म्मलम् ॥ ५३ ॥ सकलं निष्कलं सूक्ष्मं मोक्षद्वारविनिर्गतम् । अहमित्यक्षरं ब्रह्म परमं विष्णुमव्ययम्॥५४॥ "अहमेकमिदं सर्व्वं" इति पश्येत्परं सुखम् । दृश्यते तत्खगाकारं खगाकारं विचिन्तयेत्॥५५॥राजन्तं दीप्यमानं तं परमात्मानमव्ययम् । प्रापयेद्देहिनां यस्तु [४]राजयोगः स कीर्त्तितः ॥५६॥ यथा धर्म्मो हि व-

१ लययोगस्यैतदेव सारतो व्याख्यानम् । तंत्रेषु श्रीमद्भगवतः शिवस्य तथा श्रीमद्भगवतो दत्तात्रेयस्येमानि वचनानि लब्धानि अत एव " तस्मिन्नेव लयं यान्ति " । " ते लयं यान्ति तत्रैव " इत्यादि कु०श्रु० । २ ज्ञानभाष्यतंत्रम् । ३ श्रीमद्भगवतो वेदव्यासस्येमानि वचनानि । अत एव " यथैव विश्वं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधान्तम् । तद्वात्मतत्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ॥ यदात्मतत्वेन तु ब्रह्मतत्वं दीपोपमेनेह युक्तः प्रपश्येत् । अजं ध्रुवं सर्व्वतत्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्व्वपाशैः"॥इत्यादि श्रुतिः ॥ ४ राजयोगस्य संक्षिप्ता विवृतिः प्रदर्श्यते अत एव " राजविद्या राजगुह्यं " इत्यादि श्रुतिः । साधकानां प्रथमाधिकारो मन्त्रयोगः, हठयोगो द्वितीयः, तृतीयस्तु समाधिकतमोन्नतिविधायकतया प्रशस्तो लययोग इति शास्त्रेषु कथ्यते । त्रयाणामेवैतेषां योगमार्गाणां साधकाश्चरमावस्थायां राजयोगोचितज्ञानभूमौ समवतरन्ति । क्रियायोगनाम्ना प्रसिद्धानान्त्रयाणामेवैतेषां योगसाधनमार्गाणामन्तिमलक्ष्यतया प्रसिद्धम् राजयोगाङ्गजातमेव विचारप्रधानसांख्ययोग इति नाम्ना परिगीयते । निसर्गत एव प्रकृतिः सप्तधा विभक्ता । तथा हि व्याहृतिवर्णस्वरधातुरत्नदिनादीनां प्रकृतिपरिणामवशात्सप्तधा विभागोऽपि प्रकृतिस्वभावजात एव भवति । एतन्नियमानुसारेणैव मनुष्याणां ज्ञानमपि सप्तविधमेव कथ्यते । योगशास्त्रेषु तस्य सप्तविधज्ञानस्य विस्तृतं वर्णनं परिदृश्यते । वैदिकसिद्धान्तस्य नेत्ररूपवेदानुकूलदर्शनशा-

र्णानां चतुर्णामेव नित्यशः । अनुकूलो भवेदेव सदाचारस्य पालने ॥५७॥ चतुराश्रमधर्म्मेश्च यथा स्वात्मसमुन्नतेः । भवेदेवानुकूलो वै सर्व्वदैव शुचिव्रते॥५८॥तथा मुक्तिपदप्राप्तौ साधनानां चतुष्टयम् । योगोक्तानां भवेदाशु परमं हितसाधनम् ॥५९॥ चतुर्ष्वेतेषु योगेषु राजयोगः परात्परः । स एव चरमो लक्ष्यः साधनानामशेषतः ॥ ६० ॥ त्वश्चैव शुचिचारित्रे राजयोगे परोत्तमे । स्थिरलक्ष्या स्थिरध्याना स्थिरबुद्धिर्भवानघे ॥ ६१ ॥ देव्युवाच । चतुर्णां योगमार्गाणां विज्ञाने निपुण प्रभो । संक्षेपतश्चतुर्णां हि योगानां कृपया तव ॥ ६२ ॥ लक्षणानि श्रुतानीह सांप्रतं कृपया वद । राजयोगस्य योग्या हि श्रेष्ठा ये चाधिकारिणः ॥ ६३ ॥ श्रीश्रीमधुसूदन उवाच । सदाचारे सुसंपूर्णे वरीयान्देवि धार्मिकः । साधको ब्रह्मसद्भावराजयोगाप्तिमाशु वै ॥ ६४ ॥ अश्नुते तव भव्यार्थं तल्लक्ष्माणि वदाम्यहम् । येष्वावृत्तिभयं नास्ति परलोकभयं न च[१] । नामिषेषु प्रसंगोस्ति न प्रियेष्वप्रियेषु च ॥६५॥ शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः । सुखं दुःखं समं येषां सत्यं येषां परायणम् ॥ ६६ ॥ दातारो न ग्रहीतारो दयाधृतिबृहद्व्रताः । पितृदेवातिथेयाश्च नित्योद्युक्तास्तथैव च ॥६७॥ सर्वोपकारिणो वीराः सर्वधर्मानुपालकाः । सर्वभूतहिताश्चैव सर्वदेयाश्च वल्लभे ॥ ६८ ॥

—स्त्राणि च सप्तधा विभक्तानि । तत्र पदार्थवादसम्बन्धिनौ न्यायवैशेषिकौ सांख्यप्रवचनसम्बन्धिनौ च योगसांख्ये, वैदिककर्म्मोपासनाज्ञानविभागममिांसासम्बन्धिनश्च मीमांसाभक्तिवेदान्ता इति सप्तैवास्तिकदर्शनानि जगत्प्रसिद्धानि । मनुष्याणां स्वभावसिद्धसप्तविधज्ञानोत्कर्षावस्थास्वंन्तिमावस्थालक्ष्यरूपस्य राजयोगस्य सम्यगुपदेशार्थमेव पूज्यतमैर्महर्षिभिस्त्रिकालदर्शिभि रेतानि सप्तविधानि दर्शनशास्त्रमयानि आध्यात्मिकविज्ञानानि जगति प्रकाशितानि । ज्ञानोन्नतिक्रमेण प्रकाशितवेदान्तप्रतिपाद्यज्ञानरूपो राजयोगः सर्वसाधनानां चरमसीमेति सर्व्ववेदसिद्धान्तः एतद्विस्तरः वर्तमानदेशकालपात्रानुसारेण तु लोककल्याणार्थं ग्रन्थकारेण पृथग्विभक्ततया स्वतंत्रज्ञानभूमिप्रदर्शकस्य तस्यैव सप्तदर्शनस्य स्वप्रणीतनिगमागमीयनामकसप्तदर्शनभाष्यग्रन्थेषु द्रष्टव्यः ।

१ यतः स्थितप्रज्ञत्वात्पुनरावृत्तिभयरहिता अत एव तेषां परलोकविषयकमपि भयं नास्ति कृतकृत्यत्त्वाल्लोकवेदबाह्या इतिभावः ।

न ते चालयितुं शक्या धर्मव्यापारकारिणः । न तेषां भिद्यते वृत्तं यत्पुरा साधुभिः कृतम् ॥ ६९ ॥ न त्रासिनो न चपला न रौद्राः सत्पथे स्थिताः । ते सेव्याः साधुभिर्नित्यं येष्वहिंसा प्रतिष्ठिता ॥ ७० ॥ कामक्रोधव्यपेता ये निर्ममा निरहंकृताः । सुव्रताः स्थिरमर्यादाः क्षमाशौचरतास्तथा ॥ ७१ ॥ न धनार्थं यशोर्थं वा धर्मस्तेषां मनोरमे । अवश्यं कार्य इत्येव शरीरस्य क्रियास्तथा ॥ ७२ ॥ न भयं क्रोधचापल्ये न शोकस्तेषु विद्यते । न धर्मध्वजिनश्चैव न गुह्यं कं चिदास्थिताः ॥७३॥ ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति च । वैराग्यभक्तिसंपन्नाः सत्वस्थाः समदर्शिनः ॥ ७४ ॥ लाभालाभौ सुखदुःखे च देवि प्रियाप्रिये मरणं जीवितं च । समानि येषां स्थिरविक्रमाणां बुभुत्सतां सत्वपथे स्थितानाम् ॥७५॥ धर्मप्रियाँस्तान् सुमहानुभावान् दान्ता प्रमत्ता च समर्चयेथाः । दैवान्सर्वे गुणवन्तो भवन्ति शुभेऽशुभा वाक्प्रलापास्तथा[१]न्ये ॥ ७६ ॥

इति श्रीश्रीमधुसूदनसंहितायां योगभेदवर्णनं नाम नवमोऽध्यायः ।

---

## दशमोऽध्यायः ।

# यमनियमवर्णनम् ।

देव्युवाच । मुनीनां परमाराध्य श्रेष्ठं तत्वं गुरोर्गुरो । प्रज्ञातं सर्व्वशास्त्राणां योगानां साधनस्य च ॥ १ ॥ अधुना ब्रूहि तत्वज्ञ योगं सर्वांगसुन्दरम् । येन यास्यामि निर्व्वाणं कर्म्मणो मोक्षमव्ययम् ॥ २ ॥ श्रीश्रीमधुसूदन उवाच ॥ आरोहति यथा

---

१ अन्ये मूढानां वाक्प्रलापा अशुभाः । इति श्रीमत्पूज्यपादभगवतः कृष्णद्वैपायनवेदव्यासस्य महाभारते शान्तिपर्वणि ।

सौधं प्रासादस्योन्नतं भृशम्। सोपानपंक्तिमारुह्य क्रमशो यत्नतो नरः ॥ ३ ॥ तथाष्टौ साधयन्नङ्गान्यस्य योगस्य साधकः। ईशभक्तिक्रियायोगनैपुण्यं लभतेंऽजसा ॥ ४ ॥ पुरासीदात्मतत्त्वज्ञो याज्ञवल्क्यो महामुनिः। वेदवेदाङ्गतत्त्वज्ञो विज्ञाने परिनिष्ठितः ॥ ५ ॥ तपस्वी विजितामित्रो ऋषीणामुग्रदीप्तिमान्। सदा शान्तः सदानन्दः करुणामृतसागरः ॥ ६ ॥ त्रिकालज्ञो जितात्मा च विद्यानां पारदृक् सुधीः। वयोवृद्धः शीलवृद्धो ज्ञानवृद्धश्च संयमी ॥ ७ ॥ सर्व्वेषां हितसंस्कर्त्ता योगे च परिनिष्ठितः। मितभुङ्मूर्त्तिमान् धर्म्मो योगीन्द्रो योगिवल्लभः ॥८॥ गुणज्ञः सर्व्ववस्तूनां गुणानामास्पदं महत्। ब्रह्मतेजोलसत्कान्तिर्गतक्लान्तिः सदाशयः ॥ ९ ॥ यत्पुरा तस्य विप्रर्षेर्मुखपद्माद्विनिःसृतम्। तत्तेऽहं संप्रवक्ष्यामि योगतत्वमनुत्तमम् ॥ १० ॥ नरः संस्कारशुद्धो हि धर्म्मोच्चपदवीमियात्। शीघ्रं धर्म्माधिकारेण योगप्राप्तिः प्रजायते ॥ ११ ॥ प्रधानौ धर्मसंस्कारौ साधनस्याश्रयौ मतौ। आर्यतापि तथार्याणां संस्कारैरेव संस्थिता॥१२॥ नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम्। व्याप्य शेते महाना·

---

१ क्रियायोगस्याष्टांगयोगोऽपि क्रमरूप इति सोऽप्युपासनायामंतर्भूतः सन्समाधावात्मदर्शनरूपमेकमेव फलमुत्पाद्यत इति भक्तियोगशब्देनैवाभिधीयत इतिबोध्यम्।

२ अत एव "संस्कारा नियता एते ब्राह्मणस्य विशेषतः। पंचविंशतिसंस्कारैः संस्कृता ये द्विजातयः ॥ ते पवित्राश्च योग्याः स्युः साधनेषु सुयन्त्रिताः" इति पूज्यपादमहर्षिजैमिनिः। "गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि, चत्वारि वेदव्रतानि, स्नानं, सहधर्मचारिणीसंयोगः, पंच महायज्ञाः, अष्टका पार्वणश्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशीवाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्तसोमयज्ञसंस्थाः, इत्येते चत्वारिंशत्संस्कारा अष्टावात्मगुणोदयाः, सर्वभूतेषु क्षान्तिरनसूयाशौचमनायासो माङ्गल्यमकार्पण्यमस्पृहेति यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यमाप्नोति" इतिपूज्यपादमहर्षिगौत्तमः।

त्मा तस्मात्पुरुष उच्यते ॥ १३ ॥ अजरः सोऽमरश्चैव व्यक्ताऽव्यक्तोपदेशवान् । व्यापकः सगुणः सूक्ष्मः सर्व्वभूतगुणाश्रयः ॥ १४ ॥ यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् । ज्ञानात्मानं तथा विद्यात्पुरुषं सर्वजंतुषु ॥ १५ ॥ श्रोत्रं वेदयते वेद्यं स शृणोति स पश्यति । कारणं तस्य देहोऽयं स कर्ता सर्वकर्मणाम् ॥ १६ ॥ अग्निर्दारुगतो यद्वच्छिन्ने दारौ न दृश्यते । तथैवात्मा शरीरस्थो योगेनैवानुदृश्यते ॥ १७ ॥ अग्निर्यथा ह्युपायेन मथित्वा दारु दृश्यते । तथैवात्मा शरीरस्थो योगेनैवात्र दृश्यते ॥ १८ ॥ तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः । कर्मिभ्यश्चाधिको योगी तस्माद्योगे स्थिरा भव ॥ १९ ॥ यमश्च नियमश्चैव आसनश्च तथैव च । प्राणायामस्तथा देवि ! प्रत्याहारश्च धारणा ॥ २० ॥ ध्यानं समाधिरेतानि योगाङ्गानि वरानने । यमश्च नियमश्चैव दशधा सुप्रकीर्त्तितः ॥ २१ ॥ आसनान्युत्तमान्यष्टौ त्रयं तेषूत्तमोत्तमम् । प्राणायामस्त्रिधा प्रोक्तः प्रत्याहारश्च पञ्चधा ॥ २२ ॥ धारणा पञ्चधा प्रोक्ता ध्यानं षोढा प्रकीर्तितम् । त्रयस्तेषूत्तमाः प्रोक्ताः समाधेस्त्वेकरूपता । बहुधा के चिदिच्छन्ति विस्तरेण पृथक् शृणु ॥ २३ ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं दयार्ज्जवम् । क्षमा धृतिर्मिताहारः शौचन्त्वेते यमा दश ॥ २४ ॥ कर्म्मणा मनसा वाचा सर्व्वभूतेषु स-

---

१ जीवात्मपरमात्मनोरेकरूपोपलब्धिरूपमुक्तिपदलाभोपयोगिनो यावंतः सत्पुरुषार्थाः सक्रियारूपतया शास्त्रादिषु वर्णिताः सर्वमेव तत्कर्मकौशलजातं योग इति नाम्ना कथ्यते । जीवानां स्वोत्कर्षक्रमेणानुष्ठितक्रियापरंपराणां भेदविचारेण ते च पुरुषार्थसमूहाः भागैरष्टभिर्योगाङ्गनामभिः सम्विविक्ताः । सगुणनिर्गुणोपासनादिषु च परस्परविभिन्नक्रियाश्चैतदष्टाङ्गयोगक्रमपारंपर्यवशाद्भेदमुपयन्ति । साधनविशेषस्याङ्गविशेषे मुख्यगौणतया सिद्धाचार्यैः क्वचित्समुपदिष्टेऽपि सर्व एव योगाङ्गसमूहो मुख्यगौणतया सर्वविधेष्वेव साधनेष्वन्तर्भवति । अत एव " योगः कर्मसुकौशलम् " इति च भगवद्वाक्यम् " अष्टाङ्गो योग उच्यते " " अष्टाङ्ग इत्युच्यते योगः " इत्यादि श्रुतिः ।

र्व्वदा । अक्लेशजननं प्रोक्तमहिंसात्वेन योगिभिः ॥ २५ ॥ सत्यं भूतहितं प्रोक्तं न यथार्थाभिभाषणम् ॥ २६ ॥ कर्म्मणा मनसा वाचा परद्रव्येषु निःस्पृहा । अस्तेयमिति सम्प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ २७ ॥ कर्म्मणा मनसा वाचा सर्व्वावस्थासु सर्व्वदा । सर्व्वत्र मैथुनत्यागो ब्रह्मचर्य्यं प्रचक्षते ॥ २८ ॥ ब्रह्मचर्य्याश्रमस्थानां यतीनां नैष्ठिकस्य च । ब्रह्मचर्य्यञ्च तत्प्रोक्तं तथैवारण्यवासिनाम् ॥ २९ ॥ ऋतावृतौ स्वदारेषु सङ्गतिर्या विधानतः । ब्रह्मचर्य्यं तदप्युक्तं गृहस्थाश्रमवासिनाम् ॥ ३० ॥ राज्ञश्चैव गृहस्थस्य ब्रह्मचर्य्यं प्रकीर्त्तितम् । विशां वृत्तिवताश्चैव केचिदिच्छन्ति पण्डिताः ॥ ३१ ॥ शुश्रूषैव तु शूद्रस्य ब्रह्मचर्य्यं प्रकीर्त्तितम् । शुश्रूषा या गुरौ नित्यं ब्रह्मचर्य्यमुदाहृतम् ॥ ३२ ॥ गुरवः पञ्च सर्व्वेषां चतुर्णां श्रुतिचोदिताः । माता पिता तथाचार्य्यो मातुलः श्वशुरस्तथा ॥ ३३ ॥ तेषां मुख्यास्त्रयः प्रोक्ता आचार्यः पितरौ तथा । तेषां मुख्यतमस्त्वेक आचार्य्यः परमार्थवित् ॥ ३४ ॥ तमेवं ब्रह्मविच्छ्रेष्ठं नित्यकर्म्मपरायणम् । शुश्रूषयार्च्चयेन्नित्यं तुष्टो भृत्येन वा गुरुः ॥ ३५ ॥ दया भूतेषु सर्व्वेषु सर्व्वत्रानुग्रहः स्पृहा । विहितेषु तदन्येषु मनोवाक्कायकर्म्मणा ॥ ३६ ॥ प्रवृत्तौ वा निवृत्तौ वा एकरूपत्वमार्ज्जवम् ॥ ३७ ॥ प्रियाप्रियेषु सर्व्वेषु समत्वं यच्छरीरिणाम् । क्षमा सैवेति विद्वद्भिर्गदिता वेदवादिभिः ॥ ३८ ॥ अर्थहानौ च ब-

---

१ अत एव "मा हिंस्यात्सर्व्वभूतानि" इत्यादि श्रुतिः । २ अत एव "सत्यं वद" "सत्यं ब्रह्मणि ब्रह्म तपासि" "तेन सत्येन ऋतुरस्मि" इत्यादि श्रुतिः । ३ अत एव "अस्तेयसत्यं ब्रह्मचर्य्यं विधिश्च" इत्यादि श्रुतिः । ४ अत एव "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यक् ज्ञानेन ब्रह्मचर्येण नित्यम्" "ब्रह्मचर्य्यमहिंसा चापरिग्रहं च सत्यं च" इत्यादि श्रुतिः । ५ अत एव "एतत्त्रयं शिक्षेद्दमं दानं दयामिति" इत्यादि श्रुतिः । ६ अत एव "यत्तपोदानमार्जवमहिंसा" इत्यादि श्रुतिः । ७ अत एव "क्षमा सत्यं दमः त्रयो धर्मस्कन्धाः" इत्यादि श्रुतिः ।

न्धूनां वियोगे चापि सम्पदि । भूयः प्राप्तौ च सर्व्वत्र चित्तस्य स्थापनं धृतिः[1] ॥ ३९ ॥ अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनाम् । द्वात्रिंशाद्धि गृहस्थस्य यथेष्टं ब्रह्मचारिणाम्[2] ॥ ४० ॥ तेषामयं मिताहारस्त्वन्येषामल्पभोजनम् ॥ ४१ ॥ शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरन्तथा । मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिस्तथान्तरम्[3] ॥ ४२ ॥ मनःशुद्धिश्च विज्ञेया धर्म्मेणाध्यात्मविद्यया । अध्यात्मविद्या धर्म्मश्च पित्राचार्य्येण चानघे ॥ ४३ ॥ तस्मात्सर्व्वेषु कालेषु सर्व्वैर्निःश्रेयसार्थिभिः । गुरवः श्रुतिसम्पन्ना मान्या वाङ्मनसादिभिः ॥ ४४ ॥ तपः सन्तोषमास्तिक्यं दानमीश्वरपूजनम् । सिद्धान्तश्रवणश्चैव ह्रीर्मतिश्च जपो व्रतम् ॥ ४५ ॥ एते च नियमाः प्रोक्तास्तांश्च सर्व्वान् पृथक् शृणु ॥४६॥ विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः । शरीरशोषणं प्राहुस्तपसां तप उत्तमम्[4] ॥ ४७ ॥ यदृच्छालाभतो नित्यं मनः पुंसो भवेदिति । या धीस्तामृषयः प्राहुः सन्तोषं सुखलक्षणम्[5] ॥ ४८ ॥ धर्म्माधर्म्मेषु विश्वासो यस्तदास्तिक्यमुच्यते ॥ ४९ ॥ न्यायार्ज्जितं धनञ्चाल्पमन्यद्वा यत्प्रदीयते । अर्थिभ्यः श्रद्धया युक्तं दानमेतदुदाहृतम्[6] ॥ ५० ॥ यः प्रसन्न-

---

१ अत एव " बुद्धिर्धृतिः स्मृतिः प्रज्ञानम् " इत्यादि श्रुतिः । २ अत एव " मिताहारो जितेन्द्रियः " इत्यादि श्रुतिः । ३ अत एव " शौचमिन्द्रियनिग्रहः " इत्यादि श्रुतिः । ४ तपोदानसम्बन्धीयं विस्तृतं विवरणन्धर्मविज्ञाननामकाध्याये द्रष्टव्यम् । द्वयमेवैतद्धर्मसाधनस्य स्थूलक्रियारूपेण निर्दिश्यते। स्थूलक्रियाधिकारप्राप्तेरनन्तरं च साधकोऽन्तस्तत्त्वसम्बन्धीयेषु सूक्ष्मरूपसाधनान्तरेषु भवत्यधिकारी । तपःशब्देनात्र शरीरक्रियाविशेषरूपन्तपो विवक्षितम् ; अत एव " यो न क्लेशः स तप्यते तपः " " तेन सत्त्येन तेन तपसा ऋतुरस्मि " "तस्मै तपो दमः कर्मेति प्रतिष्ठा " इत्यादि श्रुतिः । तथा च " तपसो बहुरूपस्य तैस्तैर्द्वारैः प्रवर्तते । निवृत्त्या वर्तमानस्य तपो नानशनात्परम् ॥"इत्यादि श्रीमत्पूज्यपादभगवान् वेदव्यासः श्रीमहाभारते । ५ अत एव " पर्य्याप्तकामस्य कृतात्मनस्तु इहैव सर्व्वे प्रविलीयन्ति कामाः" " सन्तोषं योगाभ्यासादवाप्नोति " इत्यादि श्रुतिः । ६ अत एव "श्रद्धया देयम् " "अश्रद्धयाऽदेयम् " "यज्ञोऽध्ययनं दानमिति प्रथमः" इत्यादि श्रुतिः ।

स्वभावेन विष्णुं वा रुद्रमेव च । यथाशक्त्यर्च्चनं भक्त्या चैतदीश्वरपूजनम् ॥ ५१॥ रागाद्यपेतं हृदयं वागदुष्टानृतादिभिः । हिंसादिरहितः काय एतदीश्वरपूजनम् ॥ ५२ ॥ सिद्धान्तश्रवणं प्रोक्तं वेदान्तश्रवणं बुधैः । द्विजन्क्षत्रियस्योक्तं सिद्धान्तश्रवणं बुधैः ॥ ५३ ॥ विशाश्च केचिदिच्छन्ति शीलवृत्तवतां सताम् । शूद्राणाञ्च स्त्रियश्चैव स्वधर्म्मस्तु तपस्विनाम् । सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधैः ॥ ५४ ॥ वेदलौकिकमार्गेषु कुत्सितं कर्म्म यद्भवेत् । तस्मिन् भवति या लज्जा ह्रीस्तु सैवेति कीर्तिता[3] ॥ ५५ ॥ विहितेषु च सर्व्वेषु श्रद्धा या सा मतिर्भवेत् ॥ ५६ ॥ गुरुणा चोपदिष्टोऽपि वेदबाह्यविवर्जितः । विधिनोक्तेन मार्गेण मन्त्राभ्यासो जपः स्मृतः ॥ ५७॥ अधीत्य वेदं सूत्रं वा पुराणं सेतिहासकम् । एतेष्वभ्यसनं तस्य अभ्यासेन जपः स्मृतः॥५८॥ जपश्च द्विविधः प्रोक्तो वाचिको मानसस्तथा । वाचिकोपांशु उच्चैस्तु द्विविधः परिकीर्त्तितः ॥ ५९ ॥ मानसो मनसा ध्यानं भेदाद्वैविध्यमास्थितः । उच्चैर्ज्जपादुपांशुश्च सहस्रगुणमुच्यते ॥६०॥

---

१ अत एव " वषट् ते विष्णवास आ कृणोमि " " त्रियम्बकं यजामहे " " गणपतिं हवामहे " " अर्चन्त्यर्कमार्किणः " "दुर्गां देवीं शरणमहं प्रपद्ये" "ऐश्वर्य्यं यस्य पूजनात्" इत्यादि श्रुतिः । " देवद्विजगुरुप्राज्ञपूजनम् " इति गीतोपनिषत् । " अर्चत प्रार्चत प्रियमेधासोऽअर्चत । अर्चन्तु पुत्रका उत पुरन्न धृष्णवर्चत " इति च श्रुतिः ।२ अत एव " वेदान्तविज्ञानसुनिश्चितार्थाः " " श्रोतव्यो मन्तव्यो निदिध्यासितव्यः " इत्यादि श्रुतिः । ३ अत एव " ह्रीर्धीर्भीरित्येतत्सर्वं ममः" " मार्दवं ह्रीरचापलम् " इत्यादि श्रुतिस्मृती । ४ अत एव " मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञासे । " इत्यादि श्रुतिः । ५ ईश्वरपूजामन्त्रजपसम्बन्धीयाश्चोपदेशविषयाः सगुणोपासनामंत्रयोगवर्णनावसरे सम्यक् संवर्णिताः । उपासनाशब्देन तत्सम्बन्धीयोत्कृष्टक्रियानुष्ठानमेव सिद्धाचार्याणामभिप्रेतम् । तत्सम्बन्धियसामान्यक्रियाजातं बहिःपूजादिकन्तु नियमान्तर्गतं तस्यैव संवर्णितम् । नान्यदीश्वरोपासनायाः साधनान्तरं किमपि महर्षिभिरार्यैः समुपादिष्टम् इश्वरोपासनाया विस्ताराश्चाष्टाङ्गक्रियायोग इति भण्यते । तस्या एवोपासनायाः प्रथमानुष्ठेयक्रियादयो नियमान्तर्गतक्रमेण वर्णिताः अत एव " एतज्जुव्हन् जपेन्मन्त्रं " "मुमुक्षुर्भवति जपात् " इत्यादि श्रुतिः ।

मानसश्च तथोपांशोः सहस्रगुणमुच्यते । उच्चैर्जपश्च सर्व्वेषां यथोक्तफलदो भवेत् । नीचश्रुतो न चेत्सोऽपि श्रुतश्चेन्निष्फलो भवेत् ॥ ६१ ॥ ऋषिं छन्दोऽधिदैवञ्च ध्यायन्मन्त्रञ्च सर्व्वदा । यत्तु मन्त्रं जपेद्देवि तदेव हि फलप्रदम् ॥ ६२ ॥ प्रसन्नगुरुणा पूर्व्वमुपदिष्टमनुज्ञया । धर्म्मार्थकामसिद्ध्यर्थमुपायग्रहणं व्रतम् ॥ ६३ ॥ पूजाविधिं प्रशासद्भिर्भक्तिमार्गोपदेशकैः । आचार्य्यैर्वर्णिता देवि बहवो नियमा यमाः ॥ ६४ ॥ प्रधानतस्तु संक्षिप्य वर्णिताः साम्प्रतं प्रिये । अङ्गरूपा स्तवार्थाय कियंतो नियमा यमाः॥ ६५ ॥ मन एव मनुष्याणां कारणं बंधमोक्षयोः । बंधाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ ६६ ॥ मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च । अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ ६७ ॥ यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते । तस्मान्निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ ६८॥ नाऽयं जनः स्यात्सुखदुःखहेतुर्न देवताऽऽत्मा ग्रहकर्मकालाः । मनः परं कारणमामनंति संसारचक्रं परिवर्तयेद्यत् ॥ ६९ ॥ दानं स्वधर्मो नियमो यमश्च श्रुतानि कर्माणि च सद्व्रतानि । सर्वे मनोनिग्रहलक्षणांताः परो हि योगो मनसः समाधिः ॥ ७० ॥ मनो वशेऽन्ये ह्यभवन्स्म देवा मनश्च नान्यस्य वशं समेति । भीष्मो हि देवः सहसः सहीयान् युंज्याद्वशे तं स हि देवदेवः ॥ ७१ ॥

इति श्रीश्रीमधुसूदनसंहितायां यमनियमवर्णनं नाम दशमोऽध्यायः ।

---

१ साधनान्येतानि प्रायशो नियमान्तर्गतरूपेण वर्णितानि । सिद्धाचार्यास्तु के चिदाहारविहारसम्बन्धीयान् यावतीयानेवोत्कृष्टनियमान्योगोपयोगिनो नियमसाधनप्रस्तावे समनुष्ठेयतया निर्दिशन्ति । वस्तुतस्तु यमनियमसाधनैरेव साधको योगाभ्यासे सम्यगधिकारं लभते । यमनियमाद्यनुष्ठानेन विशुद्धान्तःकरणो हि सः योगाङ्गान्यपराणि शक्नोति समभ्यसितुम् । अत एव " अथातो व्रतमीमांसा " " अथ महाव्रतम् " इत्यादि श्रुतिः । २ इति श्लोकत्रयं श्रीमद्भागवते ।

# एकादशोऽध्यायः ।

# आसनमुद्रावर्णनम् ।

श्रीश्रीमधुसूदन उवाच । आसनान्यधुना वक्ष्ये शृणु देवि वरानने । दार्ढ्यकारीणि देहानां स्थिरसौख्यकराणि च ॥ १ ॥ स्वस्तिकं गोमुखं पद्मं वीरं सिंहासनं तथा । भद्रं मुक्तासनञ्चैव मयूरासनमेव च । तथैतेषां वरारोहे पृथग्वक्ष्यामि लक्षणम् ॥ २ ॥ जानूर्व्वोरन्तरे सम्यक्कृत्वा पादतले उभे । ऋजुकायः सुखासीनः स्वस्तिकं तत्प्रचक्ष्यते ॥ ३ ॥ सीवन्या वामतः पार्श्वे गुल्फौ निक्षिप्य पादयोः । सव्ये दक्षिणगुल्फन्तु दक्षिणे सव्यगुल्फकम् । एतच्च स्वस्तिकं प्रोक्तं सर्व्वपापप्रणाशनम् ॥ ४ ॥ सव्ये दक्षिणगुल्फन्तु पृष्ठपार्श्वे निवेशयेत् । दक्षिणेऽपि तथा सव्यं गोमुखं गोमुखं यथा ॥ ५ ॥ अङ्गुष्ठौ तु निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु । ऊर्व्वोरुपरि योगज्ञे कृत्वा पादतले उभे ॥ ६ ॥ पद्मासनं भवेदेतत्सर्व्वेषामपि पूजितम् । एकं पादमथैकस्मिन्विन्यस्योरूणि संस्थितः । इतरस्मिन्यथा चान्यं वीरासनमुदाहृतम् ॥ ७ ॥ गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् । सव्यं दक्षिणगुल्फेन द-

---

१ अत एव "स्थिरसुखमासनम्" इति योगदर्शनम् । "तेषां त्वयासनेन प्रश्वसितव्यम्" तै० श्रुतिः । "आसनं पद्मकं बध्वा" इति योगश्रुतिः । "पद्माद्यासनस्थः" रामो० श्रुतिः ।

२ स्थूलक्रियाप्रधानहठयोगशास्त्रेषु द्वात्रिंशदासनानि पंचविंशतिसंख्याश्च मुद्राः साधनार्थन्नियमिताः । लययोगाचार्यैस्तु प्रायशो दशैव मुद्राश्चत्वारि चासनानि साधनार्थमुपदिष्टानि । मन्त्रयोगसाधकानान्तु पक्षे एकमेव द्वे वा आसने संविधीयेते । फलतस्तु मुद्रासनानां बहुविधत्वेऽपि विभिन्नयोगशास्त्रेषु सिद्धाचार्यैः कैश्चिद्बहुसंख्यकानि कैश्चिच्चाल्पसंख्यकान्येव मुद्रासनानि समुपदिष्टानि । हठयोगसम्बन्धीयानि मुद्रासनानि योगभेदनामाध्याये समुल्लिखितानि । अत्र तु प्राधान्येन कतिपयान्येवासनानि पूज्यपादश्रीयोगियाज्ञवल्क्यमहर्षिमतानुसारेण विस्तरेण वर्ण्यन्ते ॥

क्षिणेन तथेतरम् ॥ ८ ॥ हस्तौ जान्वोः समास्थाय स्वाङ्गुलीश्च प्रसार्य्य च । व्यात्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः ॥ ९ ॥ सिंहासनं भवेदेतत्पूजितं योगिभिः सदा । गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ॥ १० ॥ पार्श्वे पादौ च पाणिभ्यां दृढं बध्वा सुनिश्चलम् । भद्रासनं भवेदेतत्सर्व्वव्याधिविषापहम् ॥११॥ संपीडच सीवनीं सूक्ष्मां गुल्फेनैव च सर्व्वतः । सव्यं दक्षिणगुल्फेन मुक्तासनमितीरितम् ॥१२॥मेढ्रादुपरि निक्षिप्य सव्यं गुल्फं तथोपरि । गुल्फान्तरन्तु निक्षिप्य मुक्तासनमिदं बुधाः॥१३॥अवष्टभ्य धरां सम्यक्तलाभ्यान्तु करद्वयोः । हस्तयोः कूर्परौ चापि स्थापयन्नाभिपार्श्वयोः ॥ १४ ॥ उन्नाम्य शिरसि पादौ दण्डवद्व्योम्नि संस्थितः । मयूरासनमेतत्तु सर्व्वपापप्रणाशनम् । सर्व्वे चाभ्यन्तरा रोगा विनश्यन्ति विषाणि च ॥ १५ ॥ संविदं लभतेभ्यासाद्योगोभ्यासात्प्रवर्तते । मुद्राणां सिद्धिरभ्यासादभ्यासाद्वायुसाधनम् ॥ १६ ॥ कालवञ्चनमभ्यासात्तथा मृत्युञ्जयो भवेत् । वाक्सिद्धिः कामचारित्वं भवेदभ्यासयोगतः ॥ १७ ॥ योगमुद्राः परं गोप्या न देया यस्य कस्य चित् । सर्व्वथा नैव दातव्याः प्राणैः कण्ठगतैरपि ॥ १८ ॥ अधुना कथयिष्यामि योगं सिद्धिकरं परम् । गोपनीयं सुसिद्धानां योगं परमदुर्लभम् ॥ १९ ॥ महामुद्रां प्रवक्ष्यामि तन्त्रेऽस्मिन्मम वल्लभे । यां प्राप्य सिद्धाः संसिद्धिं गोरक्षाद्याः पुरा गताः ॥ २० ॥ अपसव्येन संपीडच पादमूलेन सादरम् । गुरूपदेशतो योनिं गुदमेढ्रान्तरालगाम् ॥ २१ ॥ सव्यं प्रसारितं पादं धृत्वा पाणियुगेन वै । नवद्वाराणि संयम्य चिबुकं हृदयोपरि ॥ ॥ २२ ॥ चित्तं चित्तपथे दत्वा प्रभवेद्वायुसाधनम् । महामुद्रा

१ योगतत्वदर्शिभिः खलु (२५) पंचविंशति मुद्राः शास्त्रे कथिताः परं तु प्रधानभूता अष्टावेवात्र श्रीशिवसंहितातस्तथाऽन्यान्यतंत्रतश्च संगृहीताः । एतासां विस्तरस्तु ग्रंथकर्त्रा हठयोगसंहितायां कृत इति तत एव द्रष्टव्य. । अत एव''मुद्रां ज्ञानमयीं याम्ये''इत्यादिश्रुतिः ।

भवेदेषा सर्व्वतन्त्रेषु गोपिता ॥ २३ ॥ वामाङ्केन समभ्यस्य दक्षाङ्गेनाभ्यसेत्पुनः । उभयाङ्गेन कुर्य्याच्च क्रियां गुरुमुखाच्छ्रुताम् ॥ २४ ॥ प्राणायामं समं कृत्वा योगी नियतमानसः । यान्तु प्राप्य भवाम्भोधेः पारं गच्छन्ति योगिनः ॥ २५ ॥ ततः प्रसारितः पादो विन्यस्य तमुरूपरि । गुदयोनिं समाकुच्य कृत्वा चापानमूर्ध्वगमम् ॥ २६ ॥ योजयित्वा समानेन कृत्वा प्राणमधोमुखम् । बन्धयेदुदरेऽत्यर्थं प्राणापानौ च यः सुधीः ॥ २७ ॥ कथितोऽयं महाबन्धः सिद्धिमार्गप्रदायकः । नाडीजालाद्रसव्यूहो मूर्द्धानं याति योगिनः । उभाभ्यां साधयेत्पद्भ्यामेकैकं सुप्रयत्नतः ॥ २८ ॥ पादमूलेन संपीड्य गुदमार्गं सुयन्त्रितम् । बलादपानमाकृष्य क्रमादूर्ध्वं समभ्यसेत् ॥ २९ ॥ कल्पितोऽयं मूलबन्धो जरामरणनाशनः । अपानप्राणयोरैक्यं प्रकरोत्यधिकल्पितः । बन्धेनानेन सुतरां योनिमुद्रां प्रसिद्ध्यति ॥ ३० ॥ गोमांसं चालयेन्नित्यं तत्प्रवेशो हि तालुनि । क्रमशो भक्षयेत्सर्वं महापातकनाशनम् ॥ ३१ ॥ भ्रुवोरन्तर्गतां दृष्टिं निधाय सुदृढां सुधीः । उपविश्यासने वज्रे नानोपद्रववर्ज्जितः ॥ ३२ ॥ लम्बिकोर्ध्वस्थिते गर्त्ते रसनां विपरीतगाम् । संयोजयेत्प्रयत्नेन सुधाकूपे विचक्षणः ॥ ३३ ॥ मुद्रैषा खेचरी प्रोक्ता भक्तानामनुरोधतः । खेचरी यस्य शुद्धा तु स शुद्धो नात्र संशयः ॥ ३४ ॥ भूतले स्वशिरो दत्वा खेलयेच्चरणद्वयम् । विपरीतकृतिश्चैषा सर्व्वतन्त्रेषु गोपिता ॥ ३५ ॥ एतद्यः कुरुते नित्यमभ्यासं याममात्रकम् । मृत्युं जयति योगींद्रः प्रलयेऽपि न सीदति ॥ ३६ ॥ कुरुतेऽमृतपानं सः सिद्धानां समतामियात् । स सिद्धः सर्व्वलोकेषु बन्धमेनं करोति यः ॥ ३७ ॥ नाभेरूर्ध्वमधश्चापि तानं पश्चिममाचरेत् । उड्डानाख्यो ह्ययं बन्धो मृत्युमातङ्गकेशरी ॥ ३८ ॥

१ ताल्व्यक्रियायां जिव्हाचालनम् ।

नित्यं यः कुरुते योगी चतुर्वारं दिनेदिने । तस्य नाभेस्तु शुद्धिः स्याद्येन शुद्धो भवेन्मरुत् ॥ ३९ ॥ षण्मासमभ्यसन्योगी मृत्युं जयति निश्चितम् । तस्योदराग्निर्ज्वलति रसवृद्धिस्तु जायते ॥ ॥ ४० ॥ अनेन सुतरां सिद्धिर्विग्रहस्य प्रजायते । रोगाणां संक्षयश्चापि योगिनो भवति ध्रुवम् ॥ ४१ ॥ गुरोर्लब्ध्वा तु यत्नेन साधयेत्तु विचक्षणः । निर्जने सुस्थिते देशे बंद्धं परमदुर्लभम् ॥ ॥ ४२ ॥ स्वेच्छया वर्तमानोऽपि योगोक्तनियमैर्विना । मुक्तो भवेद्गृहस्थोऽपि वज्रोण्यभ्यासयोगतः ॥ ४३ ॥ वज्रोण्यभ्यासयोगोयं भोगे युक्तोऽपि मुक्तिदः । तस्मादतिप्रयत्नेन कर्त्तव्यो योगिभिः सदा ॥ ४४ ॥ अभ्यासः स्याद्धि वज्रोण्याः सिद्धिदो यत्र यादृशः । तत्वज्ञैस्ताद्विवरणं हठयोगे कृतं महत् ॥४५ ॥ अधिकारविशेषज्ञैर्योगांगानां सुसाधकैः । श्रीसद्गुर्वाश्रयः कार्यो वज्रोणीसिद्धिलिप्सुभिः ॥ ४६ ॥ विषयाभिमुखानां यद्देहिनामधिकारिता । नोक्ताऽत्र योगिभिस्तस्मान्नोच्यते सा क्रिया प्रिये । दिग्दर्शनं तु क्रियते साधारण्यादिदं शृणु ॥ ४७ ॥ स्वमूत्रोत्सर्गकाले यो बलादाकृष्य वायुना । स्तोकं स्तोकं त्यजन्मूत्रमूर्ध्वमाकृष्य तत्पुनः ॥ ४८ ॥ गुरूपदिष्टमार्गेण प्रत्यहं यः समाचरेत् । बिन्दुसिद्धिर्भवेत्तस्य महासिद्धिप्रदायिका ॥ ४९ ॥ एतद्गुह्यतमं गुह्यं न भूतं न भविष्यति । तस्मादतिप्रयत्नेन गोपनीयं सदा बुधैः ॥ ॥ ५० ॥ बिन्दुर्विधुमयो ज्ञेयो रजः सूर्य्यमयस्तथा । उभयोर्मेलनं कार्य्यं स्वशरीरे प्रयत्नतः ॥ ५१ ॥ शिवं बिन्दू रजः शक्तिरुभयोर्मेलनं यदा । योगिनां साधनावस्था भवेद्दिव्यं वपुस्तदा ॥ ५२ ॥ मरणं बिन्दुपातेन जीवनं बिन्दुधारणात् । तस्मादतिप्रयत्नेन कुरुते बिन्दुधारणम् ॥ ५३ ॥ जायते म्रियते लोको बिन्दुना नात्र संशयः । सिद्धे बिन्दौ महायत्ने किं न सिध्यति

१ एतानि गुह्यतरमुद्रासमूहं पूज्यपादश्रीगुरोरुपदेशेनैव सम्यक् ज्ञातुं शक्यन्ते ।

भूतले ॥ ५४ ॥ आधारकमले सुप्तां चालयेत्कुण्डलीं दृढाम् । अपानवायुमारुह्य बलादाकृष्य बुद्धिमान् ॥ ५५ ॥ शक्तिचालनमुद्रेयं सर्व्वशक्तिप्रदायिनी । शक्तिचालनमेनं हि प्रत्यहं यः समाचरेत् । आयुर्वृद्धिर्भवेत्तस्य रोगाणाञ्च विनाशनम् ॥ ५६ ॥ विहाय निद्रां भुजगी स्वयमूर्ध्वं भवेत्खलु । तस्मादभ्यसनं कार्य्यं योगिना सिद्धिमिच्छता ॥ ५७ ॥ यः करोति सदाभ्यासाच्छक्तिचालनमुत्तमम् ॥ येन विग्रहसिद्धिः स्यादणिमादिगुणप्रदा ॥ ५८ ॥ गुरूपदेशविधिना तस्य मृत्युभयं कुतः ॥ मुहूर्त्तद्वयपर्यन्तं विधिना शक्तिचालनम् ॥ ५९ ॥ यः करोति प्रयत्नेन तस्य सिद्धिरदूरतः ॥ युक्ताशनेन कर्तव्यं योगिभिः शक्तिचालनम् ॥ ६० ॥ एवमासनमुद्रादि न भूतं न भविष्यति । एकैकाभ्याससंसिद्धया सिद्धो भवति नान्यथा॥६१॥यमैश्च नियमैश्चैव आसनैश्च सुसंयुता । नाडीशुद्धिञ्च कृत्वा तु प्राणायामाँस्तथा कुरु॥६२॥ देव्युवाच॥स्वामिन् यतः शरीरस्य निश्चलत्वं प्रजायते । तथा साधकयोगश्च तद्भवत्कृपया श्रुतम् ॥ ६३ ॥ इदानीं कृपया ब्रूहि यतश्चित्तं निगृह्यते । यन्निग्रहेण शान्तिं च प्राप्नुयां सर्व कामदाम् ॥ ६४ ॥ श्रीश्रीमधुसूदन उवाच ॥ धृतिर्नाम सुखे दुःखे यथा नाप्नोति विक्रिया । तां भजेत सदा प्राज्ञस्तस्य चित्तं निगृह्यते ॥ ६५ ॥ यया स्वप्नं भयं शोकं विषादं मदमेव च । न विमुंचति दुर्मेधा धृतिः सा तामसी मता

१ स्थूलशरीरस्य वशीकरणे परमोपयोगि भवत्यासनादि । यमनियमैर्विशुद्धचित्तो हि साधको योगसंबन्धीयं कष्टसाध्यं साधनसमूहमभ्यासितुं शक्नोति । ततश्चासनाभ्यासद्वारे स्थूलशरीरं वशमानीय कृतकृत्यो भवति । स्थूलशरीरस्य सूक्ष्मशरीरेण सहातिघनिष्ठदृढसम्बन्धो विद्यते । अत एव हि वशमानीते स्थूलशरीरे सूक्ष्मशरीरमपि स्वत एव साधकस्य वशमागच्छति । शरीरे चाञ्चल्यशून्ये मनसोऽपि क्रमेण निश्चलत्वमवश्यम्भावि । तदैव योगी सूक्ष्मतराणि साधनान्तराणि समभ्यसितुं समर्थो भवति । एवं चासनाद्यभ्यासो योगिनां परमोपकारी सर्वश्रेष्ठश्च क्रियायोगः कथ्यते ।

॥ ६६ ॥ यया तु धर्मकामार्थान् धृत्या धारयते नरः । प्रसंगेन फलाकांक्षी धृतिः सा देवि राजसी ॥ ६७ ॥ धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा देवि सात्त्विकी ॥ ६८ ॥ सैव योगिजनैः सेव्या सात्विकी धृतिरात्मदा । न तां विना क्वचित्कैश्चिच्चित्तस्थैर्यमवाप्यते ॥ ६९ ॥ सात्विकीधृतिमान्योगी पूर्वं षट्शत्रुनिर्जये । कुर्याद्यत्नं वरं नित्यं ततश्चित्तं स्थिरं भवेत् ॥ ७० ॥ कामक्रोधौ लोभमोहौ मदो मात्सर्यमेव च । एते षट् शत्रवः साध्वि प्राणिनां पापदुःखदाः ॥ ७१ ॥ एतेषामुदयं स्थानं क्षयं च प्रवदामि ते । ज्ञात्वा तद्विजये यत्नः कार्यः कल्याणसाधकैः ॥ ॥ ७२ ॥ संकल्पाज्जायते कामः सेव्यमानो विवर्धते । यदा प्राज्ञो विरमते तदा सद्यः प्रणश्यति ॥ ७३ ॥ कामात्क्रोधः प्रभवति[3] परदोषैरुदीर्यते । क्षमया तिष्ठते देवि क्षमया विनिवर्त्तते ॥ ७४ ॥ अज्ञानप्रभवो लोभो भूतानां दृश्यते सदा । अस्थिरत्वं च भोगानां दृष्ट्वा ज्ञात्वा निवर्तते ॥ ७५ ॥ अज्ञानप्रभवो मोहः पापाभ्यासात्प्रवर्तते । यदा प्राज्ञेषु रमते तदा सद्यः प्रणश्यति ॥ ७६ ॥ कुलाज्ज्ञानात्तथैश्वर्यान्मदो भवति देहिनाम् । एभिरेव तु विज्ञातैः स च सद्यः प्रणश्यति ॥ ७७ ॥ सत्यत्यागात्तु मात्सर्यमहितानां च सेवया । एतत्तु क्षीयते शश्वत्साधूनामुपसेवनात्[3] ॥ ७८ ॥ असंकल्पाज्जयेत्कामं क्रोधं कामविवर्जनात् । अर्थानर्थेक्षया लोभं मदं महदुपासया ॥७९॥ आन्वीक्षिक्या त्यजेन्मोहं मात्सर्यं कृपया जयेत् । एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यंजसा जयेत् ॥ ८० ॥ भयं प्रमत्तस्य वनेष्वपि

१ श्रीमद्भगवद्गीतायाम् । २ अत एव " संगात्संजायते कामः कामात्क्रोधोऽभिजायते । क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः । स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ " इति श्रीमद्भगवद्वाक्यम् । ३ श्रीमन्महाभारते शांतिपर्वणि आपद्धर्मे ।

स्याद्यतः स आस्ते सहषट्सपत्नः। जितेन्द्रियस्यात्मरतेर्बुधस्य गृहाश्रमः किं नु करोत्यवद्यम् ॥ ८१ ॥ यः षट् सपत्नान्विजिगीषमाणो गृहेषु निर्विश्य यतेत पूर्वम् ॥। अत्येति दुर्गाश्रितऊर्जितारीन्क्षीणेषु कामं विचरेद्विपश्चित् ॥ ८२ ॥

इति श्रीश्रीमधुसूदनसंहितायां आसनमुद्रावर्णनं नामैकादशोऽध्यायः।

---

## द्वादशोऽध्यायः।

# देशकालवर्णनम्।

देव्युवाच। भगवन् योगतत्वज्ञ योगेऽत्यंतोपकारिणौ। प्राणायामात्प्रथमतो देशकालौ शृणोमि तौ ॥ १ ॥ श्रीश्रीमधुसूदन उवाच। प्रकृतिः पुरुषश्चैव देशकालावुभौ स्मृतौ। ब्रह्माण्डपिण्डरूपाभ्यां प्रकृतिर्देशनामिका ॥ २ ॥ योंऽतःपुरुषरूपेण स बहिः कालनामभाक्। तदात्मकमिदं सर्वं योगदृष्ट्या विविच्यते ॥ ३ ॥ तमेव देशं सेवेत तं कालं तामवस्थितिं। तानेव भोगान्भुञ्जीत मनो यत्र प्रसीदति ॥ ४ ॥ तथाऽपि तव तुष्ट्यर्थं तयोरूपं तु कथ्यते। तयोस्तु पुरुषं पूर्वं कालं वक्ष्यामि

---

१ श्रीमद्भागवते। २ तत्र कालस्तु पितृरूपः "जन्यानां जनकः कालः" इतिशास्त्रात्। तथा देशरूपा जननी "जननी जन्मभूमिश्च" इत्यादिशास्त्रात्। एवं च कालसेवा तु पितृसेवा स्वस्वजन्मदेशसेवा मातृसेवा। न च देहस्यदेशत्वेन वक्ष्यमाणत्वाद्देहसेवा कार्येति वाच्यं योगांगानुष्ठानविषयत्वेनैव देहस्य देशत्वेन विवक्षिततत्वात्। तथा च मातुः स्वजन्मददेशस्यार्थे स्वात्मार्पणांतसद्भक्त्या तत्पुत्रवर्गेण भाव्यं। अत एव सर्वोऽपि भारतोत्कर्षाध्यायोऽभिहित इति ज्ञेयम् ॥

शाश्वतम् ॥ ५ ॥ चरमः सद्विशेषाणामनेकोऽसंयुतः सदा । परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥ ६ ॥ सत एव पदार्थस्य स्वरूपावस्थितस्य यत् । कैवल्यं परममहानविशेषो निरन्तरः॥७॥ एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तमे । संस्थानभुक्त्या भगवानव्यक्तो व्यक्तभुग्विभुः ॥ ८ ॥ स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् । सतोऽविशेषभुग्यस्तु स कालः परमो महान्[२] ॥ ९ ॥ काष्ठा निमेषा दश पंच चैव त्रिंशत्तु काष्ठा गणयेत्कलां तां । त्रिंशत्कलश्चापि भवेन्मुहूर्तो भागः कलाया दशमश्च यः स्यात् ॥१०॥ त्रिंशन्मुहूर्तं तु भवेदहश्च रात्रिश्च संख्या मुनिभिः प्रणीता । मासः स्मृतो रात्र्यहनी च त्रिंशत्संवत्सरो द्वादशमास उक्तः ॥ ११ ॥ संवत्सरं द्वे त्वयने वदन्ति संख्याविदो दक्षिणमुत्तरं च ॥ १२ ॥ अहोरात्रे विभजते सूर्य्यो मानुषलौकिके । रात्रिः स्वप्नाय भूतानां चेष्टायै कर्मणामहः ॥ १३ ॥ पित्र्ये रात्र्यहनी मासः प्रविभागस्तयोः पुनः । शुक्लोहः कर्मचेष्टायां कृष्णः स्वप्नाय शर्वरी ॥ १४ ॥ दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः । अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनं ॥ १५ ॥ ये ते रात्र्यहनी पूर्वं कीर्तिते जीवलौकिके । तयोः संख्याय वर्षाग्रं ब्राह्मे वक्ष्याम्यहः क्षये ॥ १६ ॥ पृथक् सं-

---

१ अत एव "कालज्ञानं प्रवक्ष्यामि लगधस्य महात्मनः । विप्राणां सम्मतं लोके यज्ञकालार्थसिद्धये ॥ यथा शिखा मयूराणां नागानां मणयो यथा । तद्वद्वेदांगशास्त्राणां गणितं मूर्ध्नि संस्थितम् ॥" इत्यादि वेदांगज्योतिषम् । "वेदांगमग्रमखिलं ज्योतिषां गतिकारणम् ॥ " इतिसूर्यसिद्धान्तः । " ज्योतिश्चक्रे तु लोकस्य सर्वस्योक्तं शुभाशुभं । ज्योतिर्ज्ञानं तु यो वेद स याति परमां गतिम् ॥ " इति पूज्यपादमहर्षिगर्गः । एवं च कालतद्भाव्यमानार्थज्ञानाय ज्योतिःशास्त्रं गणितफलितरूपेणात्युपकारकं भवति एवं संयमद्वारा अपरोक्षत्वेन साक्षादनुभूयमानानां कालभावितानामर्थानां विज्ञानं कालज्ञानं प्रथमं; लौकिकव्यावहारिकाणां कालभावितानामर्थानां सूक्ष्मेक्षिकयाशास्त्रेतिहासादिना यज्ज्ञानं कालज्ञानं तद्द्वितीयम् उभयमपि कालज्ञानं क्रमेण विचक्षणैरवश्यमेव सदैव संपाद्यम् । २ इति श्रीमद्भागवतम् ।

वत्सराग्राणि प्रवक्ष्याम्यनुपूर्वशः । कृते त्रेतायुगे चैव द्वापरे च कलौ तथा ॥ १७॥ चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगं । तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ॥ १८ ॥ इतरेषु ससंध्येषु सन्ध्यांशेषु ततस्त्रिषु । एकपादेन हीयंते सहस्राणि शतानि च॥१९॥एतां द्वादशसाहस्रीं युगाख्यां कवयो विदुः । सहस्रपरिवर्तं तद्ब्राह्मं दिवसमुच्यते ॥ २० ॥ रात्रिमेतावतीं चैव तदादौ विश्वमीश्वरः । प्रलये ध्यानमाविश्य सुप्त्वा सोंऽते विबुद्ध्यते ॥ २१॥ सहस्रयुगपर्यंतमहर्यद्ब्रह्मणो विदुः । रात्रिं युगसहस्रांतां तेऽहोरात्रविदो जनाः ॥ २२ ॥ प्रतिबुद्धो विकुरुते ब्रह्मा क्षय्यं क्षपाक्षये । सृजते च महद्भूतं तस्माद्व्यक्तात्मकं मनः ॥ २३ ॥ द्विपरार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः । तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय वै ॥ २४ ॥ एष प्राकृतिको देवि प्रलयो यत्र लीयते । आण्डकोशस्तु संघातो विघात उपसादिते ॥ २५ ॥ कालाग्नावाहितं घोरे गुह्ये सततगेऽक्षरे । न चात्र परिहारोऽस्ति कालस्पृष्टस्य कस्य चित् ॥ २६ ॥ सूक्ष्माणां महतां चैव भूतानां परिपच्यताम् । अनीशस्याप्रमत्तस्य भूतानि पचतः सदा ॥ २७ ॥ अनिवृत्तस्य कालस्य क्षयं प्राप्तो न मुच्यते । अप्रमत्तः प्रमत्तेषु कालो जागर्ति देहिषु ॥ २८ ॥ कालोऽयं भगवान् विष्णुरनन्तः परमेश्वरः । तद्वेत्ता पूज्यते सम्यक् पूज्यः कोऽन्यस्ततो मतः ॥ ॥ २९ ॥ केचित्कर्म वदंत्येनं स्वभावमपरे विदुः । एके कालं परे दैवं पुंसः काममुतापरे ॥ ३० ॥ एवं संक्षेपतस्तूक्तं कालज्ञानं तवानघे । अधुना देशविज्ञानं वर्णयामि सुसाधनम् ॥ ३१ ॥ प्रकृतेर्मंडलं यत्तद्ब्रह्मांडं तत्समष्टितः । तदेव पिंडरूपेण प्रोच्यते व्यष्टिनामतः ॥ ३२ ॥ अनंतत्वात्तयोः किंचित्पिंडरूपं तु वर्ण्यते । यतस्तच्छोधनाद्योगसाधनोपकृतिर्भवेत् ॥ ३३ ॥ अत्र कर्म-

१ इति श्रीमन्महाभारतम् । २ श्रीमद्भागवतम् ॥

फलं चात्र ज्ञानं चात्र प्रतिष्ठितं । भास्तमः सत्यमनृतं बंधो
मोक्षः प्रतिष्ठितः ॥ ३४ ॥ प्रकृतिः पुरुषश्चैव ब्रह्मा विष्णुर्महे-
श्वरः । ऋषयो मुनयः सर्वे नक्षत्राणि ग्रहास्तथा ॥३५ ॥ पुण्य-
तीर्थानि पीठानि भ्रमंतौ शशिभास्करौ । त्रैलोक्ये यानि भूता-
नि तानि सर्वाणि देहतः ॥ ३६ ॥ नृदेहमाद्यं सुलभं सुदुर्लभं
प्लवं सुकल्पं गुरुकर्णधारम् । ईशानुकूलेन नभस्वतेरितं पुमान्भ-
वाब्धिं न तरेत्स आत्महा ॥ ३७ ॥ शरीरं तावदेवं हि षण्णवत्य-
ङ्गुलात्मकम् । विद्ध्येतत्सर्व्वजन्तूनां स्वाङ्गुलीभिरिति प्रिये॥३८॥
शरीरादधिकः प्राणो द्वादशाङ्गुलमानतः । चतुर्द्दशाङ्गुलं केचिद्वद-

१ पुरुषार्थसाधने हि साधकतमो देह एव। स च स्थूलसूक्ष्मभेदेन द्विधाऽपि श्रीमत्पूज्यपादपतंजल्यादिमहर्षिभिरायुर्वेदप्रदर्शनेन स्थूलो योगशास्त्रनिदर्शनेन सूक्ष्मश्च संशोध्यते। पूर्वानंतर एवापर इति पूर्वस्यस्थूलस्य विशुद्धौ समुपयुज्यते सर्वोप्यायुर्वेदसमुदायः । अत एव "हिताहितसुखं दुःखमायुस्तस्य हिताहितम् । मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते ॥ तस्यायुषः पुण्यतमो वेदो वेदविदां मतः । वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितः ॥ सत्वमात्मा शरीरं च त्रयमेतत्त्रिदंडवत् । लोकस्तिष्ठति संयोगात्तत्र सर्वं प्रतिष्ठितम्" ॥ इति श्रीचरकसंहितायां । "सनातनत्वाद्वेदानामक्षरत्वात्तथैव च । तथा दृष्टफलत्वाच्च हितत्वादपि देहिनां ॥ वाक्समूहार्थविस्तारात्पूजितत्वाच्च देहिभिः । चिकित्सितात्पुण्यतमं न किं चिदपि शुश्रुम" इति श्रीसुश्रुतः । तथा च पूर्वं वैद्यकेन तद्विशुध्यासूक्ष्मदेहशुद्ध्यै योगोपायेष्वपि भवत्यधिकार इति तत्वं । २ अत एव "त्रैलोक्ये यानि भूतानि तानि सर्वाणि देहतः । मेरुं संवेष्ट्य सर्वत्र व्यवहारः प्रवर्तते" इति शिवसंहितायाम् । "श्रीपर्वतः शिरस्थाने केदारं तु ललाटके । वाराणसी महाप्राज्ञ भ्रुवोर्घ्राणस्य मध्यमे ॥ भ्रुवोर्घ्राणस्य यः संधिरिति जाबालकी श्रुतिः । कुरुक्षेत्रं कुचस्थाने प्रयागो हृत्सरोरुहे॥ चिदम्बरं च हृन्मध्य आधारः कमलालयः॥ आत्मस्थं तीर्थमुत्सृज्य बहिस्तीर्थानि यो व्रजेत् । करस्थं स महारत्नं त्यक्त्वा काचं विमार्गति" इत्यादि सूतसंहितायाम् । देहतः देहे इति देहतः । ३ श्रीमद्भागवतम् । ४ प्राणशब्देन स्थूलप्राणवायुः सूक्ष्मा प्राणशक्तिश्चेति द्वयमेव प्रतीयते । दर्शनशास्त्रेषु प्राणसम्बन्धीयविस्तृतविवरणपरेषु प्राणशब्देनातिसूक्ष्मजीवनशक्तिरेव गम्यते । वस्तुतस्तु स्थूलसूक्ष्मभेदात्संगत्यनुसारतः प्राणशब्देन क्वचित्प्राणवायुः क्वचिद्वा प्राणशक्तिश्च बोद्धव्या । विशेषविवेचनं तु सांख्यदर्शने द्रष्टव्यम् । अत एव प्राणशक्तिरूपस्य " प्राणानां ग्रन्थिरासि रुद्रो माविशान्तक" इति क्वचित् रुद्रनाम्ना क्वचिच्च "ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्याति । मध्ये वामनमासीनं विश्वेदेवा उपासते ॥ न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवति यस्मिन्नेतावुपाश्रितौ" ॥ इत्यत्र वामननाम्ना प्राणनशक्तिः उच्यते श्रुत्या । अयं सर्वोप्यध्यायसंग्रहः श्रीमत्पूज्यपादभगवद्योगियाज्ञवल्क्यमहर्षिमतानुगृहीत एव ज्ञेयः ॥

न्ति मुनिपुङ्गवाः। द्वादशाङ्गुलमेवेति याज्ञवल्क्यमतं शुभम्॥३९॥ आत्मस्थमनिलं विद्वानात्मस्थेनैव वन्हिना। योगाभ्यासेन यः कुर्य्यात्समं वा न्यूनमेव वा[1]। स नरो ब्रह्मविच्छ्रेष्ठः स पूज्यो योगवित्तमः॥ ४०॥ आत्मस्थवन्हिनैव त्वं योगजेन द्विजोत्तमे। आत्मस्थं मातरिश्वानं योगाभ्यासेन निर्ज्जय॥ ४१॥ देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम्। त्रिकोणं मनुजानान्तु चतुरस्त्रं चतुष्पदाम्॥४२॥ मण्डलं तत्पतङ्गानां सत्यमेतद्ब्रवीमि ते। तन्मध्ये तु शिखी सूक्ष्मः सदा तिष्ठति पावकः॥ ४३॥ देहमध्येऽत्र कुत्रेति शंका चेत्तर्हि तच्छृणु। गुदाद्धि द्व्यङ्गुलादूर्ध्वमधो मेढ्राच्च द्व्यङ्गुलात्॥ ४४॥ देहमध्यं तयोर्मध्ये मनुष्याणामितीरितम्। चतुष्पदान्तु हृन्मध्यं तिरश्चान्तुन्दमध्यमम्॥ ४५॥ कन्दस्थानं मनुष्याणां देहमध्यान्नवाङ्गुलम्। चतुरङ्गुलमुत्सेधमायामन्तु तथाविधम्॥ अण्डाकृतिवदाकारं भूषितं चासृगादिभिः[2]॥ ४६॥ चतुष्पदां तिरश्चाञ्च जीवानान्तुन्दमध्यमम्। तन्मध्ये नाभिरित्युक्तो नाभौ चक्रसमुद्भवः[3]॥ ४७॥ द्वादशारयुतं तच्च तेन देहः प्रतिष्ठितः। चक्रेऽस्मिन् भ्रमते जीवः पुण्यपापप्रचोदितः॥ ४८॥ तन्तु पञ्जरमध्यस्थो यथा भ्रमति लूतकः। जीवश्च मूलचक्रेऽस्मिन्नधः प्राणश्चरत्यसौ॥ ४९॥ प्राणारूढो भवेज्जीवः सर्व्वदेहेषु सर्व्वदा। तस्योर्ध्वं कुण्डलीस्थानं नाभेस्तिर्य्यग-

---

१ न्यूनतायां सञ्जातायां क्रमशस्तन्नाशे समता संजायते अत एवात्र "समम्वा न्यूनमेव वा" इत्युक्तम्। साधनावस्थासु क्रमशो न्यूनतायामापद्यमानायामपि सिद्धौ सत्यां पूर्णसमतालाभः संपद्यते। २ सर्वाण्येतानि शरीरस्थानानि योगशास्त्रोक्तयुक्त्यैव द्रष्टुं शक्यंते। आत्मज्ञानज्योतिषि विकाशमाप्ते एव साधको निगूढस्थानान्येतानि द्रष्टुं समर्थो भवति। पाश्चात्यविज्ञानविदोप्येतत्कथयन्ति सूक्ष्मा शरीरतत्वविद्येति ( मायन्यूट् अनॉटर्मा ) नैव कदाचित्पूर्णतां प्राप्स्यतीति। वस्तुतस्तु सूक्ष्मतमपदार्थसमूहाः नैव चक्षुषा दर्शनयन्त्रेण वा केनचिद्द्रष्टुं शक्यंते। ३ नाभिरिव नाभिर्न तु प्रसिद्धोदरमध्यगो नाभिः किं तु नाभिकोशतुल्यः।

धोर्ध्वतः ॥ ५० ॥ अष्टप्रकृतिरूपा सा अष्टधा कुण्डलाकृतिः । यथावद्वायुसञ्चारं तथान्नादीनि नित्यशः ॥ ५१ ॥ परितः कन्दपार्श्वेषु निरुध्यैवं सदा स्थिता । मुखेनैव समावेष्ट्य ब्रह्मरध्रमुखं गता ॥ ५२ ॥ योगकाले त्वपानेन प्रबोधं याति साग्निना । स्फुरन्त्याहृदयाकाशान्नागरूपा महोज्ज्वला ॥ ५३ ॥ वायुर्वायुसखेनैव ततो याति सुषुम्नया । कन्दमध्ये स्थिता नाडी सुषुम्नेति प्रकीर्तिता ॥ ५४ ॥ तिष्ठन्ति परितः सर्व्वाश्चक्रेऽस्मिन्नाडिसंज्ञिकाः । नाडीनामपि सर्व्वासां मुख्या देवि ! चतुर्द्दश ॥ ५५ ॥ इडा च पिङ्गला चैव सुषुम्ना च सरस्वती[2] । वारुणी चैव पूषा च हस्तिजिह्वा यशस्विनी ॥ ५६ ॥ विश्वोदरी कुहूश्चैव शङ्खिनी च पयस्विनी । अलम्बुषा च गान्धारी मुख्याश्चैताश्चतुर्द्दश ॥ ५७ ॥ तासां मुख्यतमास्तिस्रस्तिसृष्वेकोत्तमोत्तमा । मुक्तिमार्गेति सा प्रोक्ता सुषुम्ना विश्वधारिणी[3] ॥ ५८ ॥ कन्दस्य मध्यमे देवि सुषुम्ना च प्रतिष्ठिता । पृष्ठमध्ये स्थितेनास्थ्ना सह मूर्ध्नि व्यवस्थिता ॥५९॥ मुक्तिमार्गे सुषुम्ना सा ब्रह्मरन्ध्रे प्रकीर्त्तिता । अव्यक्ता सा च विज्ञेया सूक्ष्मा सा वैष्णवी स्मृता[4] ॥ ६० ॥ इडा च पिङ्गला चैव तस्याः सव्ये च दक्षिणे । इडा तस्याः स्थिता सव्ये पिङ्गला दक्षिणे तथा ॥ ६१ ॥ इडायां पिङ्गलायाञ्च चरतश्चन्द्र-

---

१ एषा हि नाडी सर्वश्रेष्ठा । अभ्यन्तरमेवास्या ग्रन्थिरूपेण षट् चक्राणि विद्यन्ते यानि हि कुंडलिनीशक्तेरूर्ध्वगमनमार्गस्य षड्द्वारस्वरूपाणि ज्ञातव्यानि । अत एव "ऊर्ध्वगा नाडी सुषुम्नाख्या" इति मै० श्रुतिः । "तत्र नाडी सुषुम्ना तु" । इति क्षु० श्रुतिः । "तत्र निहितषट्चक्रम्" । इत्यादि श्रुतिः । २ अत एव "सुषुम्नायाः शिवो देव इडाया देवता हरिः ।। पिंगलाया विरिंचिः स्यात्सरस्वत्या विराण्मुने ॥ " इत्यादि श्रीसूतसंहितायाम् । ३ श्रीगुरोरुपदेशेनैव एतेषां सूक्ष्मनाडीसमूहानां संपूर्णं विवरणं परिज्ञातुं शक्यते, योगसाधनेन चान्तर्दृष्टौ समुत्पन्नायां नाडीनामेतासामाकारादयः सम्यगेव दृष्टिगोचरा भवन्ति । ४ अत एव "शतञ्चैका च हृदयस्यनाड्यस्तासां मूर्द्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ति" ॥ इतिश्रुतिः ॥

भास्करौ । इडायां चन्द्रमा ज्ञेयः पिङ्गलायां रविः स्मृतः ॥६२॥ चन्द्रस्तामस इत्युक्तः सूर्य्यो राजस उच्यते । विषमार्गो रवेर्मार्गः सोममार्गोऽमृतं स्मृतम् ॥६३॥ तावेव दधतः सर्व्वं कालं रात्रिन्दिवात्मकम् । भोक्री सुषुम्ना कालस्य गुह्यमेतदुदाहृतम्॥६४॥ एतास्त्वन्याः समुत्पन्नाः शिरास्त्वन्याश्च तास्वपि । यथाश्वत्थदले तद्वत्पद्मपत्रेषु वा शिराः । नाडीष्वेतासु सर्व्वासु विज्ञातव्यास्तपोधने ॥ ६५ ॥ प्राणोऽपानः समानश्चोदानो व्यानस्तथैव च । नागः कूर्म्मश्च कृकरो देवदत्तो धनञ्जयः ॥ ६६ ॥ एते नाडीषु सर्व्वासु चरन्ति दश वायवः । एतेषु वायवः पञ्च मुख्याः प्राणादयः स्मृताः ॥ ६७ ॥ तेषु मुख्यतमावेतौ प्राणापानौ नरोत्तमे । प्राण एवैतयोर्मुख्यः सर्व्वप्राणभृतां सदा ॥ ६८॥ आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यमे । प्राणा लयमिति प्राहुः पादाङ्गुष्ठे च के चन ॥ ६९ ॥ अधश्चोर्ध्वश्च कुण्डल्याः परितः प्राणसंज्ञकः । छन्नेषु तेषु गात्रेषु प्रकाशयति दीपवत् ॥ ७० ॥ व्यानः श्रोत्राक्षिमध्ये च कृकाट्यां गुल्फयोरपि । घ्राणे गले स्फिचौ देशे तिष्ठत्यत्र न संशयः ॥ ७१ ॥ अपाननिलयं केचिद्गुदमेढ्रोरुजानुषु । उदरे वृषणे कट्यां जङ्घे नाभौ वदन्ति हि ॥ ॥ ७२ ॥ गुदाग्न्याधारयोस्तिष्ठन्मध्येऽपानः प्रभञ्जनः । स्थानेष्वेतेषु सततं प्रकाशयति दीपवत् ॥ ७३ ॥ उदानः सर्व्वसन्धिस्थः पादयोर्हस्तयोरपि । समानः सर्व्वगात्रेषु सर्व्वं व्याप्य व्य-

---

१ अत एव "इडा रक्षतु वामेन पिङ्गला दक्षिणेन तु" । इत्यादि क्षु० श्रुतिः । २ अत एव "एषा नाड्यान्न बहुम्" इति मै० श्रुतिः । "नाड्यो द्वासप्ततिः सहस्राणि" । इति बृ० श्रुतिः । ३ अत एव "योऽस्य प्राङ्सुषिः स प्राणः" "योऽस्य दक्षिणसुषिः स व्यानः" "योऽस्य प्रत्यङ्सुषिः सोऽपानः" "योऽस्योदङ्सुषिः स समानः" "योऽशितपीते समं नयतीति समानः" "अथ योऽस्योर्द्ध्वः स्युषः स उदानः" "हृदि प्राणाः प्रतिष्ठिताः" "यद्वै प्राणिति स प्राणः" "बहिरस्तं गते प्राणे" "ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति" इत्यादि श्रुतिः ।

वस्थितः ॥ ७४ ॥ भुक्तं सर्व्वं रसं गात्रे व्यापयन् वह्निना सह। द्वासप्ततिसहस्रेषु नाडीमार्गेषु सञ्चरन् ॥ ७५ ॥ समानवायुरेवैकः सर्व्वं व्याप्य व्यवस्थितः। अग्निभिः सह सर्व्वत्र साङ्गोपाङ्गकलेवरे ॥ ७६ ॥ नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः। तुन्दस्थं जलमन्नञ्च रसानि च समीकृतम् ॥ ७७ ॥ तुन्दमध्ये गतः प्राणस्तानि कुर्य्यात् पृथक् पृथक्। पुनरग्नौ जलं स्थाप्य अन्नादीनि जलोपरि ॥ ७८ ॥ स्वयं ह्यपानः सम्प्राप्य तेनैव सह मारुतः। प्रयाति ज्वलनं यत्र देहमध्यगतं पुनः ॥ ७९ ॥ वायुना दीपितो वह्निरपानेन शनैः शनैः। ततो ज्वलति विप्रेन्द्रे स्वकुले देहमध्यमे ॥ ८० ॥ ज्वालाभिर्ज्वलितस्तत्र प्राणेन प्रेरितस्ततः। जलमत्युष्णमकरोत्कोष्ठमध्यगतं तदा ॥ ८१ ॥ अन्नं व्यञ्जनसंयुक्तं जलोपरि समर्पितम्। ततः सुपक्वमकरोद्वह्निः सन्तप्तवारिणा ॥ ८२ ॥ स्वेदमूत्रे जलं स्यातां वीर्य्यरूपं रसो भवेत्। पुरीषमन्नं स्याद्देवि प्राणः कुर्य्यात् पृथक् पृथक् ॥ ॥ ८३ ॥ समानवायुना सार्द्धं रसं सर्व्वासु नाडिसु। व्यापयञ्छ्वासरूपेण देहे चरति मारुतः ॥ ८४ ॥ व्योमरन्ध्रैश्च नवभिर्विण्मूत्राणां विसर्ज्जनम्। कुर्व्वन्ति वायवः सर्व्वे शरीरेषु शरीरिणाम् ॥ ८५ ॥ निश्वासोच्छ्वासरूपेण प्राणकर्म्म समीरितम्। अपानवायोः कर्म्मैतद्विण्मूत्रादिविसर्ज्जनम् ॥ ८६ ॥ हानोपादानचेष्टादि व्यानकर्मेति चेष्यते। उदानकर्म्म तच्चोक्तं देहस्योन्नयनादि यत् ॥ ८७ ॥ पोषणादि समानस्य शरीरे कर्म्म कीर्तितम्। उद्गारादि गुणो यस्तु नागकर्म्म समीरितम् ॥ ८८ ॥ निमीलनादि कूर्म्मस्य क्षुत्तृष्णे कृकरस्य च। देवदत्तस्य विप्रेन्द्रे तन्द्राकर्म्मेति कीर्त्तितम्। धनञ्जयस्य शोषादि सर्व्वं कर्म्म प्रकीर्त्तितम् ॥ ८९ ॥ ज्ञात्वैवं नाडिसंस्थानं वायूनां स्थानकर्म्म च। विधिनोक्तेन मार्गेण नाडीसंशोधनं कुरु ॥ ९० ॥ नाडीपुञ्जं स-

दासारं नरभावं महामुने । समुत्सृज्ज्याऽऽत्मनाऽऽत्मानमहमित्यवधारय ॥ ९१ ॥ [1]अशरीरं शरीरेषु महान्तं विभुमीश्वरम् । आनन्दमक्षरं साक्षान्मत्वा धीरो न शोचति ॥ ९२ ॥

इति श्रीश्रीमधुसूदनसंहितायां देशकालवर्णनं नाम द्वादशोऽध्यायः ॥

---

## त्रयोदशोऽध्यायः ।

# प्राणायामवर्णनम् ।

श्रीश्रीमधुसूदन उवाच ॥ प्राण[2]यामममथेदानीं प्रवक्ष्यामि विधानतः । समाहितमनास्त्वञ्च शृणु देवि वरानने ॥ १ ॥ प्राणापानसमायोगः प्राणायाम इतीरितः । प्राणायाम इति प्रोक्तो रेच[3]पूरककुम्भकैः ॥ २ ॥ वर्णत्रयात्मका ह्येते रेचपूरककुम्भकाः । य एष प्रणवः प्रोक्तः प्राणायामश्च तन्मयः ॥ ३ ॥ इडया वायुमारोप्य पूरयित्वोदरस्थितम् । शनैः षोडशभिर्मात्रैरकारं तत्र संस्मरेत्[4] ॥ ४ ॥ धारयेत्पूरितं पश्चाच्चतुः षष्ट्या च मात्रया ।

---

१ अत एव "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति" ॥ इत्यादि काठकश्रुतिः । २ इदानीं दशमाध्यायोक्तं योगांगेषु क्रमप्राप्तं प्राणायाममंगं वक्तुं पुनरुपक्रमते प्राणायाममिति संपूर्णेनाध्यायेन । ३ अत एव " तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" इति योगदर्शनम् । "प्राक्कूलेषु ततः स्थित्वा दर्भेषु सुसमाहितः । प्राणायामत्रयं कृत्वा ध्यायेत्संध्यामिति श्रुतिः" । इति पूज्यपाददेवर्षिबृहस्पतिः । " त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्य । ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्व्वाणि भयावहानि" । "प्राणान् प्रतिज्येह संयुक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत । दुष्टाश्वयुक्तमिव वाहमेनं विद्वान् मनो धारयेताऽप्रमत्तः" ॥ " समे शुचौ शर्करावन्हिवालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोऽनूकुले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत्" ॥ इत्यादि श्रुतिः ॥ "प्राणायामास्त्रयः प्रोक्ताः" । इति अमृ० श्रुतिः । ४ अस्मिन्प्रकरणे मात्रशब्दो मात्राशब्दार्थसमानार्थः पुल्लिंगोऽप्यार्षो दृश्यते ।

उकारमूर्त्तिमत्रापि संस्मरन् प्रणवं जपेत् ॥ ५ ॥ यावद्वा शक्यते तावद्धारणं जपसंयुतम् । पूरितं रेचयेत्पश्चात् प्राणं बाह्यानिलान्वितम् ॥ ६ ॥ शनैः पिङ्गलया देवि द्वात्रिंशन्मात्रया पुनः । प्राणायामो भवेदेवं पुनश्चैवं समभ्यसेत् ॥ ७ ॥ ततः पिङ्गलयापूर्य्य मात्रैः षोडशभिस्तथा । मकारमूर्त्तिमत्रापि संस्मरन् सुसमाहितः ॥ ८ ॥ पूरितं धारयेत् प्राणं प्रणवं विंशतिद्वयम् । जपेदत्र स्मरन् मूर्त्तिं मकाराख्यं महेश्वरम् ॥ ९ ॥ यावद्वा शक्यते पश्चाद्रेचयेदिडयानिलम् । एवमेनं पुनः कुर्य्यादिडया पूर्व्ववत् प्रिये[1] ॥ १० ॥ यद्वा प्राणं समारोप्य पूरयित्वोदरस्थितम् । प्रणवेन सुसंयुक्तां व्याहृतीभिश्च संयुताम् ॥ ११ ॥ गायत्रीं वा जपेद्विप्रः त्रिवारं प्राणसंयमे । पुनश्चैवं त्रिभिः कुर्य्यात्पुनश्चैवं त्रिसन्धिषु[2] ॥ १२ ॥ यद्वा समभ्यसेन्नित्यं वैदिकं लौकिकं तु वा । प्राणसंयमने पश्चाज्जपेत्तद्विंशतिद्वयम् ॥ १३ ॥ ब्राह्मणः श्रुतिसम्पन्नः स्वधर्म्मनिरतः सदा । स वैदिकं जपेन्मन्त्रं लौकिकं न कदा च न । केचिज्जनहितार्थाय जपमिच्छन्ति लौकिकम् ॥ १४ ॥ द्विजवत्क्षत्रियस्योक्तः प्राणसंयमने जपः ॥ १५ ॥ वैश्यानां धर्म्मयुक्तानां स्त्रीशूद्राणां तपस्विनाम् । प्राणसंयमने देवि मन्त्रं प्रणववर्जितम् ॥ १६ ॥ नमोऽन्तं शिवमन्त्रं वा वैष्णवं वा तथा बुधैः । मंत्रं समभ्यसेच्छूद्रो लौकिकं विधिपूर्व्वकम् ॥ १७ ॥ प्राणसंयमने स्त्री च जपेत्तद्विंशतिद्वयम् । न वैदिकं

---

१ जीवानामुद्धारार्थं योगाचार्य्यैरष्टविधा एव प्राणायामक्रियाः समुपदिष्टास्तासां विस्तृतविवृतिर्ग्रन्थकारप्रणीते "हठयोगसंहिता" ख्यग्रन्थे द्रष्टव्या । अष्टविधकुम्भकेष्वत्र "सहित" नामक एव सुखसाधनप्राणायामो वर्णितः स च पूज्यपादश्रीयोगियाज्ञवल्क्यमतानुसारेणेति बोध्यम् । २ नित्यकर्मानुष्ठायिनां साधकानामुपकारार्थन्त्रिसन्ध्योपासनाविधिप्रसंगादयं सुसाध्यप्राणायामविधिरपि सर्वसाधारणसुखसाध्यः प्रदर्शितः । तदन्यास्तु प्राणायामा बाहुल्येनगुरूपदेशमुपलभ्यैवानुष्ठेयाः । एवं यथा प्रकारेण वर्णितं प्राणनियमनं त्रिभिः प्राणायामैः कुर्यात् इत्यर्थः ।

जपेच्छूद्रः स्त्रियश्च न कदा च न। स्वाश्रमस्थस्य वैश्यस्य के-
चिदिच्छन्ति वैदिकम् ॥ १८ ॥ सन्ध्ययोरुभयोर्नित्यं गायत्र्या
प्रणवेन वा ॥ १९ ॥ प्राणसंयमनं कुर्य्याद्ब्राह्मणो वेदपारगः।
नित्यमेवं प्रकुर्व्वीत प्राणायामांस्तु षोडश ॥ २० ॥ अपि भ्रूण-
हनं मासात् पुनन्त्यहरहः कृताः। ऋतुत्रयात् पुनन्त्येवं जन्मा-
न्तरकृतादघात् ॥ २१ ॥ संवत्सरात् ब्रह्मवधात् तस्मान्नित्यं सम-
भ्यसेत्। योगाभ्यासरतास्त्वेवं स्वधर्मनिरताश्च ये। प्राणसंयम-
नेनैव सर्व्वे मुक्ता भवन्ति हि ॥ २२ ॥ बाह्यादापूरणं वायोरुदरे
पूरको हि सः ॥ २३ ॥ सम्पूर्णकुम्भवद्वायोर्धारणं कुम्भको
भवेत्। बहिर्यद्रेचनं वायोरुदराद्रेचकश्चसः ॥ २४ ॥ प्रस्वेद-
जनको यस्तु प्राणायामेषु सोऽधमः। कम्पे च मध्यमः प्रोक्त
उत्थाने चोत्तमो भवेत् ॥ २५ ॥ पूर्व्वं पूर्व्वं प्रकुर्व्वीत यावदुत्त-
मसम्भवः। सम्भवत्युत्तमे देवि प्राणायामे सुखी भवेत् ॥ २६ ॥
प्राणे निलीने तेनैवं देहस्यान्तस्ततोऽधिके। देहश्चोत्तिष्ठते तस्य
कृतासनपरिग्रहः ॥ २७ ॥ निःश्वासोच्छ्वासकौ तस्य न विद्येते
कथञ्चन। देहे यदापि तौ स्यातां स्वाभाविकगुणावुभौ ॥ २८॥
तथापि नश्यतस्तेन प्राणायामोत्तमेन हि। तयोर्नाशे समर्थः
स्यात्कर्त्तुं केवलकुम्भकम् ॥ २९ ॥ स्पर्शान् कृत्वा बहिर्बाह्यांश्च-
क्षुश्चैवान्तरे भ्रुवोः। प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारि-
णौ॥३०॥ यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः। विगतेच्छाभय-
क्रोधो यः सदा मुक्त एव सः[2] ॥ ३१ ॥ रेचकं पूरकं मुक्त्वा सुखं
यद्वायुधारणम्। प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः
॥३२॥ विरेच्याऽऽपूर्य्य यः कुर्य्यात्स वै सहितकुम्भकः। सहितं

१ तेनैव सहितनामकप्राणायामेनैवेत्यर्थः देहोत्थानमेव हि सहितप्राणायामस्योत्तमा सिद्धिः। २ श्रेष्ठतमस्य केवलिनाम्नः प्राणायामस्येयं भगवदुक्ता क्रियाऽत्युत्तमा। श्रीमद्भगवद्गीतास्थम्।

केवलञ्चापि कुम्भकं नित्यमभ्यसेत्॥३३॥यावत्केवलसिद्धिः स्यात्सहितं तावदभ्यसेत्॥३४॥ केवले कुम्भके सिद्धे रेचपूरकवर्ज्जिते । न तस्य दुर्लभं किञ्चित्त्रिषु लोकेषु विद्यते । मनोलयत्वं लभते पलितादि विनश्यति ॥ ३५ ॥ मुक्तेरयं महामार्गो मकाराख्योऽन्तरात्मनः । नादश्चोत्पादयत्येष कुम्भकः प्राणसंयमः ॥ ३६ ॥ प्राणसंयमनं नाम देहे प्राणविधारणम् । एष प्राणजयोपायः सर्व्वमृत्युप्रघातकः ॥ ३७ ॥ किञ्चित्प्राणजयोपायं तव वक्ष्यामि तत्वतः । बाह्यात्प्राणं समाकृष्य पूरयित्वोदरस्थितम् ॥ ३८ ॥ नाभिमध्ये च नासाग्रे पादाङ्गुष्ठे च यत्नतः । धारयेन्मनसा प्राणं सन्ध्याकाले च सर्व्वदा ॥ ३९ ॥ सर्व्वरोगविनिर्मुक्तो जीवेद्योगी जितश्रमः । नासाग्रे धारणं देवि वायोर्व्विजयकारणम् ॥ ४० ॥ सर्व्वरोगविनाशः स्यान्नाभिमध्ये तु धारयेत् । शरीरं लघुतां याति पादाङ्गुष्ठे तु धारणात् ॥ ४१ ॥ वायुं रसनयाकृष्य यः पिबेत्सततं नरः । श्रमदाहौ न तस्यास्तां नश्यन्ति व्याधयस्तथा॥ ४२ ॥ तथा यस्तु पिबेद्ब्राह्मे सन्ध्ययोरुभयोरपि । त्रिमासात्तस्य कल्याणि जायते वाक्सरस्वती ॥ ४३ ॥ षण्मासाभ्यासयोगेन महारोगैः प्रमुच्यते । आत्मन्यात्मानमारोप्य कुण्डल्यां यस्तु धारयेत् ॥४४॥ क्षयरोगादयः सर्व्वे नश्यन्तीत्यपरे विदुः । जिह्वायां वायुमानीय जिह्वामूले निरोधयेत् ॥ ४५ ॥ यः पिबेदमृतं विद्वान् सकलं भद्रमश्नुते । आत्मन्यात्मानमिडया समानीय भ्रुवोऽन्तरात् ॥ ४६ ॥ पिबेद्यस्त्रिदशाहारं व्याधिभिः स प्रमुच्यते । मासमेकं त्रिसन्ध्यासु जिह्वायां व्याप्य मारुतम् ॥ ४७ ॥ पिबेद्यस्तुन्दमध्ये वा नाभौ वा पार्श्वयोस्तु वा । नाडीभ्यां वायुमारोप्य नाभौ वा तुन्दपार्श्वयोः । घटिकैकां वहेद्यस्तु व्याधिभिः स विमुच्यते

१ एतानि योगसाधनानि योगकौशलसमूहाश्चोक्तरूपाः श्रीगुरोरुपदेशमुपलभ्यैवानुष्ठेयाः । भाषाप्रयुक्तशब्दमेव केवलमनुश्रुत्य साधनानां प्रकृतिस्वरूपन्नैव निर्णेतुं शक्यते ॥

॥ ४८ ॥ धारयेद्वत्सरार्द्धं वा तदर्द्धं वा प्रभञ्जनम् ॥ ४९ ॥ पिबेच्च-त्रिदशाहारं धारयेत्तुन्दमध्यमे । गुल्मप्लीहोदराश्चान्ये त्रिदोषज-नितास्तथा ॥ ५० ॥ तुन्दमध्यगता रोगाः सर्व्वे नश्यन्ति तस्य वै । ज्वराः सर्व्वे विनश्यन्ति विषाणि विविधान्यपि ॥ ५१ ॥ बहुनोक्तेन किं देवि पलितादि विनश्यति । एवं वायुजयोपायः प्राणस्य तु वरानने ॥ ५२ ॥ शक्यमासनमास्थाय समाहितमना-स्तथा । करणानि वशीकृत्य विषयेभ्यो बलात्सुधीः॥५३॥अपान-मूर्द्ध्वमाकृष्य प्रणवेन समाहितः । बस्तिमध्ये निरुध्यैवं प्राणं तत्रैव धारयेत् ॥५४ ॥ वह्निस्थाने निरुध्यैवं प्राणं तत्रैव धारयेत् । हस्ता-भ्यां रोधयेत्सम्यक् कर्णादिकरणानि च ॥ ५५ ॥ अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्ज्जनीभ्याञ्च चक्षुषी । नासापुटौ च मध्याभ्यां प्रच्छाद्य क-रणानि वै ॥ ५६ ॥ आनन्दाविर्भवं यावत्तावन्मूर्द्धनि धारयेत् । प्राणः प्रयात्यनेनैव ततस्त्वायुर्विघातकृत् ॥ ५७ ॥ ब्रह्मरन्ध्रे सुषु-म्नायां मृणालान्तरतन्तुवत् । नादोत्पत्तिस्त्वनेनैव शुद्धस्फटिकसं-न्निभा ॥ ५८ ॥ आमूर्ध्नोवर्त्तते नादो वीणादण्डवदुत्थितः । शङ्खध्वनिनिभस्त्वादौ मध्ये मेघध्वनिर्यथा ॥ ५९ ॥ व्योमरंध्रगते नादे गिरिप्रस्रवणं यथा । व्योमरन्ध्रे गते वायौ चित्ते चात्मनि संस्थिते । तदानन्दी भवेद्देही वायुस्तेन जितो भवेत्॥ ६० ॥ यो-गिनस्त्वपरे ह्यत्र वदन्ति समचेतसः। प्राणायामपराः पूता रेचपू-रकवर्जिताः ॥ ६१ ॥ दक्षिणेतरगुल्फेन सीवनीं पीडयेच्छनैः ॥ ॥६२॥ अधस्ताद्वलयोः सूक्ष्मां सव्योपरि च दक्षिणम् । जङ्घोर्व्वो-रन्तरे देवि निश्छिद्रं बन्धयेद्दृढम् ॥ ६३ ॥ समग्रीवशिरः कायः समपृष्ठः समोदरः । नेत्राभ्यां दक्षिणं गुल्फं लोकयन्नुपरि स्थितम्

१ योगाचार्यैः पञ्चविंशतिविधा योगमुद्रा वर्णिताः । सर्वाश्चैव ताः श्रीगुरोरुपदेशेनैव शि-क्षणीयाः । योगमुद्रास्वत्र योनिमुद्रैव वर्णिता सा हि नादज्योतिः प्रकाशिनी भृशमुपकारिणी च साधकानाम् । २ पादमिति शेषः ।

॥६४॥ धारयन्मनसा सार्द्धं व्याहरन् प्रणवाक्षरम् । आसनेऽनन्यधीरास्ते द्विजो रहसि नित्यशः॥६५॥ क्षत्रियश्च वरारोहे व्याहरन् प्रणवाक्षरम् । वैश्याः शूद्राः स्त्रियश्चान्ये योगाभ्यासरता नराः ॥ ॥६६॥ शैवं वा वैष्णवं वापि व्याहरन्नन्यमेव च । आसनेऽनन्यधीरास्ते दीपं हस्ते विलोकयेत् ॥ ६७ ॥ आयुर्विघातकृत्प्राणस्त्वनेनाग्निकुलं गतः । धूमध्वजजयं यावन्नाऽन्यधीरेवमभ्यसेत् ॥६८॥ धारणं कुर्व्वतस्तस्य वह्निस्थानं प्रभञ्जनः । देहश्च लघुतां याति जठराग्निश्च वर्द्धते ॥ ६९ ॥ दृष्टचिह्नस्ततस्तस्मिन्मनसारोप्य मारुतम् । मन्त्रमुच्चारयन् दीर्घं नाभिमध्ये निरोधयेत् ॥७०॥ यावन्मनोलयस्तस्मिन्नाभौ सवितृमण्डले । तावत्समभ्यसेद्विद्वान्नियतो नियतासनः ॥ ७१ ॥ एतेन नाभिमध्यस्थधारणेनैव मारुतः । कुण्डलीं याति वह्निस्तु दहत्यत्र न संशयः ॥ ७२ ॥ सन्तप्तो वह्निना तत्र वायुनातिप्रसारितः । प्रसार्य्य फणभृद्भोगं प्रबोधं याति तं तदा ॥७३॥ प्रबुद्धे संसरत्यस्मिन्नाभिमूले तु चक्रिणि । ब्रह्मरन्ध्रे सुषुम्नायां प्रयाति प्राणसंज्ञकः ॥७४॥ सम्प्राप्ते मारुते तस्मिन् सुषुम्नायां वरानने। मन्त्रमुच्चार्य्य मनसा हृन्मध्ये धारयेत्सुधीः ॥७५॥ हृदयात्कण्ठकूपे च भ्रुवोर्मध्ये तु धारयेत् । तस्मादारोप्य मनसा साग्निप्राणमनन्यधीः ॥ ७६ ॥ धारयेद्व्योम्नि विप्रेन्द्रे व्याहरन् प्रणवाक्षरम् । पूरयेन्मारुतं व्योम्नि साङ्गोपाङ्गकलेवरे। एवमात्मा च दीप्येत यथा व्योम्नि विकर्त्तनः ॥७७॥

---

१ प्राणायामोपयोगिन्यो योगशक्तिवृद्धिकर्यश्च मुद्रा बहुविधा महर्षिभिः परमपूज्यैः सम्वर्णिताः । तासां विस्तृतविवृतिर्ग्रन्थकारप्रणीते हठयोगसंहिताख्यग्रन्थे द्रष्टव्या । अत्र तु कानिचिदेवापराणि सुसाध्यमुद्राकौशलानि वर्णितानि । प्राणायामक्रियया हि साधकः शनैः प्राणवायुं वशमानेतुं शक्नोति । परन्तु सा योगाभ्यासशक्तिवर्द्धकत्वाद्योगिनां साधकानां विशिष्टहितसंपादिका भवति । इमाः प्राणायामसहायभूता मुद्रादिक्रियाः श्रीमत्प्रतीक्ष्यचरणमहर्षियोगियाज्ञवल्क्योक्ताः सगृहीताः ।

योगैः प्राणान् सिसृक्षुश्चेदेवं सम्यक् समाचरेत् ॥ ७८ ॥ एकाक्षरं परं ब्रह्म ध्यायन् प्रणवमीश्वरम् । संभिद्य मनसा मूर्द्धि ब्रह्मरन्ध्रं समाधिना ॥ ७९ ॥ प्राणमुन्मोचयेत्पश्चान्महाप्राणे च मध्यमे । देहातीते जगत्प्राणे शून्ये नित्ये ध्रुवे पदे॥८०॥ आकाशे परमानन्दे स्वात्मानं योजयेद्धिया । ब्रह्मैवासौ भवेद्देवि न पुनर्जन्मभाग्भवेत् ॥८१॥ तस्मात्त्वञ्च वरारोहे नित्यकर्म्म समाचर । सन्ध्याकालेषु वा नित्यं प्राणसंयमनं कुरु ॥८२॥ प्राणायामपराः सर्व्वे प्राणायामपरायणाः । प्राणायामैर्विशुद्धा ये ते यान्ति परमां गतिम् ॥८३॥ प्राणायामादृते नान्यत्तारकं नरकादपि । संसारार्णवमग्नानां तारकः प्राणसंयमः ॥ ८४ ॥ तस्मात्त्वं विधिमार्गेण नित्यकर्म्म समाचर ।विधिनोक्तेन मार्गेण प्राणसंयमनं कुरु॥८५॥

इति श्रीश्रीमधुसूदनसंहितायां प्राणायामवर्णनं नाम त्रयोदशोऽध्यायः ।

---

## चतुर्दशोऽध्यायः ।

# प्रत्याहारवर्णनम् ।

श्रीश्रीमधुसूदन उवाच ॥ उक्तान्येतानि चत्वारि योगाङ्गानि[1] द्विजोत्तमे । प्रत्याहारादि चत्वारि शृणुष्वाभ्यन्तराणि[2] च ॥ १ ॥ जीवानांमङ्गलार्थाय भक्तिमार्गोपदेशकैः । अङ्गानि यानि प्रोक्तानि

१ अत एव "शतञ्चैका हृदयस्य नाडयस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवंति" । "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति" । इत्यादि श्रुतिः । २ यद्यपि त्रयमंतरंगं पूर्वेभ्य इति धारणादित्रयस्यांतरंगत्वं योगसूत्रसंमतं तथापि "यदा संहरते चायं कूर्मोंगानीव सर्वशः । इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता" ॥ इत्यादि श्रीभगवदुक्तौ स्थितप्रज्ञत्वसाधकतमत्वं प्रत्यक्चेतनाधिगमस्य नांतरीयकत्वं प्रत्याहारादीनामिति श्रीमन्महर्षियोगियाज्ञवल्क्यसंमतमिति प्रत्याहारस्याप्यत्रांतरंगत्त्वं साधकमनुकूलयितुमुच्यते ।

गौण्या भक्तेर्हि साधने ॥ २ ॥ देवानां दर्शनं सेवा श्रवणं नामकीर्तनम् । अङ्गान्येतानि सर्व्वाणि प्रत्याहाराख्यसाधने ॥ ३ ॥ अन्तस्तत्त्वाधिकारे हि द्वारं पूजापरायणे । प्रत्याहारक्रिया सैषा योगजा परमा मता ॥ ४ ॥ इन्द्रियाणां विचरतां विषयेषु स्वभावतः । बलादाहरणं तेषां प्रत्याहारः स उच्यते ॥ ५ ॥ यद्यत्पश्यसि तत्सर्व्वं पश्येदात्मानमात्मनि । प्रत्याहारः स च प्रोक्तो योगविद्भिर्महात्मभिः ॥ ६ ॥ कर्म्माणि यानि नित्यानि विहितानि शरीरिणाम् । तेषामात्मन्यनुष्ठानं मनसा यद्बहिर्विना ॥ ७॥ प्रत्याहारो भवेत्सोऽपि योगसाधनमुत्तमम् । प्रत्याहारे प्रशस्तं यत्सेवितं योगिभिः सदा ॥ ८ ॥ अष्टादशसु यद्वायोर्मर्म्मस्थानेषु धारणम् । स्थानात्स्थानात्समाकृष्य प्रत्याहारो निगद्यते ॥ ९ ॥ अश्विनौ तु यथा ब्रूतां देवि देवभिषग्वरौ । मर्म्मस्थानानि सिद्ध्यर्थं शरीरे योगमोक्षयोः । तानि सर्वाणि वक्ष्यामि यथावच्छृणु सुव्रते ॥ १० ॥ पादाङ्गुष्ठौ च गुल्फौ च जङ्घामध्ये तथैव च ॥ ११ ॥ चित्यौ मूले च जान्वोश्च मध्ये चोरुद्वयस्य च । पायुमूलं तथा पश्चाद्देहमध्यश्च मेढ्रकम् ॥ १२ ॥ नाभिश्च हृदयं देवि कण्ठकूपस्तथैव च । तालुमूलश्च नासाया मूलं चाक्ष्णोश्च मण्डले ॥ १३ ॥ भ्रुवोर्मध्यं ललाटश्च मूर्द्धा च मुनिपुङ्गवे । मर्म्मस्थानानि चैतानि मानं तेषां पृथक् शृणु ॥ १४ ॥ पादाङ्गुष्ठाच्च गुल्फं हि सार्द्धाङ्गुलचतुष्टयम् । गुल्फाज्जङ्घाया मध्यन्तु विज्ञेयं तद्दशाङ्गुलम् ॥ १५ ॥ जङ्घामध्याच्चितेर्मूलं यत्तदेकादशाङ्गुलम् ।

१ अत एव "स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥" इति योगदर्शनम् । " प्राणायामः प्रत्याहारः " इति मै० श्रुतिः । २ देवानां तन्मूर्तिचित्रपटादीनाम् । ३ एतानि मर्मस्थानानि श्रीगुरोरुपदेशेनैव सम्यक् ज्ञातुं शक्यन्ते । क्रियासमूहश्च तेषु मुद्राभ्यासेनैव संसाध्यते । योगशास्त्रोक्तबहुविधासु प्रत्याहारक्रियास्वत्र कतिचिदेव सुखसाध्यक्रियाः संवर्णिताः ।

चितिमूलाद्वरारोहे जानु स्यादङ्गुलद्वयम् ॥ १६ ॥ जन्वोर्नवाङ्गुलं प्राहुरूरुमध्यं मुनीश्वराः । ऊरुमध्यात्तथा देवि पायुमूलं दशाङ्गुलम् ॥ १७ ॥ देहमध्यं तथा पायोर्मूलात्सार्द्धाङ्गुलद्वयम् । देहमध्यात्तथा मेढ्रं तद्वत्सार्द्धाङ्गुलद्वयम् ॥ १८ ॥ मेढ्रान्नाभिश्च विज्ञेया देवि सार्द्धदशाङ्गुलम् । चतुर्द्दशांगुलं नाभेः हृन्मध्यश्च वरानने ॥ १९ ॥ षडङ्गुलश्च हृन्मध्यात्कण्ठकूपं तथैव च । कण्ठकूपाच्च जिह्वाया मूलं स्याच्चतुरङ्गुलम् ॥ २० ॥ नासामूलं तु जिह्वाया मूलात्तु चतुरङ्गुलम् । नेत्रस्थानञ्च तन्मूलादर्द्धाङ्गुलमितीष्यते ॥ २१ ॥ तस्मादर्द्धाङ्गुलं विद्धि भ्रुवोरन्तरमात्मनः । ललाटाख्यं भ्रुवोर्मध्यादूर्द्ध्वं स्यादङ्गुलित्रयम् ॥ २२ ॥ ललाटाद्व्योमसंज्ञन्तु अङ्गुलित्रयमेव तु । स्थानेष्वेतेषु मनसा वायुमारोप्य धारयेत् ॥२३॥ स्थानात्स्थानात्समाकृष्य प्रत्याहारं प्रकुर्वतः । सर्व्वे रोगा विनश्यन्ति योगः सिध्यति तस्य वै ॥ २४ ॥ वदन्ति योगिनः केचिद्योगेषु कुशला नराः । प्रत्याहारं वरारोहे शृणु त्वं तद्वदाम्यहम् ॥ २५ ॥ सम्पूर्णकुम्भवद्वायुमङ्गुष्ठान्मूर्ध्नि मध्यतः । धारयन्ननिलं बुध्या प्राणायामप्रचोदितः ॥ २६ ॥ व्योमरन्ध्रात्समाकृष्य ललाटे धारयेत् पुनः । ललाटाद्वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत् ॥ २७ ॥ भ्रुवोर्मध्यात्तु जिह्वाया मूले प्राणं निरोधयेत् । जिह्वामूलात्समाकृष्य कण्ठमूले निरोधयेत् ॥ २८ ॥ कण्ठमूलात्तु हृन्मध्ये हृदयान्नाभिमध्यमे । नाभिमध्यात्पुनर्म्मेढ्रे मेढ्रात्तु देहमध्यमे ॥ २९ ॥ देहमध्याद्गुदे देवि गुदादेवोरुमूलके । ऊरुमूलात्तयोर्मध्ये तस्माज्जान्वोर्निरोधयेत् ॥ ३० ॥ चितिमूले च तं तस्माज्जङ्घयोर्म्मध्यमे तथा । जङ्घामध्यात्समाकृष्य गु-

ल्फमूले निरोधयेत् ॥ ३१॥ गुल्फादङ्गुष्ठयोर्देवि पादयोस्तन्निरोधयेत् । स्थानात्स्थानात्समाकृष्य यस्त्वेवं धारयेत्सुधीः । सर्व्वपापविशुद्धात्मा जीवेदाचन्द्रतारकम् ॥३२॥ एतत्तु योगसिद्ध्यर्थमगस्त्येनापि कीर्तितम्। प्रत्याहारेषु सर्व्वेषु प्रशस्तमिति योगिभिः ॥३३॥ नाडीभ्यां वायुमापूर्य्य कुण्डल्याः पार्श्वयोःक्षिपेत्।धारयेद्युगपत्सोऽपि भवरोगाद्विमुच्यते ॥ ३४ ॥ पूर्व्ववद्वायुमारोप्य हृदये व्योम्नि धारयेत् । सोऽपि याति वरारोहे परमात्मपदं नरः । व्याधयः किं पुनस्तस्य बाह्याभ्यन्तरवर्तिनः ॥ ३५ ॥ नासाभ्यां वायुमारोप्य पूरयित्वोदरस्थितम् । भ्रुवोर्मध्ये दृशौ पश्चात्समारोप्य समाहितः ॥३६॥ धारयेत्क्षणमात्रं यः सोऽपि याति परं पदम् ॥ ३७॥ भोजनान्ते श्मशानान्ते मैथुनान्ते च या मतिः । सा मतिः सर्व्वदा चेत्स्यात्को न मुच्येत बन्धनात् ॥ ३८ ॥ जगद्यद्दृश्यते सर्व्वं पश्येदात्मानमात्मनि।प्रत्याहारः स च प्रोक्तो योगविद्भिर्महात्मभिः ॥ ३९ ॥ किं पुनर्बहुनोक्तेन नित्यकर्म्म समाचरन् ॥ ४० ॥ आत्मनः प्राणमारोप्य भ्रुवोर्मध्यात्सुषुम्नया । यावन्मनोलयस्तस्मिन् तावत्संयमनं कुरु ॥४१ ॥ देव्युवाच ॥ भगवन् ब्रह्मविच्छ्रेष्ठ सर्व्वशास्त्रविशारद । केनोपायेन शुद्धाः स्युर्नाड्यो मे त्वं वद प्रभो ॥४२॥ इत्युक्तो ब्रह्मवादिन्या ब्रह्मविद्ब्राह्मणस्तदा । तां समालोक्य कृपया नाडीशुद्धिमभाषत ॥४३॥ श्रीश्रीमधुसूदन उवाच ॥ विध्युक्तकर्म्मसंयुक्तः कामसङ्कल्पवर्जितः ।यमैश्च नियमैर्युक्तः सर्व्वसङ्गविवर्जितः ॥४४॥ कृतविद्यो जितक्रोधः सत्यधर्म्मपरायणः ॥ ४५ ॥ स्वाश्रमस्थः सदाचारो विद्वद्भिश्च सुशिक्षितः। तपोवनं

१ दृष्टांतत्रिकेऽपि चित्तस्य पूर्वोपभुक्तविषयेभ्यो निवृत्तौ तदानीमेव पुनस्तेषु यथा संमुखीभवनं नानुभूयते तथा प्रत्याहारसंसिद्धौ सर्वदैव ताद्रूप्येणावस्थानं भवतीति प्रत्याहारफलम् । २ अत एव "मनसो निग्रहायत्तमभयं सर्वयोगिनाम् । दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च ॥ उपायेन निगृण्हीयाद्विक्षिप्तं कामभोगयोः । लये सम्बोधये च्चित्तं विक्षिप्तं शमयेत्पुनः ॥ सकषायं विजानीयात्समप्राप्तं न चालयेत्" । इत्यादि श्रुतिः ।

सुसंप्राप्य फलमूलोदकान्वितम् ॥ ४६ ॥ तत्र रम्ये शुचौ देशे ब्रह्मघोषसमन्विते । स्वधर्म्मनिरतैः शान्तैर्ब्रह्मविद्भिः समावृते ॥ ॥ ४७ ॥ वारिभिश्च सुसम्पूर्णे पुष्पैर्नानाविधैर्युते । फलमूलैश्च सम्पूर्णे सर्व्वकामफलप्रदे ॥४८ ॥ देवाश्रमे वा नद्यां वा ग्रामे वा नगरेषु वा । सुशोभनं मठं कृत्वा सर्व्वरक्षासमन्वितम् ॥४९॥ त्रिकालस्नानसंयुक्तः स्वधर्म्मनिरतः सदा। वेदान्तश्रवणं कुर्व्वंस्तस्मिन्योगं समभ्यसेत् ॥ ५० ॥ केचिद्वदन्ति मुनयस्तपःस्वाध्यायसंयुताः॥ ५१ ॥ निर्ज्जने निलये रम्ये वातातपविवर्ज्जिते । विध्युक्तकर्म्मसंयुक्तः शुचिर्भूत्वा समाहितः ॥ मन्त्रैर्न्यस्ततनुर्धीरः सितभस्मधरःसदा । मृदासनोपरि कुशान् समास्थायाथवाऽजिनम्॥ ॥५२ ॥ विनायकं सुसम्पूज्य फलमूलोदकादिभिः । इष्टदेवं गुरुं नत्वा तत आरभ्य चासनम् ॥ ५३ ॥ प्राङ्मुखोदङ्मुखो वापि जितासनगतः स्वयम्। समग्रीवशिरःकायः संवृत्तास्यः सुनिश्चलः ॥ ५४ ॥ नासाग्रदृक् सदा सम्यक् सव्ये न्यस्येतरं करम्। नासाग्रे शशभृद्बिम्बं ज्योत्स्नाजालविराजितम् ॥ ५५ ॥ सप्तमस्य तु वर्गस्य चतुर्थं बिन्दुसंयुतम् । स्रवन्तममृतं पश्यन्नेत्राभ्यां सुसमाहितः ॥५६॥ इडायां वायुमारोप्य पूरयित्वोदरं ततः । ततोऽग्निं देहमध्यस्थं ध्यायन् ज्वालावलीयुतम् ॥ ५७ ॥ रेफञ्च बिन्दुसंयुक्तमग्निमण्डलसंयुतम् । ध्यायन् विरेचयेत्पश्चान्मन्दं पिङ्गलया पुनः ॥५८॥ पुनः पिङ्गलयापूर्य्य प्राणं दक्षिणतः सुधीः । पुनश्च रेचयेद्धीमानिडया च शनैः शनैः ॥ ५९ ॥ त्रिचतुर्वत्सरं वापि त्रिचतुर्मासमेव च । षट्कृत्व आचरन्नित्यं रहस्येवं त्रिसन्धिषु ॥६०॥

१ नाडीशुद्धिसाधनार्थं हठयोगाचार्य्यैः स्थूलशरीरक्रिया एव प्राचुर्य्येणोपदिष्टाः । लययोगाचार्य्यैस्तु तदर्थमेव जपध्यानादिकं मानसक्रियाजातं समुपदिष्टम् । द्विविधमेवानुष्ठानमेतत् श्रीगुरोरुपदेशसापेक्षं ज्ञातव्यम् ।

नाडीशुद्धिमवाप्नोति पृथक्चिन्होपलक्षिताम्। शरीरलघुता दीप्ति-र्वह्नेर्जठरवर्तिनः ॥ ६१ ॥ नादाभिव्यक्तिरित्येतच्चिह्नं तत्सिद्धिसूचकम् । यावन्नैतानि सम्पश्येत्तावदेवं समभ्यसेत् ॥६२॥ ज्योतिषां सप्त भेदाः स्युर्नादानां भेदपञ्चकं । शास्त्रेषु कथितं पूर्वैर्योगिभिः सूक्ष्मदर्शिभिः ॥ ६३ ॥ नाडीशुद्धेश्च संसिद्धौ तत्प्रकाशः क्रमाद्भवेत् । नादानां ज्योतिषां चैव सर्व्वथा देवि सुव्रते॥६४॥ अतःपरं प्राणसिद्धिं प्रकुर्व्वन् साधकोत्तमः । षट्चक्रभेदने शक्तिं समाप्नोति दुरासदाम् ॥ ६५ ॥ फलिष्यतीति विश्वासः सिद्धेः प्रथमलक्षणम् । द्वितीयं श्रद्धया युक्तं तृतीयं गुरुपूजनम् ॥ ६६॥ चतुर्थं समताभावं पञ्चमं त्विन्द्रियग्रहः । षष्ठं च प्रमिताहारं सप्तमं नैव विद्यते ॥६७॥ सुखं योगासनं कृत्वा भवेयः सम्पुटाञ्जलिः । पुलकाङ्कितसर्व्वाङ्गः साश्रुनेत्रोऽतिदीनवत् ॥ ६८ ॥ इडां सुषुम्नां मध्यां च पिङ्गलां नलिनीं धुराम्। नाडीचक्रं च योगेन संनिरुध्य प्रयत्नतः ॥६९॥ मूलाधारं स्वाधिष्ठानं मणिपूरकमाहतम् । विशुद्धं परमाज्ञाख्यं षट्चक्रं च समभ्यसेत् ॥७०॥ गुदाद्व्यङ्गुलतश्चोर्ध्वं मेढ्रैकाङ्गुलतस्त्वधः । समं स्यात्पद्मकंदेन समत्वे चतुरङ्गुलम् ॥ ७१ ॥ पश्चिमाभिमुखी योनिर्गुदमेढ्रान्तरालजा । तत्र कन्दः समाख्यातस्तत्र स्यात्कुण्डली सदा ॥ ७२ ॥ संवेष्ट्य सकला नाडीः सार्द्धत्रिकुटिलाकृतिः । मुखे निवेश्य सा पुच्छं सुषुम्ना

१ हठलययोगेषु विशिष्टाचार्यैः साधकानां नाडीशुद्धिसाधनार्थं बहुविधमेव क्रियाजातं स्वग्रन्थेषु पृथगुपनद्धम् । हठयोगाचार्यैस्तु तत्साधनार्थं मुद्राविशेषाणां विशिष्टोपयोगिता प्रदर्शिता । तेषामेव मुद्रासमूहानां विस्तृतं विवरणं ग्रन्थकारप्रणीतायां हठयोगसंहितायां द्रष्टव्यम् । अत्र केवलमेकैव सुखसाधनक्रिया वर्णिता । २ एतदंतः सर्वोपि साधनोपदेशः श्रीमत्पूज्यचरणमहर्षियोगियाज्ञवल्क्यसंकथित एवास्मिन्नध्याये संकलितः । ३ श्रीशिवसारतंत्रम् । अत एव "तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत्" । "नीहारधूमार्कानिलानलानां खद्योतविद्युत्स्फटिकशशिनां । एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे" ॥इत्यादि श्रुतिः । "तेजो नादो ध्यानं विद्या" इत्यादि मु० श्रुतिः । ४ श्रीयोगेश्वरतंत्रम् ।

विवरे स्थिता॥७३॥सुप्ता नागोपमा ह्येषा स्फुरन्ती प्रभया स्वया। अहिवत्सन्धिसंस्थाना वाग्देवी बीजसंज्ञका ॥ ७४ ॥ आधारपद्म-मेतद्धि योनिर्यस्यास्ति कन्दतः[1]। परिस्फुरद्वादिसान्तचतुर्वर्णं चतुर्दलम् ॥ ७५ ॥ द्वितीयं तु सरोजं यल्लिङ्गमूले व्यवस्थितम् । तद्वादि लान्तषड्वर्णं परिभास्वरषड्दलम् ॥७६॥ स्वाधिष्ठानाऽ-भिधं तत्तु पङ्कजं शोणरूपकम्। तृतीयं पङ्कजं नाभौ मणिपूरक-संज्ञकम् ॥ ७७ ॥ दशारं डादिफान्तार्णं शोभितं हेमवर्णकम् । हृदयेऽनाहतं नाम चतुर्थं पङ्कजं भवेत् ॥७८॥ कादिठान्तार्णसं-स्थानं द्वादशच्छदशोभितम्। अतिशोणं वायुबीजं प्रसादस्थान-मीरितम् ॥ ७९ ॥ कण्ठस्थानस्थितं पद्मं विशुद्धं नाम पञ्चमम् । सुहेमाऽऽभं स्वरोपेतं षोडशच्छदशोभितम् ॥ ८० ॥ आज्ञापद्मं भ्रुवोर्मध्ये हक्षोपेतं द्विपत्रकम्। शरच्चन्द्रनिभं तत्राऽक्षरबीजं विजृ[2]-म्भितम्॥८१॥ योगसाधनमुख्यानामेतेषां साधनेन वै। क्रमेण षट् सिद्धयो हि प्राप्नुवन्ति न संशयः ॥८२॥ प्रतिभा प्रथमा सिद्धि-र्द्वितीया श्रवणा स्मृता। तृतीया वेदना देवि तुरीया चेह दर्शना। आस्वादा पंचमी प्रोक्ता वार्ता च षष्ठिका स्मृता ॥८३॥ बुद्धिर्वि-वेचना वेयं बुद्ध्यते बुद्धिरुच्यते। प्रतिभा प्रतिभावृत्तिः प्रति-भाव[3] इति स्थितिः ॥ ८४ ॥ सूक्ष्मेव्यवहितेऽतीते विप्रकृष्टे त्व-नागते। सर्व्वत्र सर्व्वदा ज्ञानं प्रतिभानुक्रमेण तु॥८५॥श्रवणा स-र्व्वशब्दानामप्रयत्नेन योगिनः।ह्रस्वदीर्घप्लुतादीनां गुह्यानां श्रव-णादपि ॥८६॥ स्पर्शस्याऽधिगमो यस्तु वेदना तूपपादिता। द-र्शना दिव्यरूपाणां दर्शनं चाऽप्रयत्नतः ॥ ८७ ॥ संविद्दिव्यरसे तस्मिन्नास्वादो ह्यप्रयत्नतः। वार्ता च दिव्यगन्धानां तन्मात्रा बुद्धिसंविदा। विन्दन्ते योगिनस्तस्मादाब्रह्मभुवनं[4] प्रिये ॥ ८८ ॥

१ कंदतः अग्रे अधः इति शेषः। २ इदं षट्चक्रवर्णनं श्रीशिवसंहितानुसारेण संगृहीतम्। ३ प्रतिभावो नाम विवेचनमंतराऽपि साक्षात्कृतार्थकथनम्। ४ सिद्धयश्चेमाः श्रीवसिष्ठतंत्रोक्ताः।

द्विदलध्यानमाहात्म्यं कथितुं नैव शक्यते। करोति पूर्णमभ्यासमाज्ञापद्मे विचक्षणः ॥ ८९ ॥ अणिमाद्यष्टसिद्धिं हि लभते योगनिष्ठितः। योगी बन्धाद्विमुच्येत स्वीयया प्रभया स्वयं ॥९०॥ अत ऊर्द्ध्वं दिव्यरूपं सहस्रारं सरोरुहम्। ब्रह्माण्डाख्यस्य देहस्य बाह्ये तिष्ठति मुक्तिदम् ॥ ९१ ॥ स्थानस्याऽस्य ज्ञानमात्रेण नृणां संसारेऽस्मिन्संभवो नैव भूयः। भूतग्रामं संतताभ्यासयोगात्कर्तुं हर्तुं स्याच्च शक्तिः समग्रा ॥ ९२ ॥

इति श्रीश्रीमधुसूदनसंहितायां प्रत्याहारवर्णनं नाम चतुर्दशोऽध्यायः।

## पंचदशोऽध्यायः।

# धारणावर्णनम्।



श्रीश्रीमधुसूदन उवाच॥अथेदानीं प्रवक्ष्यामि धारणा पञ्च तत्वतः। समाहितमनास्त्वं च शृणु देवि तपोधने॥१॥अधमोत्तमभेदेन धारणा द्विविधा भवेत्। आद्या स्थूला च सा प्रोक्ता साध्यते पूजनादिभिः ॥२॥ शालिग्रामादिमूर्तौ वा सर्व्वथा वाऽन्यविग्रहे। अन्या तु योगसाध्या सा सर्व्वोत्कृष्टा प्रगीयते ॥ ३॥ यमादिगुणयुक्तस्य मनसः स्थितिरात्मनि।धारणेत्युच्यते सद्भिः शास्त्रतात्पर्य्यवेदिभिः ॥ ४ ॥ अस्मिन् ब्रह्मपुरे देवि यदिदं हृदयाम्बुजम्। अस्मिन्नेवान्तराकाशे यद्बाह्याकाशधारणम् ॥५ ॥ इत्येषा धारणेत्युक्ता योगशास्त्रविशारदैः। तान्त्रिकैर्योगशास्त्रज्ञैर्विद्वद्भिश्च सूरि-

१ अत एव "देशबन्धश्चित्तस्य धारणा"। इति योगदर्शनम्। "पृथ्व्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते। न तस्य रोगो न जरा न दुःखं प्राप्तस्य योगाग्निमयं शरीरं ॥ लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादः स्वरसौष्ठवञ्च। गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति" ॥ इत्यादि श्रुतिः ॥

क्षितेः ॥६॥ धारणाः पञ्चधा प्रोक्तास्ताश्च सर्व्वाः पृथक् शृणु। भूमिरापस्तथा तेजो वायुराकाश एव च। एतेषु पञ्चदेवानां धारणात्पञ्चधेष्यते॥७॥ पादादि जानुपर्य्यन्तं पृथ्वीस्थानं प्रकीर्त्तितम् ॥ ८ ॥आजानोः पायुपर्य्यन्तमपां स्थानं प्रकीर्तितम्। आपायोर्हृदयान्तञ्च वह्निस्थानं प्रकीर्तितम् ॥ ९ ॥ आहृन्मध्याद्भ्रुवोर्मध्यं यावद्वायुकुलं स्मृतम्। आभ्रूमध्यात्तु मूर्द्धान्तमाकाशमिति चोच्यते ॥१०॥अत्र केचिद्वदन्त्यन्ये योगतत्वविचक्षणाः। आजानोर्नाभिपर्य्यन्तमपां स्थानमिति द्विजाः ॥११॥ नाभिमध्याद्गलान्तं यद्वह्निस्थानं तदुच्यते। आगलात्तु ललाटान्तं वायुस्थानमितीरितम्॥१२॥ ललाटाद्ब्रन्ध्रपर्य्यन्तमाकाशस्थानमुच्यते। अयुक्तमेतदित्युक्तं शास्त्रतात्पर्य्यवेदिभिः ॥ १३ ॥ यदि स्याज्ज्वलनस्थानं देहमध्ये वरानने। अयुक्तं कारणे वह्नौ कार्य्यरूपस्य संस्थितिः ॥ १४ ॥ कार्य्यकारणसंयोगात्कार्य्यहानिर्द्दृढं भवेत्। दृष्टं तत्कार्य्यरूपेषु मृदात्मकघटादिषु ॥१५॥ पृथिव्यां धारयेद्देवि ब्रह्माणं परमेष्ठिनम्।विष्णुमप्स्वनले रुद्रमीश्वरं वायुमण्डले।सदाशिवं तथा व्योम्नि धारयेत्सुसमाहितः ॥ १६ ॥ पृथिव्यां वायुमास्थाय लकारेण समन्वितम्। ध्यायेच्चतुर्भुजाकारं ब्रह्माणं सृष्टिकारणम् ॥ १७ ॥ धारयेत्पञ्च घटिकाः सर्व्वरोगैः प्रमुच्यते। पृथिव्यां वायुमारोप्य पृथिव्यां जयमाप्नुयात् ॥ १८ ॥ वारुणे वायुमारोप्य वकारेण समन्वितम्। स्मरेन्नारायणं सौम्यं चतुर्बाहुं शुचिस्मितम् ॥ १९ ॥ धारयेत्पञ्चघटिकाः सर्व्वपापैः प्रमुच्यते ॥ २० ॥ वह्नौ चानिलमारोप्य रेफाक्षरसमन्वितम्। त्र्यक्षं च वरदं रुद्रं चतुर्बाहुं जटाधरम् ॥२१॥ भस्मोज्ज्वलितसर्व्वाङ्गं सुप्रसन्नमनुस्मरेत्। धारयेत्प-

१ योगिनां प्रथमदशायामाभासज्ञानं पूर्णावस्थायाञ्च प्रत्यक्षज्ञानं इति द्विविधमेव ज्ञानं समुत्पद्यते। योगिनामाभासज्ञानवतां निश्चितज्ञानपरत्वबोधनार्थमेव भेदेनैवं ज्ञानं सम्वर्णितम्।

ञ्चघटिका वह्निनाऽसौ न दह्यते ॥ २२ ॥ मारुतं मरुतः स्थानं यकारेण समन्वितम् । ईश्वरं नादयुक्तं हि बालेन्दुधृतमौलिनम् ॥ २३ ॥ पञ्चवक्त्रयुतं सौम्यं दशबाहुं त्रिलोचनम् । सर्व्वायुधोद्यतकरं सर्व्वाभरणभूषितम् ॥ २४ ॥ उमार्द्धदेहं वरदं सर्व्वजीवहिते रतम् । धारयेत्पञ्चघटिका वायुवद्व्योमगो भवेत् ॥ २५ ॥ आकाशे वायुमारोप्य हकारोपरि शङ्करम् । बिन्दुरूपं महादेवं व्योमाकारं सदाशिवम् ॥ २६ ॥ शुद्धस्फटिकसङ्काशं सर्व्वकारणकारणम् । चिन्तयेन्मनसा नित्यं मुहूर्तमपि धारयेत् । स एव मुक्त इत्युक्तं तान्त्रिकेष्वपि शिक्षितैः ॥ २७ ॥ एतदुक्तं भवत्यत्र देवि ब्रह्मविदां वरे । ब्रह्मादिकार्य्यरूपाणि स्वे स्वे संहृत्य कारणे ॥ ॥ २८ ॥ तस्मिन् सदाशिवे प्राणं चित्तं चानीय कारणे । युक्तचित्तस्तदात्मानं योजयेत्परमेश्वरे ॥ २९ ॥ अस्मिन्नर्थे वदन्त्यन्ये योगिनो ब्रह्मवित्तराः । प्रणवेनैव कार्य्याणि स्वे स्वे संहृत्य कारणे ॥ ३० ॥ प्रणवस्य तु नादान्ते परमानन्दविग्रहम् ॥ ३१ ॥ ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । चेतसा तं प्रपश्यन्ति सन्तः संसारभेषजम् ॥ ३२ ॥ त्वं तस्मात्प्रणवेनैव प्राणायामैस्त्रिभिस्त्रिभिः । ब्रह्मादिकार्य्यरूपाणि स्वे स्वे संहृत्य कारणे । विशुद्धचेतसा पश्य नादान्ते ब्रह्म चिन्मयम् ॥ ३३ ॥ तस्मिन्नर्थे वदन्त्यन्ये योगिनो ब्रह्मवित्तराः ॥ ३४ ॥ भिषग्वरौ वरारोहे योगेशु परिनिष्ठितौ । शरीरं तावदेतत्तु पञ्चभूतात्मकं खलु ॥ ३५ ॥ तदेतत्तु वरारोहे वातपित्तकफात्मकम् । वातात्मकानां सर्व्वेषां योगेष्वभिरतात्मनाम् ॥ ३६ ॥ प्राणसंयमनेनैव शोषं याति कलेवरम् । पित्तात्मकानां त्वचिरान्न शुष्यति कलेवरम् । कफात्मकानामङ्गन्तु सम्पूर्णमचि-

१ मुनयो योगतत्वज्ञा धारणेति क्रियासाधनस्य द्वौ भेदौ वर्णयन्ति । कार्यब्रह्मविभागमवलम्ब्य कृता धारणा ह्येका मध्याविधा । कारणब्रह्मधारणा तु सर्वोत्तमा द्वितीया । धारणानुष्ठानानि बहुभेदयुतानि योगतत्वविदा श्रीगुरुदेवस्योपदेशत एव परिज्ञेयानि । अत एव "तत्र पृथिवीधारणे" । इतिग० श्रुतिः । "अतःपरास्य धारणा" । इति मै० श्रुतिः ।

राद्भवेत् ॥ ३७ ॥ धारणं कुर्व्वतस्त्वग्नौ सर्व्वे नश्यन्ति वातजाः ॥ ३८ ॥ पार्थिवे च जलांशे च धारणं कुर्व्वतः सदा । नश्यन्ति श्लेष्मजा रोगा वातजाश्चाचिरात्तथा ॥ ३९ ॥ व्योमांशे मारुतांशे च धारणं कुर्वतः सदा । त्रिदोषजनिता रोगा विनश्यन्ति न-संशयः ॥ ४० ॥ अस्मिन्नर्थे तु तौ ब्रूतामश्विनौ तु भिषग्वरौ । प्राणसंयमनेनैव त्रिदोषशमनं नृणाम् ॥ ४१ ॥ तस्मात्त्वञ्च वरा-रोहे नित्यकर्म्म समाचर । यमादिभिश्च संयुक्ता विधिवद्धारणां कुरु ॥ ४२ ॥ इतः परं प्रवक्ष्यामि चिन्मात्रस्याविकारिणः । ब्रह्म-णो ध्यानसिध्यर्थमंतरंगाः क्रियाः शुभाः ॥ ४३ ॥ आयुर्विघा-तकृत्प्राणो निरुद्धश्वासनेन वै । याति देवि तदापानात्कुलं वह्नेः शनैः शनैः ॥ ४४ ॥ वायुना दीपितो वह्निरपानेन भवेत्तदा । प्रातःकाले प्रदोषे च निशीथे च समाहितः । मुहूर्त्तमभ्यसेदेवं यावत्पञ्चदिनद्वयम् ॥ ४५ ॥ ततस्त्वात्मनि योगज्ञे प्रत्ययाश्च पृथक् पृथक् । सम्भवन्ति तदा तस्य जितो यस्य समीरणः ॥४६॥ शरीरलघुता दीप्तिर्वह्नेर्जठरवर्त्तिनः । नादाभिव्यक्तिरित्येतच्चिह्ना-न्यादौ भवन्ति हि ॥ ४७ ॥ अल्पमूत्रपुरीषः स्यात्षण्मासे व-त्सरेऽपिवा । आसने वाहने पश्चान्न भेतव्यं त्रिवत्सरात् ॥ ४८ ॥ ततोऽनिलं वायुसखेन सार्द्धं धिया समाधाय निरोधयेत्तम् । ध्या-यन्सदा चक्रिणमप्रबुद्धं नाभौ सदा कुण्डलिनं प्रविष्टम् ॥ ४९ ॥ शिरां समावेष्ट्य मुखेन मध्ये त्वन्याश्च भोगेन शिरास्तथैव । स्व-पुच्छमास्येन निगृह्य सम्यक् पथश्च संयम्य मरुद्गणानाम् ॥ ५०॥ प्रसुप्तनागेन्द्र इव श्वसन्ती सदा प्रबुद्धा प्रभया ज्वलन्ती । नाभौ

१ ध्यानसाधनं योगस्य परमप्रयोजनसाधकम् । तदधिकाराप्तये साधकैः पूर्वसाधनसम्प-न्नैर्भवितव्यम् । अत एवात्मध्यानाधिकारलाभात्प्रागेवानुष्ठेयाः शास्त्रविहिताः साधनसमूहा ह्यत्र वर्ण्यन्ते । एतच्च सर्वं वर्णनं तंत्रपुराणोपनिषदादिभ्यः संगृहीतं ज्ञेयं न.पूर्वं । एताः सर्वा एव क्रियाः शब्दार्थज्ञानरूपेण स्वाध्यायप्रवचनकालेऽध्येतव्याः सद्गुरुलाभे तु भावतो याथातथ्येनानुष्ठेयाः ।

सदा तिष्ठति कुण्डली सा तिर्य्यक्षु देहेषु तथेतरेषु ॥५१॥ वायु-
ना विधुतवह्निशिखाभिः कन्दमध्यगतनाडिषु संस्थाम् । कुण्डलीं
दहति यस्त्ववह्निरूपां संस्मरन् नरवरस्तु सएव ॥ ५२ ॥ सन्तप्तो
वह्निना तत्र वायुना च प्रचोदितः । प्रसार्य्य फणभृद्भोगं प्रबोधं
यात्यसौ तदा ॥ ५३ ॥ बोधं गते चक्रिणि नाभिमध्ये प्राणास्तु
संभूय कलेवरेऽस्मिन् । चरन्ति सर्व्वे सह वह्निनैव यथा पटे त-
न्तुगतिस्तथैव ॥ ५४ ॥ जित्वैवं चक्रिणः स्थानं सदा ध्यानपरा-
यणः । ततो नयेदपानन्तु नाभेरूर्द्ध्वमिदं स्मरन् ॥५५ ॥ वायुर्य-
दा वायुसखेन सार्द्धं नाभिं त्वतिक्रम्य गतः शरीरे । रोगाश्च
नश्यन्ति बलाभिवृद्धिः कान्तिस्तदानीं भवति प्रमुग्धे ॥ ५६ ॥
ब्रह्मरन्ध्रमुखमत्र वायवः पावकेन सह यान्ति समुद्रम् । के चने-
ह विमृशन्ति तदा स्याद्वीक्षणादिह सुदीपशिखायाः ॥ ५७ ॥
निरोधितः स्याद्धृदि तेन वायुर्मध्ये सदा वायुसखेन सार्द्धम् ।
सहस्रपत्रस्य मुखं प्रविश्य कुर्यात्पुनस्तूर्द्ध्वमुखं प्रियेऽत्र ॥ ५८ ॥
प्रबुद्धहृदयाम्भोजे देव्यस्मिन् ब्रह्मणः पुरे । बलाकाश्रेणिवद्द्यो-
म्नि राजते स्म समीरणः ॥ ५९ ॥ आभ्रूमध्यात्सुषुम्नायां संस्थि-
तो हुतभुक् सदा । सजलाम्बुदमालासु विद्युल्लेखेव राजते॥ ६० ॥
प्रबुद्धहृत्पङ्कजसंस्थितेऽग्नौ प्राणे च तास्मिन् प्रविवेशिते तु । चि-
ह्नानि बाह्ये च तथान्तरेऽपि दीपादिदृश्यानि भवन्ति सद्यः ॥
॥ ६१ ॥ स वह्निं वायुमारोप्य भ्रुवोर्मध्ये धिया तदा । ध्याये-
दनन्यधीः पश्चादन्तरात्मानमन्तरे ॥ ६२ ॥ तास्मिन् ब्रह्मपुरे देवि
ब्रह्मैवाज्ञानमोहितः । भ्रान्त्यारूढः स जीवः स्यादाच्छन्नो मह-
दादिभिः॥६३॥मध्यमे च हृदयेपि ललाटे स्थाणुवज्ज्वलति लिङ्ग-
मदृश्यम् । अस्ति देवि परमार्थमिदं तत्पश्य पश्य मनसा रुचि-
राभम् ॥ ६४॥ ललाटमध्ये हृदयाम्बुजे वा यः पश्यति ज्ञानमयीं
प्रभां तु । शक्तिं सदा दीपवदुज्ज्वलन्तीं पश्यन्ति ते ब्रह्म तदेकदृ-

छ्या ॥ ६५ ॥ मनोलयं यदा याति भ्रूमध्ये योगिनां नृणाम् । जिह्वामूलेऽमृतस्रावो भ्रूमध्ये चात्मदर्शनम् । कम्पनं च तथामूर्ध्नि मनसैवात्मदर्शनम् ॥ ६६ ॥ देवोद्यानानि रम्याणि नक्षत्राणि च चन्द्रमाः । ऋषयः सिद्धगन्धर्वाः प्रकाशन्ते हि योगिनाम् ॥६७॥ भ्रुवोऽन्तरे विष्णुपदे च नाभौ मनोलयं यावदिदं प्रयाति । तावत्समभ्यस्य पुनः खमध्ये सोमं सदा संस्मर पूर्णरूपम् ॥ ६८ ॥ समीरणे विष्णुपदे निविष्टे जीवे च तस्मिन्नमृते सुसंस्थे । तस्मिन् सदा याति मनोलयश्च मुक्तेः समीपं तदिति ब्रुवन्ति ॥ ६९ ॥ समीरणे विष्णुपदे निविष्टे विशुद्धबुद्धौ च सदात्मनिष्ठे । आनन्दबोधात्मकमस्ति सत्यं त्वं देवि पश्याशु विशुद्धबुद्ध्या ॥ ७० ॥ हृत्पङ्कजे व्योम्नि यदेकरूपं सत्यं सदानन्दमयं तु सूक्ष्मम् । तद्ब्रह्म निर्भासमयं गुहायामिति श्रुतेश्चापि समाप्नुवन्ति ॥ ७१ ॥ अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् । तमद्भुतं पश्य विशुद्धबुद्ध्या प्रयाणकालेऽपि विहीनशोकम् ॥ ७२ ॥ कुण्डलिन्यां समुद्भूता गायत्री प्राणधारिणी । प्राणविद्या महाविद्या यस्तां वेत्ति स वेदवित् ॥ ७३ ॥ तैलधारानवच्छिन्नं दीर्घघण्टानिनादवत् । अवाच्यं [3]प्रणवस्याङ्गं स साक्षादीश्वरोऽव्ययः ॥ ७४ ॥ पद्मासनं समारुह्य समकायशिरोधरः । नासाग्रदृष्टिरेकान्ते जपेदोङ्कारम[4]व्ययम् ॥७५॥ भूर्भुवःस्वरिमे लोकाः सोमसूर्याग्निदेवताः । तस्य मात्रासु तिष्ठन्ति तस्मात्प्रातिभदर्शनम् ॥ ७६ ॥ शुचिर्वाऽप्यशुचिर्वाऽपि दर्शयेत्प्रातिभं सदा । न स लिप्यति पापेन

---

१ आयुर्विघातकृदिति ४४ श्लोकमारभ्यैतदंताः क्रियाः श्रीमत्पूज्यपादयोगियाज्ञवल्क्यमहर्षिवर्यस्योपदिष्टाः । २ कुंडलिनीतंत्रम् । अत्राध्याये वर्णिता ब्रह्मध्यानोपयोगिनो लययोगसम्बन्धिनो ध्यानक्रियासमूहाः सर्वे विशिष्टोन्नताधिकारिभिरेव संसाधनीयाः । ते च सद्गुरोरुपदेशेनैवानुष्ठातुं शक्यन्ते । अत एव—"गुरूपदिष्टमार्गेण" इति मु० श्रुतिः । "गुरुशास्त्रप्रमाणैस्तु" । "एतद्ब्रह्मक्षोघ्नं मृत्युतारकं गुरुणा लब्धम्" । इत्यादि नृ० श्रुतिः । ३ वेत्तीति पूर्ववचनादनुवर्तनीयम् । ४ वचनद्वयं श्रीमत्पूज्यपादयोगिराजमहर्षिभरद्वाजस्य ।

पद्मपत्रमिवाम्भसा ॥ ७७ ॥ क्रिया चेच्छा तथा ज्ञानं ब्राह्मी रौद्री च वैष्णवी । त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति ॥ ७८ ॥ ज्योतिर्ध्यानं परो योगो बहुभाग्येन लभ्यते । गुरोः कृपाप्रसादेन प्राप्यते गुरुभक्तितः ॥ ७९ ॥ सृष्टिर्यत्र क्रिया यत्र तत्परं ज्योतिरोमिति । आत्मा साक्षाद्भवेद्स्मात्तस्माद्ध्यानं विशिष्यते ॥ ८०॥ प्राणायामद्विषट्केन प्रत्याहारः प्रकीर्तितः । प्रत्याहारद्विषट्केन ज्ञायते धारणा शुभा ॥ ८१ ॥ धारणा द्वादश प्रोक्तं ध्यानं ध्यानविशारदैः । ध्यानद्वादशकेनैव समाधिरभिधीयते ॥ ८२ ॥ यत्समाधौ परं ज्योतिरनन्तं विश्वतो मुखम् । तस्मिन् दृष्टे क्रिया कर्म्म यातायातं न विद्यते ॥ ८३ ॥ आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥ ८४॥ ध्वनेरन्तर्गतं ज्योतिर्ज्योतिरन्तर्गन्तं मनः । तन्मनो विलयं याति तद्विष्णोः परमं पदम् ॥ ८५ ॥ ओङ्कारध्वनिनादेन वायोः संहरणान्तिकम् । निरालम्बं समुद्दिश्य यत्र नादो लयं गतः ॥८६॥ खमध्ये कुरु चात्मानमात्ममध्ये च खं कुरु । आत्मानं खमयं कृत्वा न किञ्चिदपि चिन्तयेत्॥८७॥स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः । निष्क्रियं तद्विजानीयान्मनो यत्र लयं गतम् ॥८८॥मन्त्रयोगो हठश्चैव लययोगः पृथक् पृथक् । स्थूलं ज्योतिस्तथा सूक्ष्मं ध्यानस्य त्रिविधं विदुः ॥८९॥ स्थूलं मूर्त्तिमयं प्रोक्तं ज्योतिस्तेजोमयं तथा । सूक्ष्मं बिन्दुमयं ब्रह्म कुण्डली परदेवता॥९०॥स्थूलध्यानाच्छतगुणं तेजोध्यानं प्रचक्षते।तेजोध्यानाल्लक्षगुणं सूक्ष्मध्यानं विशिष्यते॥९१॥परात्परतरं ब्रह्मध्यानं सर्व्वत्र दुर्लभम् । आत्मा साक्षाद्भवेद्यस्मात्तस्माद्ध्यानं विशिष्यते[२]

१ भूर्भुवरिति ७६ श्लोकमारभ्यैतदंताः क्रियाः १०८ उपनिषत्कथिताः । २ पञ्चोपासनासम्बन्धि यद्विविधं स्थूलध्यानं ज्योतिःकल्पनारूपं ज्योतिर्ध्यानम् तथा कुंडलिनीमहाशक्तिसम्बन्धि यद्बिन्दुध्यानञ्च सर्वाण्येतानि ध्यानानि सगुणोपासनायामन्तर्भवन्ति एतत्त्रिविधध्यानानुष्ठानापेक्षया तु स्वतन्त्रस्य ब्रह्मपदस्य ध्यानानुष्ठानमेव समुत्कृष्टतरतया परिगीयते ।

॥ ९२॥ एवं समभ्यस्य सुदीर्घकालं यमादिभिर्युक्ततनुर्मिताशी । आनन्दमासाद्य गुहां प्रविष्टं मुक्तिं व्रज ब्रह्मपुरे पुनस्त्वम् ॥९३॥ भूतानि यस्मात्प्रभवन्ति सर्व्वे येनैव जीवन्ति चराचराणि । जातानि यस्मिन्विलयं प्रयान्ति तद्ब्रह्म विद्धीति वदन्ति सर्व्वे ॥९४॥ इन्द्रियाणि समाहृत्य मनसाऽऽत्मनि धारयेत् । कंचित्कालं महाप्राज्ञे धारणैषा च पूजिता ॥ ९५ ॥ वेदादेव सदा देवा वेदादेव सदा नराः । वेदादेव सदा लोका वेदादेव महेश्वरः ॥ ९६ ॥ इति चित्तव्यवस्था या धारणा सा प्रकीर्तिता । ब्रह्मैवाहं सदा नाहं देवो यक्षोऽथवा नरः ॥ ९७ ॥ न देहेन्द्रियबुद्ध्यादिर्न माया नान्यदेवता । इति बुद्धिव्यवस्थाऽपि धारणा सेति हि श्रुतिः ॥ ९८ ॥ सर्वं संक्षेपतः प्रोक्तं सर्वशास्त्रविशारदे । आगमान्तैकसंसिद्धमास्थेयं भवता सदा ॥ ९९ ॥

इति श्रीश्रीमधुसूदनसंहितायां धारणावर्णनं नाम पंचदशोऽध्यायः ।

---

## षोडशोऽध्यायः ।

# ध्यानवर्णनम् ।

श्रीश्रीमधुसूदन उवाच । अथ ध्यानं प्रवक्ष्यामि शृणु देवि तपोधने । ध्यानमेव हि जन्तूनां कारणं बन्धमोक्षयोः ॥ १ ॥ प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषान् । प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ॥ २ ॥ यदा मनः स्वं विरजं

---

१ श्रीसूतसंहितायाम् ।

योगेन सुसमाहितं । काष्ठां भगवतो ध्यायेत्स्वनासाग्रावलोकनः ॥ ३ ॥ ध्यानमात्मस्वरूपस्य वेदनं मनसा खलु । सगुणं निर्गुणं तच्च सगुणं बहुशः स्मृतम् ॥ ४ ॥ मन्त्रयोगानुसारेण तन्त्रशास्त्रविधानतः । ध्यानं सप्तविधं ख्यातं विष्णुदेवस्य पूजने ॥५ ॥ चतुर्व्विंशति रूपश्च ध्यानं वै शक्तिदैवतम् । शङ्करोपासनायाश्च ध्यानं पञ्चविधं मतम् ॥ ६ ॥ श्रीसूर्य्यस्य समर्च्चायां गणेशस्यापि वल्लभे । उपासनासु कथिते ध्याने द्वे रूपकल्पने

१ अत एव "तत्र प्रत्ययैकतानता ध्यानम्" । इति योगदर्शनम् "प्रज्ञया मनः समारुह्य मनसा सर्वाणि ध्यानान्याप्नोति" । इति कौ० श्रुतिः । तदेतद्ध्यानं सर्वस्याप्युपासनाकांडस्य परमं फलं । तच्च वैदिकमंतरंगमुपासनं नामरूपात्मकं ध्यानफलकं । नामात्मकमपि प्रणवादिमहामंत्राणां वाचिकोपांशुमानसिकजपरूपं । मेघश्यामादिभावनारूपं तु रूपात्मकं । अत एव "तस्य वाचकः प्रणवः तज्जपस्तदर्थभावनं" इति योगसूत्रं "जपाच्छ्रांतः पुनर्ध्यायेत् ध्यानाच्छ्रांतः पुनर्जपेत्" इत्युपासांते च तद्गुणलीलात्मकस्तोत्रपाठोपि नामांतर्भावमर्हतीति तस्यापि नामोपासनायां निम्नस्तृतीयोऽधिकारो बोध्यः "एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुंडरीकाक्षं स्तवैरर्चेन्नरः सदा" इति स्मरणात् । तथा च कर्मणो नित्यनैमित्तिककाम्यरूपेण ज्ञानस्य श्रवणमनननिदिध्यासनरूपेण यथा त्रैविध्यं तथैव स्तोत्रजपध्यानरूपेणोपासात्रैविध्यं ज्ञेयम् । २ बहिर्जगतोऽन्तर्जगत्प्रवेशार्थं द्वारस्वरूपं हि प्रत्याहारसाधनम् । आत्मसाक्षात्कारस्य च ध्यानसाधनमेव केवलोपायः । प्रत्याहारावस्थायां साधको बहिः प्रपञ्चात्मनः संहरणमभ्यस्यति ध्यानावस्थायाञ्च बहिः प्रपञ्चमेकान्ततो विस्मृत्य परमात्मन्येव समाश्रयँल्लभते । सगुणध्यानावस्थायां सगुणभावावलम्बनेन साधके विस्मृते जगत्प्रपञ्चे तद्भावावलम्बनरूपतयैव समवशिष्यते । अतः सगुणध्यानं मुमुक्षूणां तादृक्फलप्रदायकं न भवति । एवञ्च निर्गुणभावजनकन्निर्गुणध्यानमेव सर्व्वोत्तमं गण्यते । अत्र संहितायां निर्गुणध्यानविषय एव विस्तरेण वर्णिष्यते । ३ मन्त्रयोगानुसारेण पुराणेषु तन्त्रेषु च वर्णितानि बहुविधानि मूर्तिध्यानानि नैव केवलं कल्पनारचितानि । पञ्चोपासनाविषयिणो ध्यानभेदसमूहाः स वै पूर्णवैज्ञानिकसिद्धान्तमेवानुसृत्य निर्णीता इति तेषां संख्यायाः स्वरूपस्य च विचारेण सर्वं सम्यग्ज्ञातुं शक्यते । प्राचीनमहर्षीणां त्रिकालदर्शिनां धर्मसिद्धान्ताः सर्वे गूढवैज्ञानिकभावपूर्णा इति प्रसिद्धमेव । मन्त्रयोगस्य वर्णनमिदं श्रीकापिलतंत्रराजस्थं । अत एव "श्रद्धाभक्तिध्यानयोगात्" । इत्यादि श्रुतिः । श्रीविष्णवादिपंचरूपस्य ब्रह्मणो ध्यानेषु सप्त चतुर्विंशति पंचविधत्वं कापिलतंत्रोक्तं ज्ञेयं अन्येष्वपि पुराणतंत्रादिषु ध्यानांतराण्युक्तानि तानि सर्वाण्यपि सप्तादिसंख्यास्वेवांनांतर्भावमर्हंति ।

॥ ७ ॥ ऊर्द्ध्वाधोमध्यभेदेन स्थानानां त्रिविधेन वै । ध्यानं ज्यो-
तिर्मयं प्रोक्तं त्रिविधं हठयोगिभिः ॥ ८ ॥ लययोगविधानात्तु
सर्व्वध्यानेषु चोत्तमम् । कथितं पावनं ध्यानं बिन्दुध्यानं पति-
व्रते ॥ ९ ॥ एतस्य साधकः शक्तः कर्त्तुं ध्यानस्य भावनाम् ।
यदा कुण्डलिनीशक्तिर्जाग्रती तिष्ठति स्थिरा ॥ १० ॥ पूर्व्वं ते
वर्णिता देवि क्रिया बहुविधा मया । बिन्दुध्यानोपयोगिन्यो
रम्याः श्रेष्ठकलान्विताः ॥ ११ ॥ त्रिषु योगेषु चोक्तानां ध्याना-
नां धारणाविधिम् । ध्यानरीतिं च नियतं विद्याद्गुरुमुखाज्जनः ॥
॥ १२ ॥ प्रागुक्तेषु च सर्व्वेषु ध्यानेषु परमं मतम् । ध्यानं भा-
वसुरम्यं वै लययोगस्य साधुभिः ॥ १३ ॥ किञ्च मोक्षानुकूला-
यामवस्थायां प्रजायते । शक्तिर्ध्यातुं परं ब्रह्म साधकस्य सु-
योगिनः ॥ १४ ॥ पूर्व्वमुक्तेषु सर्व्वेषु ध्यानेषु ध्यानविद्वरे । प्रकृ-
तेः सगुणाया वै सम्बन्धो विद्यते सदा ॥ १५ ॥ ब्रह्मध्याने तु
परमे सम्बन्धो नास्ति तादृशः । अतस्तन्निर्गुणं ध्यानं तत्वतो
गदितं बुधैः ॥ १६ ॥ योगिनस्त्रिविधाः सर्व्वे प्राप्य सिद्धिं स्वसा-
धनैः । लब्ध्वा भगवतः पूर्णां कृपामन्ते परां शुभाम् ॥ १७ ॥
राजयोगाधिकाराणामुपयोगि परात्परम् । कुर्व्वन्ति ब्रह्मणो
ध्यानं सच्चिदानन्दरूपिणः ॥ १८ ॥ ब्रह्मध्याने तु शक्तिः सा
तदैव ज्ञायते परा । यदा श्रीभगवान् देवः सर्व्वतापनिवारकः
॥ १९ ॥ सर्व्वशक्तिः सदा भक्तवत्सलो लोकरञ्जनः । हरिः करो-

---

१ अत एव "प्राणायामस्तथा ध्यानम्" इत्यादि घे० श्रुतिः । २ अत एव "तेजो बिन्दुः परं ध्यानम्" । इत्यादि तेजा० श्रुतिः । ३ अत एव "स्वरूपध्याननिरतम्" । इत्यादि मु० श्रुतिः । "आत्मनो ध्यानम्" । इत्यादि छां० श्रुतिः । पूर्वं सगुणोपासनाब्रह्मो-पासनेत्युपासनाया द्वैरूप्यमुक्तं तदनुसारेण ध्यानमपि सगुणनिर्गुणभेदेन द्विविधम् । तत्र मंत्रहठलयेति त्रिषु योगेषु यद्ध्यानं भवति तत्तु सगुणध्यानं यत्खलु राजयोगस्यांगं ध्यानम् तन्निर्गुणब्रह्मध्यानम् तदपि पूर्वांगाभ्यासपरिपाकेन प्रत्यक्प्रवणचित्तवृत्तौ द्रष्ट्रात्मनिदिध्यासन-रूपम् पराक्प्रवणचित्तवृत्तौ तु ब्रह्मविभूतितादूप्यभावनात्मकमपरम् ।

ति कल्याणं साधकेषु कृपांकुलः ॥ २० ॥ तथापि ते हितार्थाय ब्रह्मध्यानविधिर्मया । वर्ण्यते वर्णनातीतः संक्षेपेण शुचिव्रते ॥ २१ ॥ ब्रह्मध्यानविधिश्चैष नेति नेति विचारतः । कूटस्थं पुरुषं पश्यन् ज्ञानं दृश्यान्निवारयन् ॥ २२ ॥ द्रष्टारमभिलक्ष्यैव प्रयतेत निरन्तरम् । स्थिरः पश्येच्च द्रष्टारं सावधानः सुसंयतः ॥ २३॥ एवं कियन्तं कालं वै साधकः साधयन् स्थिरः । लयमापादयन् दृश्यं द्रष्टारं च विलोकयन् ॥ २४ ॥ क्रमेण लभते शक्तिं योगिश्रेष्ठः स तत्त्ववित् । ब्रह्मध्याने परोत्कृष्टे सर्व्वदुःखविमोचने ॥ २५ ॥ मर्म्मस्थानानि नाडीनां संस्थानं च पृथक् पृथक् । वायूनां स्थानकर्म्माणि ज्ञात्वा कर्म्मात्मवेदनम् ॥ २६ ॥ एवं ज्योतिर्मयं शुद्धं सर्व्वगं व्योमवद्दृढम् । अत्यन्तमचलं नित्यमादिमध्यान्तवर्जितम् ॥ २७ ॥ स्थूलं सूक्ष्ममनाकाशमसंस्पृश्यमचाक्षुषम् । न रसं न च गन्धाख्यमप्रमेयमनौपमम् ॥ २८ ॥ आनन्दमजरं सत्यं सदसत्सर्व्वकारणम् । सर्व्वाधारं जगद्रूपममूर्त्तमजमव्ययम् ॥ २९ ॥ अदृश्यं दृश्यमन्तस्थं बहिःस्थं सर्व्वतोमुखम् । सर्व्वदृक् सर्व्वतःपादं सर्व्वस्पृक् सर्व्वतः शिवम् ॥ ३० ॥ ब्रह्म ब्रह्ममयोऽहं स्यामिति यद्वेदनं भवेत् । तदेतन्निर्गुणं ध्यानमिति [2]ब्रह्मविदो विदुः ॥ ३१ ॥ एवं ध्यानामृतं कुर्व्वन् षण्मासान्मृत्युजिद्भवेत् । वत्सरान्मुक्त एव स्याज्जीवन्नेव न संशयः ॥ ॥ ३२ ॥ जीवन्मुक्तस्य न क्काऽपि दुःखावाप्तिः कथं च न ।

---

१ मन्त्रहठलयादियोगसम्बन्धी यो ध्यानसमूहः क्रियासाध्यो गुरूपदेशसाहाय्येनानुष्ठातुं शक्यते, आत्मध्यानन्तु भगवत्कृपया साधकस्य तत्वज्ञानाधिकारे सञ्जात एव सम्भवत्साधनं भवति । २ अत एव "तमाहुः परमाङ्गतिं" इत्युक्त्वा "तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ।" तथा "निष्कलं ध्यायमानः" इत्यादि श्रुतिः । "अधमा प्रतिमापूजा जपस्तोत्रादि मध्यमा । उत्तमा मानसी पूजा सोऽहं पूजोत्तमोत्तमा ॥ अद्वैतभावना नास्ति द्वैतमेव विनश्यति । द्वैताद्वैताविभेदेन ब्रह्म ध्यायन्ति योगिनः" ॥ इति भावचूडामणितंत्रम् ।

**किं पुनर्नित्यमुक्तस्य मुक्तिरेव हि दुर्लभा ॥ ३३ ॥ एवं हरौ भ-**

१ अस्यां ब्रह्मध्यानोन्नतावस्थायां परिणतचित्तस्य योगिनो ब्रह्मविभूतिषु श्रीमद्भगवद्गीताभागवताद्युक्तासु तद्ब्रह्मदर्शनं सहसैव भवति। तासां दिग्दर्शनं यथा—"मत्तः परतरं किंचिन्नान्यदस्ति धनंजय। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव॥ रसोऽहमप्सु कौंतेय प्रभास्मि शशिसूर्ययोः। प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु॥ पुण्यो गंधः पृथिव्यां च तेजश्चास्मि विभावसौ। जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु॥ बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्। बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम्॥ बलं बलवतां चाहं कामरागविवर्जितम्। धर्माऽविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ॥ ये चैव सात्विका भावा राजसास्तामसाश्च ये। मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि"॥ "अहमात्मा गुडाकेश सर्वभूताशयस्थितः। अहमादिश्च मध्यं च भूतानामंत एव च॥ आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्। मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी॥ वेदानां सामवेदोऽस्मि देवानामस्मि वासवः। इंद्रियाणां मनश्चास्मि भूतानामस्मि चेतना॥ रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम्। वसूनां पावकश्चास्मि मेरुः शिखरिणामहम्॥ पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम्। सेनानीनामहं स्कंदः सरसामस्मि सागरः॥ महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम्। यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः॥ अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः। गंधर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः। उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम्। ऐरावतं गजेंद्राणां नराणां च नराधिपम्॥ आयुधानामहं वज्रं धेनूनामस्मि कामधुक्। प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः॥ अनंतश्चास्मि नागानां वरुणो यादसामहम्। पितॄणामर्यमा चास्मि यमः संयमतामहम्। प्रल्हादश्चास्मि दैत्यानां कालः कलयतामहम्। मृगाणां च मृगेंद्रोऽहं वैनतेयश्च पक्षिणाम्॥ पवनः पवतामस्मि रामः शस्त्रभृतामहम्। झषाणां मकरश्चास्मि स्रोतसामस्मि जान्हवी॥ सर्गाणामादिरंतश्च मध्यं चैवाहमर्जुन। अध्यात्मविद्या विद्यानां वादः प्रवदतामहम्॥ अक्षराणामकारोस्मि द्वंद्वः सामासिकस्य च। अहमेवाक्षयः कालो धाताहं विश्वतोमुखः। मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम्। कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा॥ बृहत्साम तथा साम्नां गायत्री छंदसामहम्। मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः॥ द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम्। जयोस्मि व्यवसायोस्मि सत्वं सत्ववतामहम्॥ वृष्णीनां वासुदेवोस्मि पांडवानां धनंजयः। मुनीनामप्यहं व्यासः कवीनामुशना कविः॥ दंडो दमयतामस्मि नीतिरस्मि जिगीषताम्। मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम्"॥ "गुणानां चाप्यहं साम्यं गुणिन्यौत्पत्तिको गुणः। आश्रमाणामहं तुर्यो नक्षत्राणां तथाऽभिजित्॥ यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम्। संवत्सरोऽस्म्यनिमिषां धातूनामस्मि कांचनम्। तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः। वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेंऽशकः"॥ "यच्चापि सर्वभूतानां बीजं तदहमर्जुन। न तदस्ति विना यत्स्यान्मया भूतं चराचरम्॥ नांतोऽस्ति मम दिव्यानां विभूतीनां परंतप। एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया"॥ इत्यादिः॥

गवति प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् । औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चाऽपि चित्तबडिशं शनकै-र्वियुङ्क्ते ॥३४॥ मुक्ताश्रयं यदि हि निर्व्विषयं विरक्तं निर्व्वाणमृ-च्छति मनः सहसा यथार्च्चिः । आत्मानमत्र पुरुषोऽव्यवधान-मेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥ ३५ ॥ सर्व्वेन्द्रियगुणा-भासं सर्व्वेन्द्रियविवर्जितम् । सर्व्वस्य प्रभुमीशानं सर्व्वस्य शरणं बृहत् ॥३६ ॥ आत्मा गुहायां निहितोऽस्य जन्तोरणोरणीयान्म-हतो महीयान् । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्म-हिमानमीशम् ॥ ३७ ॥ य आत्मव्यतिरेकेण द्वितीयं नैव पश्य-ति । ब्रह्मीभूय स एवं हि वेदपक्ष उदाहृतः ॥ ३८ ॥ विषयास-क्तचित्तो हि यतिर्मोक्षं न विन्दति । यत्नेन विषयासक्तिं तस्मा-द्योगी विवर्ज्जयेत् ॥ ३९ ॥ तस्मात्त्वं च वरारोहे फलं त्यक्त्वैव नित्यशः । विधिवत्कर्म्म कुर्व्वाणा ध्यानमेव सदा कुरु ॥४०॥ अन्यान्यपि बहून्याहुर्ध्यानानि ध्यानवित्तमाः । मुख्यान्येतानि चैतेभ्यो जघन्यानीतराणि तु ॥ ४१ ॥ सगुणं गुणहीनं वा वि-ज्ञायात्मानमात्मनि । सन्तः समाधिं कुर्व्वन्ति त्वमप्येवं सदा कुरु ॥ ४२ ॥ देव्युवाच ॥ स्वामिन्यद्भवता प्रोक्तं ध्यानांगं स-र्वतो वरम् । तत्कथं क्रियते नाथ श्रीमता ध्यानसाधनम् ॥४३॥ श्रीश्रीमधुसूदन उवाच ॥ दृष्ट्वा तत्वेन देवेशं स्मराम्येनं तु नि-त्यशः । तृष्णातुरो यथैवांभस्तद्वद्विष्णुं स्मराम्यहम् ॥ ४४ ॥ हिमेनाकुलितं विश्वं स्मरत्यग्निं यथा तथा । स्मरंति सततं विष्णुं पितृदेवर्षिमानवाः ॥ ४५ ॥ पतिव्रता यथा नारी पतिं स्मरति नित्यशः । तथा स्मरामि देवेशं विष्णुं विश्वेश्वरेश्वरम् ॥ ४६ ॥ दूरस्थोऽपि यथा गेहं चातको जलदं यथा । ब्रह्मविद्यां ब्रह्मविद-स्तथा विष्णुं स्मराम्यहम् ॥ ४७ ॥ हंसा मानसमिच्छन्ति ऋ-षयः स्मरणं हरेः । भक्ताश्च भक्तिमिच्छंति तथा विष्णुं स्मरा-

म्यहम् ॥ ४८ ॥ वैष्णवाश्च यथा भक्तिं पशवश्च यथा तृणम् । धर्म्ममिच्छन्ति वै संतस्तथा विष्णुं स्मराम्यहम् ॥ ४९ ॥ प्राणिनां वल्लभो देहो यत्र आत्माऽवतिष्ठते । आयुर्वाञ्छन्ति वै जीवास्तथा विष्णुं स्मराम्यहम् ॥ ५० ॥ भ्रमराश्च यथा पुष्पं चक्रवाका दिवाकरम् । यथाऽत्मवल्लभा भक्तिं तथा विष्णुं स्मराम्यहम् ॥ ५१॥ यथा श्रमार्ता विश्रामं निद्रां व्यसनिनो यथा । यथाऽऽलस्योज्झितो विद्यां तथा विष्णुं स्मराम्यहम् ॥ ५२ ॥ सूर्य्यकान्तरवेर्योगाद्वान्हिस्तत्र प्रजायते । एवं वै साधुसंयोगाद्धरौ भक्तिः प्रजायते ॥ ५३ ॥ शीतरश्मिशिला यद्वच्चन्द्रयोगादपः स्रवेत् । एवं वैष्णवसंयोगाद्भक्तिर्भवति शाश्वती ॥ कुमुद्वती यथा सोमं दृष्ट्वा पुष्पं विकाशते । तद्वद्देवे कृता भक्तिर्मुक्तिदा सर्वदा नृणाम् ॥ ५४ ॥ यथा नलस्य संत्रस्ता भ्रमरी स्मरणं चरेत् । तेन स्मरणयोगेन नलसारूप्यतामियात् ॥ ५५ ॥ अहो विष्णोश्च माहात्म्यमद्भुतं लोमहर्षणम् । यदृच्छयापि स्मरणं त्रिधा मुक्तिप्रदायकम् ॥ ५६ ॥ एकेन भक्तियोगेन समीपे दृश्यते क्षणात् । सान्निध्येऽपि स्थितो दूरे नेत्रयो रंजनं यथा ॥५७॥

इति श्रीश्रीमधुसूदनसंहितायां ध्यानवर्णनं नाम षोडशोऽध्यायः ।

## सप्तदशोऽध्यायः ।

# भक्तियोगवर्णनम् ।

देव्युवाच ॥ भगवन्भक्तियोगं मे सरहस्यं सुनिर्मलम् । समाधियोगात्प्रथमं ब्रूहि विस्तरशः प्रभो ॥ १ ॥ श्रीश्रीमधुसूदन उवाच ॥ भज इत्येष वै धातुः सेवायां परिकीर्तितः । तस्मा-

त्सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी ॥ २ ॥ श्रवणं मननं चैव निदिध्यासनमेव च । परे गुरौ च या भक्तिः परिचर्यादिकं हरेः । एषा सेवेति संप्रोक्ता यया तद्दर्शनं भवेत् ॥ ३ ॥ स्नेहानुबंधो यस्तस्मिन्बहुमानपुरःसरः । भक्तिरित्युच्यते सैव करणं परमीशितुः ॥ ४ ॥ महत्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाभिधीयते । तयैव व्यज्यते सम्यग्जीवरूपं सुखादिकम् ॥ ५ ॥ माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्नचान्यथा ॥ ६ ॥ भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित् । प्रीयतेऽमलया भक्त्या हरिरन्यद्विडंबनम् ॥ ७ ॥ भक्तिस्थः परमो विष्णुस्तयैवैनं वशं नयेत् । तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ॥ ८ ॥ यथा समस्तलोकानां जीवनं सलिलं स्मृतं । तथा समस्तसिद्धीनां जीवनं भक्तिरिष्यते ॥ ९ ॥ स तु भक्तपराधीनो ह्यस्वतंत्र इव प्रिये । साधुभिर्ग्रस्तहृदयो भक्तैर्भ-

---

१ गारुडे । २ बृहत्संहिता । ३ मायावैभवे । ४ पाद्मे । ५ विष्णुपुराणे अतएव न तत्रापि माहात्म्यज्ञानविस्मृत्यपवादः । "ओं तद्विहीनं जाराणामिव" इति श्रीनारदसूत्रम् । ६ श्रीभागवते, अत एव ओं "आत्मरत्यविरोधेनेति शाण्डिल्यः" इति नारदसूत्रम् । ७ मायावैभवे पंचोपासनाविज्ञानानुसारेण पंचनामरूपात्मकस्य परब्रह्मण एव भजनीयतया वेदशास्त्रेषु विवक्षितत्वान्न क्वापि विरोधगंधः । अत एव पंचनामकपरब्रह्मणः शिवगीता, गणेशगीता, भगवतीगीता, आदित्यगीता, भगवद्गीता तथा विष्णुशिवादिसहस्रनामाऽपि समुपलभ्यते । वेदेऽपि "तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चंद्रमाः । तदेव शुक्रं तद्ब्रह्म तदापः स प्रजापतिः" इति यजुः । तथा च "तं यथायथोपासते तदेव भवति ॥" इति श्रुत्या तत्तन्नामरूपात्मकस्य परब्रह्मणो नामरूपाद्युपाधिप्रमोषानंतरं तत्तदुपासकानां तत्तदात्मकेऽखंडैकरसे प्रवेश इति तत्वम् । ८ अत एव "श्रद्धा भक्तिज्ञानयोगादवेहि" इति कैवल्योपनिषत्, "भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी" इति माठरश्रुतिः । "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिताह्यर्थाः प्रकाशंते महात्मनः" इति श्वेताश्वतरोपनिषत् । ९ न केवलमुपासनाकांड एव भक्तेरुपयोगः किं तु कर्मकांडे ज्ञानकांडेऽपि तदुक्तं श्रीभगवता व्यासदेवेन "चराचरात्मकं विश्वं विष्णुरेव सनातनः । इति निश्चित्य मनसा योगद्वितयमभ्यसेत्"॥ योगद्वितयं कर्मयोगं ज्ञानयोगं चेति तदर्थः ।

क्तजनप्रियः ॥ १० ॥ तस्मिन्निर्बद्धहृदयाः साधवः समदर्शनाः ।
वशे कुर्वंति तं भक्त्या सत्स्त्रियः सत्पतिं यथा ॥ ११ ॥ साधवो
हृदयं तस्य साधूनां हृदयं हि सः । तदन्यत्ते न जानंति न
तेभ्यः स मनागपि ॥ १२ ॥ जन्मांतरसहस्रेषु तपोध्यानसमा-
धिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ १३ ॥
जन्मांतरसहस्रेषु समाराध्य वृषध्वजं । वैष्णवत्वं लभेत्कश्चित्स-
र्वपापक्षयादिह ॥ १४ ॥ के चित्केवलया भक्त्या वासुदेवपरा-
यणाः । अघं धुन्वंति कार्त्स्न्येन नीहारमिव भास्करः ॥ १५ ॥
न तथा ह्यघवान्भद्रे पूयेत तपआदिभिः । यथा कृष्णार्पितप्रा-
णस्तत्पूरुषनिषेवया ॥ १६ ॥ सध्रीचीनो ह्ययं लोके पंथाः
क्षेमोऽकुतोभयः । सुशीलाः साधवो यत्र नारायणपरायणाः ॥
॥ १७ ॥ प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखं । न निःपु-
नंति सारङ्गे सुराकुंभमिवापगा ॥ १८ ॥ फलीभूतं न तज्ज्ञानं
वैराग्यं नैव कर्म्म च । भक्तिर्न यावद्गोविंदे देहिनां प्रेमलक्षणा ॥
॥ १९ ॥ यथाग्निः सुसमृद्धाऽर्चिः करोत्येधांसि भस्मसात् ।
तथा तद्विषया भक्तिः करोत्येनांसि कृत्स्नशः ॥ २० ॥ न
साधयति तं योगो न सांख्यं धर्मकर्मणी । न स्वाध्यायस्तप-
स्त्यागो यथा भक्ती रसात्मिका ॥ २१ ॥ भक्त्या स एकया
ग्राह्यः श्रद्धयात्मा प्रियः सताम् । भक्तिः पुनाति तन्निष्ठा श्व-
पाकानपि संभवात् ॥ २२ ॥ कथं विना रोमहर्षं द्रवता चेतसा
विना । विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाऽऽशयः ॥२३ ॥

---

१ अत एव "राजन् पतिर्गुरुरलं भवतां यदूनां दैवंप्रियः कुलपतिः क्व च किंकरो वः । अस्त्वेवमंग भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् " ॥ इति श्रीपूज्यपादस्य भगवतः शुकदेवस्य वचनं श्रीमद्भागवते, तेन तस्यातिदुर्लभत्वेऽपि तत्प्राप्त्युपायशतेष्वपि भगवत्कृपया सतां संगतिलाभे तु तत्सौलभ्यमपीत्याह "ओं मुख्यतस्तु महत्कृपयैव भगवत्कृपालेशाद्वा" इति श्रीनारदसूत्रम् । "रहूगणै तत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा । न छन्दसा नैव जलाग्निसूर्यैर्विना महत्पादरजोभिषेकात्" इति श्रीमद्भागवते ।

विषयान्ध्यायतश्चित्तं विषयेषु विषज्जते । तं चानुस्मरतश्चित्तं तस्मिन्नेव प्रलीयते ॥ २४ ॥ चतुर्विधा भजंते तं जनाः सुकृतिनः प्रिये । आर्तो जिज्ञासुरर्थार्थी ज्ञानी चांत्यो विशिष्यते ॥ २५ ॥ अभिसंधाय यद्धिंसां दंभं मात्सर्यमेव वा । संरंभी भिन्नदृग्भावं हरौ कुर्यात्स तामसः ॥ २६ ॥ विषयानभिसंधाय यश ऐश्वर्यमेव वा । अर्चादावर्चयेद्यस्तं पृथग्भावः स राजसः ॥ २७ ॥ कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणं । यजेद्यष्टव्यमिति वा पृथ-

---

१ एवं च समनस्कानां देहिनां तदनुस्मरणोपलक्षितभक्तौ सम्यगधिकारः सिद्धो भवति इतीयमेव भक्तियोगस्य कर्मादिभ्योऽधिकता तदुक्तं भगवता "अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मंतव्यः सम्यग्व्यवसितो हि सः" ॥ "आनिन्द्ययोन्यधिक्रियते पारंपर्यात्सामान्यवत् । अतोह्यविपक्कभावानामपि तल्लोके" इति च भक्तिसूत्राभ्यां "यन्नामधेयश्रवणानुकीर्तनाद्यद्वंदनाद्यत्स्मरणादपि क्वचित् । श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन्नुदर्शनात् । किरातहूणांध्रपुलिंदपुल्कसाआभीरकंका यवनाः खसादयः । येऽन्ये च पापा यदपाश्रयाश्रयाच्छुध्यंति तस्मै प्रभविष्णवे नमः" ॥ इत्यादि श्रीभागवते, तथा चान्यदेशीयाः परधर्मावलंबिनो यथा केवलं भक्तिमार्गावलंबेनैवोन्नतावस्थां प्राप्तास्तत्तद्ग्रन्थेषु समुपलभ्यंते न तथा ते कर्म्माद्यवलंबनेन कदाचिदपि तामवस्थां प्राप्ताः स्युः कर्मादिष्वधिकाराभावात् । तदुदाहरणमात्रं यथा—ईसासंमतधर्मस्थश्रीमत्केम्पिस्प्रणीत "इमिटेशन् आफ् क्राइस्ट्" महंमदसंमतधर्मस्थश्रीमदिमामूगिजालिप्रणीत "किमीयाय् सहादत्" नामादिग्रंथेषून्नतविचारा यथा संति तथा तद्दर्शनेनैवावगंतव्याः । अतो वैदिकोपासनांगान्येव कैरपि यदि समनुष्ठितानि भवेयुस्तर्हि ते सर्वेप्युन्नतिं प्राप्नुयुरित्यहो माहात्म्यातिशयो वैदिकधर्मस्य अस्यैव सनातनधर्मत्वेन सर्वैरुपलभ्यमानत्वात् । २ श्रीमद्भगवद्वाक्यं तत्र त्रयः पूर्वे गौणा ज्ञानी तु परमा भक्तेरधिकारीति भक्तेर्द्वैविध्यमेव प्राचीनमहर्षिगणेषु श्रीमत्पूज्यपादकश्यपसंमता गौणी—"तामैश्वर्यपदां काश्यपः परत्वात्" इति शांडिल्यभक्तिदर्शनसूत्रं २९ । तथा श्रीमत्पूज्यपादबादरायणसंमता परा "आत्मैकपरां बादरायणः" इति तत्सूत्रात् । श्रीमत्पूज्यपादशांडिल्यमते तु "उभयपरां शांडिल्यः शब्दोपपत्तिभ्याम् ॥" इति सूत्रात् उभयत्र सम्मतिरिति तदुक्तं श्रीभगवता "उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतं । आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥" इति । अत एव "ओं गौणी त्रिधा गुणभेदादार्त्तादिभेदाद्वा" । "ओं उत्तरस्मादुत्तरस्मात्पूर्वपूर्वा श्रेयाय भवति" इति श्रीनारदसूत्रम् । "गौणं त्रिविध्यमितरेण स्तुत्यर्थत्वात्साहचर्यम् । बहिरन्तरस्थमुभयमवेष्टि सर्ववत्" । इति भक्तिदर्शनम् ।

ग्भावः स सात्त्विकः ॥ २८ ॥ त्रिविधा भवति श्रद्धा देहिनः सा स्वभावजा । सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २९ ॥ सत्वानुरूपा सर्वस्य श्रद्धा भवति भामिनि । श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३० ॥ श्रद्धापूर्वाः सर्वधर्म्मा मनोरथफलप्रदाः । श्रद्धया साध्यते सर्वं श्रद्धया तुष्यते हरिः ॥ ३१ ॥ भक्तिर्भक्त्यैव कर्तव्या तथा कर्माणि भक्तितः । कर्म्माणि श्रद्धाहीनानि न सिध्यन्ति द्विजोत्तमाः ॥ ३२ ॥ सा भक्तिर्द्विविधा ज्ञेया सात्त्विक्या श्रद्धया कृता । वैधी रागात्मिका चेति विस्तरं तत्वतः शृणु ॥ ३३ ॥ आद्या शास्त्रगुरुभ्यां या श्रुत्वा विष्णौ प्रवर्त्यते । साधनानि बहूनि स्युः तस्याः संसाधने प्रिये ॥ ३४ ॥ देवानां गुणलिङ्गानामानुश्रविक कर्मणाम् । सत्व एवैकमनसो वृत्तिः स्वाभाविकी तु या[2] ॥ ३५ ॥ अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी । जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ ३६ ॥ श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनम् ॥ ३७ ॥ इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा । क्रियते भगवत्यद्धा बहु[3]साधनसंभृता ॥ ३८ ॥ प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् । धुनोति शमलं कृष्णः सलिलस्य यथा शरत् ॥ ३९ ॥ यदनुचरितलीलाकर्णपीयूषविप्रुट् सकृददनविधूतद्वन्द्वधर्मा विनष्टाः । सपदि गृहकुटुम्बं दीनमृत्सृज्य दीना बहव इह विहङ्गा भिक्षुचर्यां च[4]रन्ति ॥ ४० ॥ मधुरमधुरमेतन्मंगलं मंगलानां सक-

---

१ भक्तस्य श्रद्धायाश्च त्रैविध्यं केवलं तयोः सात्त्विकत्वस्यैवोपादेयत्वार्थं प्रदर्श्यत इतीतरयोः राजसतामसयोर्हेयत्वमेव साधकेन बोद्धव्यम् । २ देवानामिंद्रियाभिमानिनां केवलवैदिककर्मानुष्ठानपराणां सत्वे सत्वमात्रप्रकाशके भगवति या स्वाभाविकी एकाग्रताख्या वृत्तिरिति तदर्थः । ३ इति श्रीमद्भागवते तथा स्कान्दे । अत एव "भक्त्या भजनोपसंहाराद्गौण्यापरायैतद्धेतुत्वात् । रागार्थे प्रकीर्तिसाहचर्य्याच्चेतरेषाम् । अन्तराले तु शेषाः स्युरुपास्यादौ च कांडत्वात् । गौण्या तु समाधिसिद्धिः" इति भक्तिदर्शनम् । ४ श्रवणमाहात्म्यं श्रीमद्भागवते ।

लनिगमवल्लीसत्फलं चित्स्वरूपं । सकृदपि परिगीतं श्रद्धया हेलया वा शशिमुखि नरमात्रं तारयेत्कृष्णनाम ॥ ४१ ॥ चेतोदर्पणमार्जनं भव महादावाग्निनिर्वापणं श्रेयःकैरवचंद्रिकावितरणं विद्यावधूजीवनं । आनंदाम्बुधिवर्धनं प्रतिपदं पूर्णामृतास्वादनं सर्वात्मस्नपनं परं विजयते श्रीकृष्णसंकीर्तनम् ॥ ४२ ॥ सा हानिस्तन्महच्छिद्रं सा चान्ध्यजडमूढता । यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते ॥ ४३ ॥ स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातु चित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः ॥४४॥ यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः । सद्यः क्षिणोत्यन्वहमेधती सती यथा पदांगुष्ठविनिःसृता सरित् ॥ ४५ ॥ यथा श्रीर्नित्यमुक्तापि प्राप्तकामापि च स्वयं । उपास्ते विष्णुमेवैकमेवं भक्तो हरेर्भवेत् ॥ ४६ ॥ स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम् । सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥४७॥ मन्ये कुतश्चिद्भयमच्युतस्य पादांबुजोपासनमत्र नित्यम् । उद्विग्नबुद्धेरसदात्मभावात्सर्वात्मना यत्र निवर्तते भीः ॥ ४८ ॥ एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः । दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ ४९ ॥ नान्यं तदंघ्र्युपनयादपवर्गमूर्तेः क्षेमं जनस्य परितोभियदेवि विद्मः । ब्रह्मा बिभेत्यलमतो द्विपराध्र्यधिष्ण्यः कालस्य तत्किमुत तत्कृतभौतिकानाम् ॥ ५० ॥ दास्यादि त्रितयं देवि प्रेमसीमागतं यदा । भवेत्तदा साधकानामित्थं तत्प्रार्थनं वरम् ॥ ५१ ॥ यस्मात्प्रियाप्रियवियोगसयोगजन्मशोकाग्निना सकलयोनिषु दह्यमानः । दुःखौषधं तदपि दुःखमतद्धियाहं भूमन् भ्रमामि

१ कीर्तनमाहात्म्यं पाद्मे तथा श्रीकृष्णचैतन्यमहाप्रभुशिक्षायां अत एव "नाहं तिष्ठामि वैकुण्ठे योगिनां हृदये न च । मद्भक्ता यत्र गायंति तत्र तिष्ठामि नारद" ॥ इति भगवद्वाक्यम् । २ स्मरणमाहात्म्यं श्रीगारुडे । ३ पादसेवामाहात्म्यं श्रीमद्भागवते तथा श्रीमध्वभाष्ये । ४ अर्चनमाहात्म्यं श्रीमद्भागवते । ५ वंदनमाहात्म्यं श्रीपाद्मे तथा भागवते ।

वद मे तव दास्ययोगम् ॥ ५२ ॥ तस्यैव मे सौहृदसख्यमैत्री दास्यं पुनर्जन्मनि जन्मनि स्यात् । महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसङ्गः[२] ॥ ५३ ॥ वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथा तथाऽपि वा । भगवँस्तव पादपद्मयोरहमद्यैव मया समर्पितः[३] ॥ ५४ ॥ श्रीविष्णोः श्रवणे परीक्षिदभवद्वैय्यासकिः कीर्तने प्रल्हादः स्मरणे तदंघ्रिभजने लक्ष्मीः पृथुः पूजने । अक्रूरस्त्वभिवंदने कपिपतिर्दास्येऽथ सख्येऽर्जुनः सर्वस्वात्मनिवेदने बलिरभूत्कृष्णाप्तिरेषां परम् ॥ ५५ ॥ सा त्वं मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने । करौ हरेर्मंदिरमार्जनादिषु श्रुतिं कुरुष्वाच्युतसत्कथोदये ॥ ५६ ॥ मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गम् । घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥ ५७ ॥ पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने । कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः ॥५८॥ तस्या भक्तेः परा काष्ठा सर्वस्वात्मसमर्पणम् । तदाश्रयः प्रपत्तिश्च वरणं शरणागतिः ॥ ५९ ॥ रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः । शरणागतिरेषा स्याद्विष्णौ प्रेमरसप्रदा ॥६०॥ मित्रभावेन संप्राप्तं न त्यजेत्स कथं च न । दोषो यद्यपि तस्य स्यात्सतामेतदगार्हितम् ॥ ६१ ॥ सकृदेव प्रपन्नाय तवाऽस्मीति च याचते । अभयं सर्वभूतेभ्यो ददात्येतद्व्रतं हरेः[४] ॥ ६२ ॥ अतो निवेदनं स्वस्य स्मर्तव्यं सततं प्रिये । स्मरत्येवं कृपापूरपारावारोऽपि तादृशान् ॥ ६३ ॥ एष यं वृणुते लभ्यो न मे भक्तः प्रणश्यति । इति तद्वचनाच्चापि ततः सा दृढतां

---

१ दास्यविज्ञानं श्रीमद्भागवते । २ सख्यविज्ञानं श्रीमद्भागवते । ३ आत्मनिवेदनविज्ञानं श्रीमत्पूज्यपादयामुनमुनेः । अत एव "बुद्धिहेतुप्रवृत्तिराविशुद्धेरवघातवत्" । इति भक्तिदर्शनम् । ४ श्रीवाल्मीकीये श्रीरामवाक्यम् ।

गतौ ॥ ६४ ॥ भावमुत्पादयेत्कंचित्तत्प्रसादेन भूयसा । तदा रागात्मिका नाम्ना कथ्यते भक्तिकोविदैः ॥ ६५ ॥ निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् । पिवत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ ६६ ॥ संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य । लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद्विविधदुःखदवार्दितस्य ॥६७॥ उत्कर्षजविशेषैः स भावोप्यष्टविधो मतः । आदौ भावस्ततः प्रेमा प्रणयः स्नेह एव च ॥ ६८ ॥ रागो मानोऽनुरागश्च महाभावस्तथाष्टमः । विस्तरस्तु यथा शास्त्रं द्रष्टव्यो [2]रसभावुकैः ॥ ॥ ६९ ॥ उन्मज्जन्ति निमज्जन्ति प्रेम्ण्यखंडरसत्वतः । सर्वे रसाश्च भावाश्च तरंगा इव [3]वारिधौ ॥ ७० ॥ एवमेकात्मकेऽनंते नित्ये ब्रह्ममये सुखे । स्वयं भाते भक्तिरसे भेदा[4] द्वादश कीर्ति-

---

१ "यमेवैष आत्मा वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इतिश्रुतेः। "ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेत् । बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति ॥ स्नेहाद्रागविनाशः स्यादासक्त्या स्याद्गृहारुचिः । यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि" ॥ इति श्रीमद्वल्लभाचार्याः । नारदस्तु " दर्पिताऽखिलाचारता तद्विस्मरणे परमव्याकुलता" इति नारदसूत्रं च । २ श्रीमद्गौडपादीयभक्तिरसामृतसिंध्वादिषु तथा बोपदेवकृतमुक्ताफलहरिलीलादिग्रंथेषु तथा भक्तिमीमांसाभक्तिरसायनकृष्णामृतमहार्णवादिषु च विस्तरो द्रष्टव्यः। ३ अत एव " द्वेषप्रतिपक्षभावाद्रसशब्दाच्च रागः" इति भक्तिसूत्रम् । "भावप्रधानमाख्यातम्" इति च निरुक्तम् । तत्र आख्यातं वेदवेद्यं ब्रह्मभावप्रधानमित्यपि महर्षिसंमतं भवति । ४ अत एव "रसो वै सः" "रसं ह्येवायं लब्ध्वानन्दी भवति" इति च तैत्तिरियिश्रुतिः । "किं रसनं किमाहो तद्भजनम् रसति भजति तस्य [illegible]ना रसनम्" इति श्रीता[illegible]नीयश्रुतिः । भक्तिरसास्वादप्रकारश्चास्माभिर्भक्तिरसायने सविस्तरं वर्णित इति । "जन्माद्यस्य यतोन्वयात्" इत्यत्र परमहंसप्रियाव्याख्यायां श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमधुसूदनसरस्वतीपूज्यपादास्तदनुसारेण दशोल्लासविशिष्टभक्तिरसायनस्यादिमपद्यं सूत्रभूतं "नवरसमिलितं वा केवलं वा पुमर्थं परमामिह मुकुन्दे भक्तियोगं वदन्ति" इत्यादि । तत्र पुमर्थं परं ब्रह्मेत्यर्थः । तथा च निर्विशेषस्यापि परब्रह्मणः सच्चिदानन्दा इव नवरसस्थायिभावरूपाः स्वरूपविशेषाः पुमर्थ इति स्पष्टमेवोक्तम् । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । सद्देहस्सुखगंधश्च ज्ञानभाः सत्पराक्रमः" इत्यादि स्वरूपलक्षणश्रुतेः ।

ताः ॥ ७१ ॥ ईशात्मकास्तत्कृपया भावुकात्मान ईरिताः । दिङ्मात्रमत्र तन्नाम निर्देशादि उदीर्यते ॥ ७२ ॥ शान्तिर्दास्यं च सख्यं च वात्सल्यं रतिरेव च । पंचैव मुख्या गौणास्तु वीरः करुण एव च ॥ ७३ ॥ अद्भुतो हाससंज्ञश्च भयानक इति स्मृतः । बीभत्सश्च तथा रौद्रः सप्तैतेऽपि रसाः शुभाः ॥ ७४ ॥ शृंगारवीरकरुणाऽद्भुतहास्यभयानकाः । बीभत्सरौद्रौ च रसाः शान्तो वत्सल एव च । एवं के चिद्वर्णयंति दश भेदान्सुमंगलान् ॥७५॥ शृंगारी राधिकायां सखिषु सकरुणः क्ष्वेडदग्धेष्वघाहेर्बीभत्सी तस्य गर्भे व्रजकुलतनयाचैलचौर्ये प्रहासी । वीरी दैत्येषु रौद्री कुपितवति तुरासाँहि हैय्यंगवीनस्तेये भीमान् विचित्री निजमहसि शमीदामबन्धे स जीयात् ॥ ७६ ॥ मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान् गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः । मृत्युर्भोजपतेर्विराडविदुषां तत्वं परं योगिनां वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः ॥७७॥ श्रीमत्सनत्कुमाराद्याः शांतब्रह्मरसात्मकाः । हनूमदुद्धवाद्यास्तु दास्यास्वादपरा मताः ॥७८॥ गोपबालाः सुदामाद्यास्तत्सख्यानंदभागिनः । यशोदानंदगोपाद्यास्तद्वात्सल्याऽभिमानिनः॥७९॥ भैष्मीराधादिरूपेषु शृंगारः परमोज्ज्वलः । भीष्मो वीरे दशरथः करुणे स्थितिमाप्तवान् ॥ ८० ॥ बल्यर्जुनयशोदानां विश्वरूपस्य दर्शने । अत्यद्भुतरसास्वादः कृष्णानुग्रहतोभवेत् ॥ ८१ ॥ गोपालबाला हासस्य श्रीदामोद्वहनादिषु । एवमन्यत्र भीत्यादि

१ श्रीभगवल्लीलाश्च नित्यनैमित्तिकभेदेन द्विधा तत्र नित्यलीलास्त्वप्रकटाः नैमित्तिकाश्च प्रकटाः ये चाध्यात्मराज्याधिकारिणो भगवत्कृपापात्रास्ते तु चिदानंदमयाप्रकटलीलानां नित्यमेव दर्शनं कुर्वंति ततश्च प्रकटलीलायामेव स्वस्वीयानामाविर्भावतिरोभावौ नाप्रकटलीलायामिति तदुक्तं । "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्वतः । मूढोऽयं नाभिजानाति लोको मामजमव्ययं" इति गीतायां "जयति जननिवासः" इत्यादिश्रीभागवतं तदेतल्लीलानित्यत्वं भावुकजनसंवेद्यामिति ।

त्रितयेपि विचिंत्यताम् ॥ ८२ ॥ गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । संबंधाद्वृष्णयः स्नेहात्पार्था भक्त्या मुनीश्वराः ॥ ८३ ॥ ब्रह्माद्वैतज्ञानिनस्तु शांतास्वादपरायणाः । द्वैता दास्यं सख्यमपि विशिष्टाद्वैतिनः परम् ॥ ८४ ॥ शुद्धाद्वैतास्तु वात्सल्यं द्वैताद्वैता रतिं तथा । भजंत्येते ब्रह्मविदः कृतकृत्या भवन्त्यमी ॥ ८५ ॥ तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्[2] । निविष्टं भावनापाकान्महाभावो यदा भवेत् ॥ ८६ ॥ कीटपेशस्कृतोन्यायात्तदा तत्साम्यतामियात् । जीवन्मुक्तो गुणातीतः स्थितप्रज्ञस्तदोच्यते ॥ ८७ ॥ भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एक कालः । प्रपद्यमानस्य यथाऽश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥ ८८ ॥ तस्यैवाहं ममैवासौ स एवाहमिति त्रिधा । भगवद्रसरूपं स्यात्पूर्वोक्ताभ्यांसपाकतः[3] ॥ ८९॥ त्रिष्वंतिमं च यद्रूपं स एवाहमिति स्फुटम् । अपरोक्षदृशिर्ज्ञानी एकभक्तिः स उच्यते[4] ॥ ९० ॥ सर्वभूतेषु यः पश्येद्भगवद्भावमा-

---

१ तथा च पंचस्वपि संप्रदायेषु परमार्थतो विरोधाभावेन सर्वेषां वैदिकत्वेनैक्यमस्तीति स्वस्वाचार्योक्तसत्संप्रदायानुरोधेन स्वहितसंसाधने तीव्रं यत्नं कुर्वंतु मात्सर्यं त्यजंतु सौहार्दं भजंत्विति सर्वं मंगलम् । २ अत एव "ओं गुणमाहात्म्यासक्तिरूपासक्तिपूजासक्तिस्मरणासक्तिदास्यासक्तिसख्यासक्तिकांतासक्तिवात्सल्यासक्तिआत्मनिवेदनासक्तितन्मयतासक्तिपरमविरहासक्तिरूपा एकधाप्येकादशधा भवति" । इति श्रीनारदसूत्रम् । "तत्परिशुद्धिश्च गम्या लोकवल्लिंगेभ्यः । सम्मानबहुमानप्रीतिविरहेतरविचिकित्सामहिमख्यातितदर्थप्राणस्थानतदीयता सर्वतद्भावा प्रातिकूल्यादीनि च स्मरणेभ्यो बाहुल्यात्" इति भक्तिदर्शनम् । ३ श्रीमत्पूज्यपादपरमहंसपरिव्राजकाचार्य्यमधुसूदनसरस्वतीभगत्पादीयभक्तिरसायने । अत एव "तव वयं स्मः" इति ऐतरेयश्रुतेः तथा "सत्यपि भेदापगमे नाथ तवाऽहं न मामकीनस्त्वम्" इत्यादिश्रीमच्छंकरभगवत्पादाः । द्वितीये ममैवासावित्यत्र सर्वरसेषु तत्रापि स्फुटं वात्सल्यादिषु स्वीयभावनं । तृतीये 'सएवाहमित्यत्र सोहमस्मि स एवाहमास्मि" इति श्रुतिः "कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः" इति श्रीरासे व्रजदेव्युक्तिर्विरहे मधुरिपुरहमिति भावनशीलेति श्रीजयदेवश्च । ४ अत एव "सा परानुरक्तिरीश्वरे" इति भक्तिदर्शनम् । "ओं सा त्वस्मिन्परमप्रेमरूपा" "ओं भक्ता एकान्तिनो मुख्याः" इति श्रीनारदसूत्रम् । "सैकान्तभावो गीतार्थप्रत्यभिज्ञानात्" । इति भक्तिदर्शनम् ।

त्मनः । भूतानि भगवत्यात्मन्नेष भागवतोत्तमः ॥९१॥ न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् । न योगसिद्धीरपुनर्भवं वा तदर्पितात्मेच्छति तद्विनान्यत् ॥ ९२ ॥ विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः । प्रणयरशनया धृतांघ्रिपद्मः स भवति भागवतप्रधान उक्तः॥९३॥ त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात्। न चलति भगवत्पदारविंदाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः ॥ ९४ ॥ स भक्तः सर्वदा देवि यथा प्रार्थयते हरिं । तथा शृणु परं वाच्यं तस्य विश्वसुखावहम् ॥ ९५ ॥ नैवोद्विजे पर दुरत्ययवैतरण्यास्त्वद्वीर्यगायनमहामृतमग्नचित्तः । शोचे ततो विमुखचेतस इंद्रियार्थमायासुखाय भरमुद्वहतो विमूढान् ॥ ९६ ॥ प्रायेण देवमुनयः स्वविमुक्तिकामा मौनं चरंति विजने न परार्थनिष्ठाः । नैतान् विहाय कृपणान् विमुमुक्षरेको नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥ ९७॥ मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशांतात्मा कोटिष्वपि सदा प्रिये ॥ ९८ ॥ त्वयापि सततं देवि भक्त्या सेव्यः सुहृत्सतां । स हि माता पिता चैव कृत्स्नस्य जगतो गुरुः ॥ ९९ ॥

इति श्रीश्रीमधुसूदनसंहितायां भक्तियोगवर्णनं नाम सप्तदशोऽध्यायः ॥

---

१ अत एव । "सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृण्हंति विना मत्सेवनं जनाः" ॥ इति श्रीभगवद्वाक्यम् । "सार्वभौमं पारमेष्ठ्यं शाक्रं धिष्ण्यं तथैव च । रसाधिपत्यं योगर्द्धिं न वांच्छंति हरेर्जनाः ॥ हरिणा दीयमानं वा सालोक्यं यादवेश्वर । न गृण्हन्ति कदाचित्ते सत्संगानंदनिर्वृताः ॥ सामीप्यं ते न वांछन्ति भगवद्विरहातुराः । सन्निकृष्टे न तत्प्रेम यथा दूरतरे भवेत् ॥ सारूप्यं दीयमानं वा समानत्वाभिमानिनः । नैरपेक्ष्यान्न वांछन्ति भक्तास्तत्सेवनोत्सुकाः । एकत्वं चापि कैवल्यं न वांछन्ति कदा च न । एवं चेत्तर्हि दासत्वं क स्वामित्वं परस्य च" ॥ इति श्रीगर्गसंहितायाम् । २ त्रिगुणजनकाहंकारात्परतः परमीशपदं ततोऽर्वागेव च जीवाधिकारः । ईशश्चात एव पूर्णः सन् जीवस्य सहजसख्यं स्वीक्रियमाणस्तदुपकारोन्मुखः सर्वदा तत्कल्याणमेव करोति । जीव-

# अष्टादशोऽध्यायः ॥

# समाधिवर्णनम् ॥

॥ श्रीश्रीमधुसूदन उवाच ॥ समाधिमधुना वक्ष्ये भवपाशविनाशनम् । अनाद्यविद्याबद्धस्य यथावच्छ्रोतुमर्हसि ॥ १ ॥ आरुरुक्षोर्मुनेर्योगं कर्म्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते॥२॥ यथा दीपो निवातस्थो नेंगते सोपमा स्मृता । योगिनो यतचित्तस्य युंजतो योगमात्मनः ॥ ३ ॥ उद्धरेदात्मनात्मानं नात्मानमवसादयेत्। आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः ॥ ४ ॥ शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया । आत्मसं-

---

—श्चाहंतिरस्कारिणीपिहितस्वाराज्योऽपूर्णः सन् तमीशं विस्मृत्यान्येष्वपकारादिपरः स्वीयाकल्याणमाभजते। यदि स्वसखा भगवानेव कृपयति तदाऽहंप्रत्ययतिरस्कारिण्याः परं पारे प्रकाशमात्मानमीशं पश्यँल्लब्धात्मकाष्ठस्तं प्रत्यन्यजीवमुमुक्षापरः सन्नेवं प्रार्थयते स्वीयं कल्याणं चेच्छति । यथा श्रीशंकरभगवतः । "अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम् । भूतदयां विस्तारय तारय संसारसागरतः" ॥ इत्यादिषट्पदीस्तोत्रम् । यथा वा "सर्वत्र सुखिनः सन्तु सर्वे संतु निरामयाः । सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखमाप्नुयात् ॥ उत्तिष्ठोत्तिष्ठ गोविंद उत्तिष्ठ गरुडध्वज । उत्तिष्ठ कमलाकान्त त्रैलोक्ये मङ्गलं कुरु ॥ न रोधयाति मां योगो न सांख्यं धर्म एव च । न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥ व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः । यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥ सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः । गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः । रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेऽनघ ॥ बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः । वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः । व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथा परे ॥ ते नाधीतश्रुतिगणा नोपासितमहत्तमाः । अव्रतातप्ततपसः सत्सङ्गान्मामुपागताः ॥ केवलेन हि भावेन गोप्यो गावो नगा मृगाः । येन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥ यं न योगेन सांख्येन दानव्रततपोऽध्वरैः । व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि" इत्यादिपरः सहस्रवचनैः सर्वोप्ययं भक्तियोगो भागवतसंगसाध्य इति परमं तत्वम् ।

स्थं मनः कृत्वा न किंचिदपि चिंतयेत् ॥ ५ ॥ तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् । स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ ६ ॥ संकल्पप्रभवान्कामाँस्त्यक्त्वा सर्वानशेषतः । मनसैवेंद्रियग्रामं विनियम्य समंततः ॥ ७ ॥ प्रशांतमनसं ह्येनं योगिनं सुखमुत्तमम् । उपैति शांतरजसं ब्रह्मभूतमकल्मषम् ॥ ८ ॥ युंजन्नेवं सदात्मानं योगी विगतकल्मषः । सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते ॥ ९ ॥ यत्रोपरमते चित्तं निरुद्धं योगसेवया । यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ ॥ १० ॥ सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् । वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ ११ ॥ यं लब्ध्वा चाऽपरं लाभं मन्यते नाधिकं ततः । यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ १२ ॥ सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ १३ ॥ परं ज्ञानं परं सांख्यं परं कर्म विरागता । परा भक्तिः समाधिश्च योगपर्य्यायवाचकाः ॥ १४ ॥ ज्ञायते विश्वमखिलं तत्वं श्रीपरमात्मनः । साक्षात्कारेण योगेन परं ज्ञानं तदुच्यते ॥ १५ ॥ सांख्येन सर्वतत्वानि परं तत्वमसंख्यया । योगेन साक्षात्क्रियते तत्सांख्यं वै परं स्मृतम् ॥ १६ ॥ गर्हितं चापि योगार्थं कृष्णप्रीत्यै च कर्म्म यत् । अकामं चापि वेदोक्तं नैष्कर्म्यं तत्प्रचक्षते ॥ १७ ॥ वासुदेवात्मकं विश्वं साक्षात्कारेण विंदति । यल्लाभान्न परो लाभः तद्वैराग्यं परं स्मृतम् ॥ १८ ॥ सेवया ज्ञानयोगाभ्यां यया साक्षाज्जनार्दनः ॥ क्रियते सा परा भक्तिः सत्प्रेमाल्हादिनी मता ॥ ॥ १९ ॥ सतत्वो युज्यते जीवः समाधौ परमात्मनि । संयोगो योगिनां श्रेष्ठो वियोगो वै यदन्यथा ॥ २० ॥ समाधिः समतावस्था जीवात्मपरमात्मनोः । ब्रह्मण्येव स्थितिर्वा सा समाधिः

१ इति श्रीमद्भगवद्गीतायाम् । २ श्रीसनत्कुमाररहस्ये ।

प्रत्यगात्मनोः ॥ २१ ॥ ध्यायेद्यथा यथात्मानं तत्समाधिस्तथा तथा । ध्यात्वैवात्मनि संस्थाप्य नाऽन्यथात्मा वशो भवेत् ॥ ॥ २२ ॥ एवमेव हि सर्व्वत्र यत्प्रसक्तस्तु यो नरः । तथात्मा सोऽपि तत्रैव समाधिं समवाप्नुयात् ॥ २३ ॥ अभिन्नतां यथा गच्छेन्नद्यम्बु जलधिस्थितम् । तथात्माऽभिन्न एवात्र समाधिं समवाप्नुयात् ॥ २४ ॥ एतदुक्तं भवत्यत्र देवि ब्रह्मविदाम्वरे । कर्म्मैव विधिवत्कुर्व्वन्कामसंकल्पवर्जितम् ॥ २५ ॥ वेदान्तेष्वपि शास्त्रेषु सुशिक्षितमनास्तथा । गुरुणा चोपदिष्टार्थं युक्तयोपेतं वरानने ॥ २६ ॥ विद्वद्भिः सर्व्वशास्त्रज्ञैर्विचार्य्य च पुनः पुनः । निश्चितार्थेषु तस्मिंस्तु सुशिक्षितमनाः सदा ॥ २७॥ योगमेवाऽभ्यसेन्नित्यं जीवात्मपरमात्मनोः । ततस्त्वाभ्यन्तरैश्चिह्नैर्बाह्यैर्वा कालसूचकैः ॥ २८ ॥ विनिश्चित्यात्मनः कालमन्यैर्वा परमार्थवित् । निर्भ्भयः सुप्रसन्नात्मा भूत्वा तु विजितेन्द्रियः ॥ २९ ॥ स्वकर्म्मनिरतः क्षान्तः सर्व्वभूतहिते रतः । प्रदाय विद्यां पुत्रस्य मन्त्रं च विधिपूर्व्वकम् ॥ ३० ॥ संस्कारानात्मनः सर्व्वानुपादिश्य तथाऽनघे । पुण्यक्षेत्रे शुचौ देशे विद्वद्भिश्च समावृते ॥ ३१ ॥ भूमौ कुशान् समास्तीर्य्य कृष्णाजिनमथाऽपि वा । तस्मिन् सुबद्धपर्य्यङ्को[2] मन्त्रैर्बद्धकलेवरः ॥ ३२ ॥ आसने नाऽन्य-

१ अत एव "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" । "तदा द्रष्टुः स्वरूपेवस्थानम् " । इत्यादि श्रीमत्पूज्यपादभगवत्पतञ्जलियोगदर्शने । " समाधिनिर्धौतमलस्य चेतसः " । इत्यादि मै० श्रुतिः । " समाधिरचलोऽभयः " । इत्यादि गौ० श्रुतिः । २ सुबद्धपर्यंकः सुबद्धजानुकः । "अन्तरङ्गसमुद्रस्य रोधे वेलायतेऽपि वा । ब्रह्मप्रणवसँल्लग्ननादो ज्योतिर्मयात्मकः ॥ मनस्तत्र लयं याति तद्विष्णोः परमं पदम् । तावदाकाशसंकल्पो यावच्छब्दः प्रवर्त्तते ॥ निःशब्दं तत्परं ब्रह्म परमात्मा समीयते । नादो यावन्मनस्तावन्नादान्तेऽपि मनोन्मनी॥ सशब्दश्चाक्षरे क्षीणे निःशब्दं परमं पदम् । सदा नादानुसंधानात्संक्षीणा वासना तु या॥ निरञ्जने विलीयेते मनोवायू न संशयः । नादकोटिसहस्राणि बिन्दुकोटिशतानि च ॥ सर्वे तत्र लयं यान्ति ब्रह्मप्रणवनादके । सर्वावस्थाविनिर्मुक्तः सर्वचिन्ताविवर्जितः ॥ मृतवत्तिष्ठते योगी स मुक्तो नात्र संशयः । " इत्यादि नादबिन्दुश्रुतिः ।

धीरास्ते प्राङ्मुखो वाऽप्युदङ्मुखः । नवद्वाराणि संयम्य देव्य-
स्मिन् ब्रह्मणः पुरे ॥ ३३ ॥ उन्निद्रहृदयाम्भोजे प्राणायामैः प्र-
बोधिते । व्योम्नि तस्मिन् प्रभारूपेऽभ्यन्तरे सर्व्वकारणे ॥ ३४॥
मनोवृत्तिं सुसंयम्य परमात्मनि पंण्डितः । मूर्ध्न्याधायात्मनः
प्राणं भ्रुवोर्मध्ये तदानघे ॥ ३५ ॥ कारणे परमानन्दे स्थिते
वायुं विधारयन् । ओमित्येकाक्षरं ब्रह्म व्याहरन् सुसमाहितः ॥
॥ ३६ ॥ शरीरं संत्यजेद्विद्वाननेन विधिना द्विजः । समाधावभ्य-
सेत्तत्वं यद्योगेनात्मदर्शनम् ॥ ३७ ॥ तदेव संस्मरेद्योगीत्यजन्स्वं
तत्कलेवरम् । तं तमेवैत्यसौ भावमिति यद्भगवद्वचः ॥ ३८ ॥
त्वश्चैव योगमास्थाय ध्यायन्त्यात्मानमात्मनि । स्वकर्म्मनिरता
शान्ता त्यजान्ते देहमात्मनः ॥ ३९ ॥ ज्ञानेनैव संहतेन नित्य-
कर्म्माणि कुर्व्वतः । निवृत्तफलसङ्गस्य मुक्तिर्देवि करे स्थिता ॥
॥ ४० ॥ सामान्यतो मया देवि वर्णितं मतिमद्वरे । समाधितत्त्व-
रूपं ते योगानां चरमं फलम् ॥ ४१ ॥ तथा समाधिसिद्ध्याऽन्ते

१ निर्विकल्पसमाधिभावप्राप्तस्य योगिनो जीवन्मुक्तस्य पक्षे जीवनं मरणं वा तुल्यमेव प्रतिभाति । तथापि ततो निकृष्टाधिकारिणां सविकल्पसमाधिमतां योगिनामेवोपकारार्थमत्रैव मुपदिश्यते । साधकसामान्यस्य हि देहत्यागो विशिष्टपरिवर्तोत्पादको भवति । अतस्तदवस्थातः सद्गतिलाभकरो ह्युपदेशसमूहो नियतमेव ज्ञातव्यः ॥ अयं साधनोपदेशः श्रीमत्पूज्यपादयोगीकुलचूडामणिमहर्षियाज्ञवल्क्यसंकथितः । अत्रेदं बोध्यम् । प्रशंसनीयो मृत्युर्हि द्विविध एव । योगेन तथा धर्मयुद्धेन । भगवतो जगद्रक्षकस्य जगद्वर्धिनीपालिनीरूपे शक्ती स्तः । आद्या ब्राह्मतेजोरूपा क्षात्रतेजोरूपाऽपरा । पूर्वया विश्वं वर्धयित्वा योगेन प्राकृतं देहं त्यक्त्वा स्वस्वरूपावाप्तिरिति । परया विश्वं पालयित्वा धर्मयुद्धाभावे योगेन तत्सद्भावे धारातीर्थे देहं त्यक्त्वा सूर्यमंडलवाप्त्या स्वर्गप्राप्तौ तत्र स्वरूपावाप्तिरिति । अन्यरूपेण तु मृत्युः पशुतिरश्चां मृत्युरिव मनुष्याणामपीति स प्राज्ञेन परिहर्तव्य एव । तदुक्तं श्रीभागवते "स्थिरं सुखं चासनमाश्रितो यतिर्यदा जिहासुरिममंग लोकं । काले च देशे च मनो न सज्जयेत्प्राणं नियच्छेन्मनसा जितासुः" इत्यादिना योगमार्गेण देहत्यागः । "योगेनांते तनुत्यजां॥ रघूणामन्वयं वक्ष्ये" इति कालिदासः । "स्वर्गद्वारमपावृतं ॥ सुखिनः क्षत्रियाः पार्थ लभंते युद्धमीदृशम्॥ धर्म्याद्धि युद्धाच्छ्रेयोन्यत्क्षत्रियस्य न विद्यते" इति च श्रीभगवदुक्तेः । श्रीद्रोणकृपादिब्राह्मणा अपि तथा युत्धं वांछंतीति नान्यथा मंतव्यमिति ।

शरीरं त्यजतां नृणां । मोक्षलाभप्रकारश्च संक्षेपेणोक्तवानहम् ॥ ॥ ४२ ॥ अधुना तव कल्याणं चिकीर्षुश्चिरजीविनि । विस्तरेण वदिष्यामि समाधेस्तत्त्वमुत्तमम् ॥ ४३ ॥ योगिनां परमाराध्यो योगशास्त्रप्रवर्त्तकः । समाधितत्त्वमेवं वै व्याचकार पतञ्जलिः ॥ ४४ ॥ सम्प्रज्ञातस्तथाऽसम्प्रज्ञातो द्वौ भवतः प्रिये । समाधेर्योगसंसिद्धे-र्भेदौ योगिसमादृतौ ॥ ४५ ॥ सम्प्रज्ञातस्वरूपेण साधको वै स-माधिना । सारूप्यादिप्रदं[1] मोक्षं सम्प्राप्नोति महाफलम् ॥ ४६ ॥ असम्प्रज्ञातरूपेण परोत्कृष्टसमाधिना । ब्रह्मकैवल्यरूपं च परमं लभते फलम्[2] ॥ ४७ ॥ महाभावप्रकाशेन मन्त्रयोगविधानतः । समाधिः साधकानां यो जायते साधनप्रिये ॥ ४८ ॥ यश्च प्रा-णनिरोधेन हठशास्त्रनिरूपितः । समाधिर्जायते सम्यक् साध-नानां महत्फलम् ॥ ४९ ॥ यश्चस्यादनुसन्धानान्नादस्य ज्योतिष-स्तथा । समाधिर्लययोगेन जायते मनसो लयात् ॥ ५० ॥ त्रय-श्चैते मयोक्तास्ते सम्प्रज्ञाताः समाधयः । योगत्रयस्य योगज्ञे फ-लरूपाः प्रकीर्तिताः ॥ ५१ ॥ ज्ञाने तु पूर्णतां प्राप्ते ब्रह्मसद्भा-वमेत्य वै । राजयोगेन युक्तानां समाधिर्यो भवेत्पुनः ॥ ५२ ॥ स हि सर्व्वसमाधीनां श्रेष्ठः प्रेष्ठश्च सर्व्वथा । पुरुषार्थः स एवात्र परमो मोहपारकृत्[3] ॥ ५३ ॥ असम्प्रज्ञातरूपोऽसौ समाधिर्जायते यदा । ब्रह्मकैवल्यमेवैतत्साधकानां परं धनं ॥ ५४ ॥ स एवोपास्यभाव-श्चोपासनानां परेप्सितम् । सीमा च सा परा सर्व्वयोगानां सा-

१ संप्रज्ञातसमाध्यवस्थायां पूर्णेऽपि वैराग्ये कोपि सम्बन्धोऽवशिष्येत । अतस्तदवस्थायां मृत्यौ सति साधकः परमेष्ठिसालोक्यसामीप्यादिकमेव क्रममुक्तिपदँल्लभते, ततश्च तस्य पुनर्बन्धनसंभावना विद्यत एव । अतो हि निर्विकल्पसमाधिरेव परमोन्नतिविधायकः सर्वभय-रहितश्च भवति ॥ अत एव "संप्रज्ञातसमाधिः असम्प्रज्ञातनामयं समाधिः" इत्यादि सु० श्रुतिः । २ अत एव " आत्मसंस्थं तदा ज्ञानम्" इत्युक्त्वा । "अस्पर्शयोगो वै नाम दुर्दर्शः सर्वयोगीभिः । योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥ अलिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा । सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभयः ॥ " इत्यादि श्रुतिः । ३ " पुरुषार्थ-शून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चिच्छक्तिः " इति योगदर्शनम् ।

धनस्य च ॥ ५५ ॥ सरित्पतौ निविष्टाम्बु यथाऽभिन्नं लयं त्वियात् । तथाऽभिन्नं मनस्तत्र समाधिं समवाप्नुयात् ॥५६॥ नाहं देहो न च प्राणो नेन्द्रियाणि तथैव च । न मनोऽहं न बुद्धिश्च नैव चित्तमहंकृतिः ॥ ५७ ॥ नाहं पृथ्वी न सलिलं न च वह्निर्न चानिलः । न चाऽकाशो न शब्दश्च न च स्पर्शस्तथा रसः ॥ ॥ ५८ ॥ नाहं गन्धो न रूपं च न मायाऽहं न संसृतिः । सदा साक्षिस्वरूपत्वाच्छिव एवास्मि केवलः ॥ ५९ ॥ इति धीर्या मुनिश्रेष्ठ सा समाधिरिहोच्यते ॥ ६० ॥ सलिले सैन्धवं यद्वत्साम्यं भजति योगतः । तथात्ममनसोरैक्यं समाधिरभिधीयते ॥ ६१ ॥ निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः । वृत्तिविस्मरणं सम्यक् समाधिर्ज्ञानसंज्ञकः ॥ ६२ ॥ ऊर्द्ध्वपूर्णमधः पूर्णं मध्यपूर्णं तदात्मकम् । सर्व्वपूर्णं स आत्मेति समाधिस्थस्य लक्षणम्॥६३॥

इति श्रीश्रीमधुसूदनसंहितायां समाधिवर्णनं नाम अष्टादशोऽध्यायः ।

## ऊनविंशोऽध्यायः ।

# वैराग्याऽभ्यासमाहात्म्यवर्णनम् ।

देव्युवाच ॥ कृपया ते कृपासिन्धो प्राणनाथ श्रुतं मया । सदाचारादिधर्म्माणां वर्णनं लोकमोचनम् ॥ १ ॥ श्रुताश्च देवपूजानां भेदा विविधरूपगाः । अष्टाङ्गानां च योगानां पूर्णं विवरणं श्रुतम् ॥ २ ॥ श्रुत्वा च परमानन्दो भवतः कृपया मया । अनुभूतः पुनः प्रष्टुं प्रणोदयति मां भृशम् ॥ ३ ॥ को वा मि-

१ अत एव "समाधिः संविदुत्पत्तिः परजीवैक्यतामतिः ।" इत्यादि श्रीमत्पूज्यपादकृष्णद्वैपायनवेदव्यासः । २ इति श्रीसूतसंहितायाम् । ३ इति श्रीमत्पूज्यपादः महर्षिर्वशिष्ठः । ४ इति श्रीमत्पूज्यपादः महर्षिर्भरद्वाजः । ५ इति श्रीमत्पूज्यपादः भगवान् वेदव्यासः ।

थोऽस्ति सम्बन्धो धर्म्माणां बहुरूपिणां । आचारादिसमाध्यन्त-नानाभेदजुषां विभो ॥ ४ ॥ किं वाऽवश्यं च कर्तव्यं साधकैः सिद्धिवाञ्छकैः । दैवं वा वस्तु किं नाम यद्बहु श्रूयते भुवि ॥ ५ ॥ उपदेशं तवैतेषु विषयेषु सुधोपमम् । श्रुत्वानुष्ठाय तद्रूपं स्यामहं सार्थजीवना ॥ ६ ॥ श्रीश्रीमधुसूदन उवाच ॥ परितुष्टोऽस्मि ते भद्रे तव प्रश्नैश्च धीमति । अधुनैव प्रवक्ष्यामि यन्मां पृच्छसि सुव्रते ॥ ७ ॥ आचारादिसमाध्यन्तसाधनानां पतिव्रते । सर्व्वे-षामेक एवेह सम्बन्धः सम्प्रवर्त्तते ॥८॥ सदाचारानतुष्ठाय शास्त्रो-क्तान् सज्जनादृतान्। नरो नरत्वमभ्येति ह्यन्यथा पशुरेव सः॥९॥ ततो वर्णाश्रमाणाञ्च धर्म्मान् नानाविधान् प्रिये । नित्यान्नैमित्ति-कांश्चैव साधयन् संयतेन्द्रियः ॥ १० ॥ बुद्धिमापादयञ्छुद्धां वि-षयेषु च सर्व्वतः । वैराग्यं भजते यर्हि साधकः सुसमाहितः ॥ ११ ॥ तदैव जायते चास्य शक्तिर्मुक्तिविधायिनी । उपास-नामनुष्ठातुमीश्वरस्य जगत्प्रभोः ॥ १२ ॥ यथैकेन पतत्रेण दृ-ढेनापि सुसन्धिना । न शक्नोति कदाचिद्वै समुद्गन्तुं विहङ्गमः ॥ १३ ॥ तथा वैराग्यवृध्युत्थसाधनास्त्रसमुन्नतिम् । विना नैव विमोक्षस्य समुपायोऽस्ति कश्चन ॥ १४ ॥ साधनानि हि स-र्व्वाणि सन्ति यावन्ति शास्त्रतः[2] । उपासनास्वरूपाणि तानि स-र्व्वाणि सुव्रते[3] ॥ १५ ॥ अङ्गानि यानि चाष्टौ हि साधनानां शु-चिव्रते । अष्टाङ्गयोगनाम्नैव श्रूयन्ते तानि शास्त्रतः ॥ १६ ॥ वै-राग्यं साधको गत्वा परिहृत्य बहिर्जगत् । अन्तर्ज्ञानपरो भूत्वा

१ "आर्जवं चानृशंस्यं च दम इन्द्रियनिग्रहः। सर्वसाधारणं धर्मं चातुर्वर्ण्यं ब्रवीन्मनुः।" इति स्मरणात् ।२अत एव "अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते" इति भगवद्वाक्यं श्री-मद्भगवद्गीतायाम् । ३ आषष्ठादूनविंशपर्यन्तेष्वध्यायेषु संहितायां अस्यां वर्णिता निखिला एवोपदेशा उपासनाधिकारान्तर्गता ज्ञातव्याः। स्वोत्कर्षसाधनार्थं साधकैः श्रीभगवच्छरणाप-न्नैर्यदेव क्रियाजातं समनुष्ठीयते सर्वमेव तदनुष्ठानं " क्रियायोग " इति साधनमित्युपासनेति च नाम्ना परिकीर्त्यते ॥

ह्यन्तःस्थो नावसीदति ॥ १७ ॥ साधनानां तथोक्तानां समभ्यासाच्छनैः शनैः। जनैरात्मपदं रम्यं गम्यते नात्र संशयः ॥१८॥ अतो हे चैव पूर्व्वोक्ते वाञ्छनीये सदानघे। वैराग्यबुद्धेरुत्कर्षः साधनानाञ्च साधनम् ॥ १९ ॥ किं नामेदं बत सुखं येयं संसारसन्ततिः। जायते मृतये लोको म्रियते जननाय च ॥ अस्थिराः सर्व्व एवेमे सचराचरचेष्टिताः ॥ २० ॥ आपदां पतयः पापा भावा विभवभूमयः ॥ २१ ॥ अयःशलाकासदृशाः परस्परमसङ्गिनः। श्लिष्यन्ते केवलं भावा मनःकल्पनया स्वया ॥ ॥ २२ ॥ मनः समायत्तमिदं जगदाभोगि दृश्यते। मनश्चासदिवाभाति केन स्म परिमोहिताः ॥ २३ ॥ कास्तादृशो यासु न सन्ति दोषाः कास्ता दिशो यासु न दुःखदाहः। कास्ताः प्रजा यासु न भङ्गुरत्वम् कास्ताः क्रिया यासु न नाम माया ॥ २४ ॥ असतैव वयं कष्टं विकृष्टा मूढबुद्धयः। मृगतृष्णाम्भसा दूरे वने मुग्धमृगा इव ॥ २५ ॥ न केन चिच्च विक्रीता विक्रीता इव संस्थिताः। बत मूढा वयं सर्व्वे जनाः किमिव शाम्बरम् ॥ २६ ॥ किमेतेषु प्रपञ्चेषु भोगा नाम सुदुर्भगाः। मुधैव हि वयं मोहात्संस्थिता बद्धभावनाः ॥ २७ ॥ आ ज्ञातं बहुकालेन व्यर्थ-

---

१ अत एव "अभ्यासवैराग्याभ्यां तन्निरोधः।" इति श्रीमत्पूज्यपादभगवत्पतञ्जलियोगदर्शने। २ "रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा। गाधोदके मत्स्य इव सुखं विंदेत कस्तदा ॥ पुष्पाणीव विचिन्वंतमन्यत्र गतमानसं। अनवाप्तेषु कामेषु मृत्युरभ्येति मानवं ॥ श्वःकार्यमद्य कुर्वीत पूर्वाण्हे चापराण्हिकं। न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतं ॥ अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगान्महान्। को हि जानाति कस्याद्य मृत्युकालो भविष्यति ॥ अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति। युवैव धर्मशीलः स्यादनिमित्तं हि जीवितं॥" इति श्रीमहाभारते शांतिपर्वणि। ३ इति श्रीमत्पूज्यपादमहर्षिवाल्मीकेः। शांबरं इंद्रजालमिव किं मूढाः। ४ "यद्वत्कांतारमातिष्ठन्नौत्सुक्यं समनुव्रजेत्। ग्राम्यमाहारमादद्यादस्वाद्वपि हि यापनं ॥ तद्वत्संसारकांतारमातिष्ठन् श्रमतत्परः। यात्रार्थमद्यादाहारं व्याधितो भेषजं यथा॥" औत्सुक्यं रागम्। "स्वदेहजानस्वसंज्ञान् यद्वदंगात्कृमींस्त्यजेत्। स्वसंज्ञानस्वकाँस्तद्वत्सुतसंज्ञान् कृमींस्त्यजेत् ॥" इति शांतिपर्वणि।

मेव वयं वने । मोहे निपतिता मुग्धाः श्वभ्रे मुग्धा मृगा इव ॥ ॥ २८ ॥ पर्णानि जीर्णानि यथा तरूणां समेत्य जन्माशु लयं प्रयांति । तथैव लोकाः स्वविवेकहीनाः समेत्य गच्छन्ति कुतोऽप्यहोभिः ॥ २९ ॥ भारो विवेकिनः शास्त्रं भारो ज्ञानञ्च रागिणः । अशान्तस्य मनो भारो भारोऽनात्मविदो वपुः ॥३०॥ युज्यते वेष्टनं वायोराकाशस्य च खण्डनम् । ग्रथनञ्च तरङ्गाणामास्था नायुषि युज्यते ॥ ३१ ॥ मनोरमा कर्षति चित्तवृत्तिं कदर्थसाध्या क्षणभङ्गुरा च । व्यालावलीगात्रविवृत्तदेहा श्वभ्रोत्थिता पुष्पलतेव लक्ष्मीः ॥ ३२ ॥ ललनालानसँल्लीना देवि मानवदन्तिनः । प्रबोधं नाधिगच्छन्ति दृढैरपि शमाङ्कुशैः ॥ ३३ ॥ केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः । दुष्कृताग्निशिखा नार्य्यो दहन्ति तृणवन्नरम् ॥ ३४ ॥ कामनाम्ना किरातेन विकीर्णा मुग्धचेतसाम् । नार्य्यो नरविहङ्गानामङ्ग बंधनवागुराः ॥ ३५ ॥ यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः । स्त्रियस्त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखीभवेत् ॥ ३६॥ दूरं दूरभितो गत्वा समेत्य च पुनः पुनः । भ्रमत्याशु दिगन्तेषु तृष्णोन्मत्ता तुरङ्गमी[२] ॥ ३७ ॥ कुटिला कोमलस्पर्शा विषवैषम्यशंसिनी । दशत्यपि मनाक् स्पृष्टा तृष्णा कृष्णेव भोगिनी ॥ ३८ ॥ न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते[३] ॥ ३९ ॥ कामिन्येषा बहुमलवसामांसबीभत्सकाया चित्रं मोदं जनयति मनो मोहयन्ती जनानाम् । चित्रं लोकास्ततबहुतरायासलभ्यं कदर्थं रक्षाखेदात्कृ-

१ इति श्रीमत्पूज्यपादमहर्षिवाल्मीकेः । २ " एतावदेतद्विज्ञानमेतदस्ति च नास्ति च । तृष्णाबद्धं जगत्सर्वं चक्रवत्परिवर्तते ॥ बिसतंतुर्यथैवायमंतस्थः सर्वतो बिसे । तृष्णातंतुरनाद्यंतस्तथा देहगतः सदा ॥ सूच्या सूत्रं यथा वस्त्रे संसारयति वायकः । तद्वत्संसारसूत्रं हि तृष्णासूच्या निबद्ध्यते ॥" इति शांतिपर्वणि । ३ इति श्रीमत्पूज्यपादभगवतः कृष्णद्वैपायनवेदव्यासस्य ।

तवहुभयं काञ्चनं कामयन्ते ॥ ४० ॥ आदित्यस्य गतागतै-रहरहः संक्षीयते जीवितं व्यापारैर्बहुकार्य्यभारगुरुभिः कालो न विज्ञायते । दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ४१ ॥ एवं ह्येषा विषयमृगतृट् नामदुःखैकहेतुरन्ते नानाविषमफलकृन्नूनमापातर म्या । हेया सर्व्वैरमलमतिभिर्ज्ञानवैर्य्याश्रयेण व्यक्तो बुद्धा सद-सदनिशं स्थैर्य्यमापद्य सम्यक् ॥ ४२ ॥ भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं माने दैन्यभयं बले रिपुभयं रूपे जराया भयम् । शास्त्रे वादभयं गुणे खलभयं काये कृतान्ता-द्भयं सर्व्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम्[२] ॥ ४३॥ इति विषयनिकामे लौकिकेऽलौकिके वा नियतमलिनरूपे पूर्ण-वैराग्यभाजाम् । मनसि मलविहीने पुण्यशीलक्रियाणां समुदय-ति परा सा दिव्यवैराग्यबुद्धिः[३] ॥४४ ॥ वैराग्यात्क्रमशो विवृद्धि-मनिशं यायात्सदासाधनैर्बुद्धिर्दार्ढ्यमियं विरक्तिजननी यायाद्भृ-शं माचिरम् । दार्ढ्याच्चैव तदा क्रमेण सुमतेः साधोर्विरक्तस्य वै ज्ञानं याति सदा सुवृद्धिमतुलं चित्ते परं शोभनम् ॥ ४५ ॥ ए-

---

१ अत एव "किमत्रहेयं कनकञ्च कान्ता" इति श्रीमत्पूज्यपादशङ्कराचार्य्यभगवतः । "निर्विषयस्यास्य मनसो मुक्तिरिष्यते" इति बृह० श्रुतिः । "या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः । योऽसौ प्राणांतिको रोगस्तां तृष्णां त्यजतः सुखम् ॥" इति श्रीपूज्यपाद-कृष्णद्वैपायनवेदव्यासभगवतः श्रीमहाभारते शांतिपर्वणि । २ इति वैराग्यशतकस्थम् । अत एव" नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः । नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखं ॥" इति श्रीमत्पूज्यपादभगवतः कृष्णद्वैपायनवेदव्यासस्य श्रीमहाभारते शांतिपर्वणि । ३ अवस्थाविशेषेण मध्यमोत्तमाधिमात्रपरेति भेदाद्वैराग्यं चतुर्विधं भवति । तेषां च क्रमेण मन्त्रहठलयराजयोगाधिकारैः सह चतुर्विधवैराग्याणां संबन्धो विद्यते । यथा हि मध्यमवै-राग्यवान् साधको मन्त्रयोगम् , उत्तमवैराग्यवान् हठयोगम् , अधिमात्रवैराग्यवान् लययो-गम् , परवैराग्यवांश्च राजयोगमधिकृत्य अनुतिष्ठेदिति युक्तियुक्तं भवति । परवैराग्यस्य सर्वश्रेष्ठत्वात्तेनैव मुक्तिलाभः संभवति । एवं च वैराग्यक्रियासाधनयोः परस्परं घनिष्ठः सम्ब-न्धो विद्यते । अत एव "ममत्वेन भवेज्जीवो निर्ममत्वेन केवलः" इत्यादि श्रुतिः ।

वश्चैव यथा शनैः सुदृढतां संयाति वैरागिता शक्तिः सत्पुरुषार्थकृत्प्रातिदिनं वृद्धिं तथा गच्छति । शक्तिः सा पुरुषार्थसाधनकरी सम्यक् प्रयुक्ता जनैरन्ते मोक्षपदं परं नयति तान् सर्व्वाभिलाषास्पदम् ॥ ४६ ॥ सर्व्वमेवेह हि सदा संसारे तत्वविद्वरे । सम्यक्प्रयुक्तात्सर्व्वेण पौरुषात्समवाप्यते ॥ ४७ ॥ इह हीन्दोरिवोदेति शीतलाह्लादनं हृदि । परिस्पन्दफलप्राप्तौ पौरुषादेव नान्यतः ॥ ४८ ॥ पौरुषं स्पन्दफलवद्दृष्टं प्रत्यक्षतो न यत् । कल्पितं मोहितैर्मन्दैर्दैवं किञ्चिन्न विद्यते ॥ ४९ ॥ साधूपदिष्टमार्गेण यन्मनोऽङ्ग विचेष्टितम् । तत्पौरुषं तत्सफलमन्यदुन्मत्तचेष्टितम् ॥ ५० ॥ उच्छास्त्रं शास्त्रितं चेति द्विविधं पौरुषं स्मृतम् । तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम् ॥ ५१ ॥ अनर्थः प्राप्यते यत्र शास्त्रितादपि पौरुषात् । अनर्थकर्त्तृ बलवत्तत्र ज्ञेयं स्वपौरुषम् ॥ ५२ ॥ द्वौ हुडाविव[2] युध्येते पुरुषार्थौ समासमौ । प्राक्तनश्चैहिकश्चैव शाम्यत्यत्राल्पवीर्य्यवान् ॥ ५३ ॥ अतः पुरुषयत्नेन यतितव्यं तथा यथा । पुंसा तन्त्रेण सद्योगाद्येनाश्वद्यतनो जयेत् ॥ ५४ ॥ परं पौरुषमाश्रित्य दन्तैर्दन्तान्विचूर्णयन् । शुभेनाशुभमुन्मुक्तं प्राक्तनं पौरुषं जयेत् ॥ ५५ ॥ तावत्तावत्प्रयत्नेन यतितव्यं सुपौरुषम् । प्राक्तनं पौरुषं यावदशुभं शाम्यति स्वयम् ॥ ५६ ॥ शुभेन पौरुषेणाशु शुभमासाद्यते फलम् । अशुभेनाशुभं नित्यं दैवं नाम न किञ्च न ॥ ५७ ॥ न गन्तव्यमनुद्योगैः साम्यं पुरुषगर्द्दभैः । उद्योगस्तु यथाशास्त्रं लोकद्वितयसिद्धये ॥ ५८ ॥ योऽयमर्थं प्रार्थयते तदर्थं चेहते क्रमात् । अवश्यं स तमाप्नोति न चेदर्द्धान्निवर्त्तते ॥ ५९ ॥ पौरुषेण प्रयत्नेन त्रैलोक्यैश्वर्य्यसुन्दराम् । कश्चित्प्राणिविशेषो हि शक्रतां

---

१ इति श्रीमत्पूज्यपादमहर्षिवाल्मीकेः । दैवं प्रारब्धं, तदपि पूर्वानुष्ठितं पौरुषमेव न तु ततोऽन्यत् । २ हुडौ मेषौ ।

समुपागतः ॥ ६० ॥ सारेण पुरुषार्थेन स्वेनैव मकरध्वजः । कश्चिदेव पुमानेव पुरुषोत्तमतां गतः ॥ ६१ ॥ दैन्यदारिद्र्यदुःखार्त्ता अप्यन्ये पुरुषोत्तमाः । पौरुषेणैव यत्नेन याता देवेन्द्रतुल्यताम् ॥ ६२ ॥ विश्वामित्रेण मुनिना दैवमुत्सृज्य दूरतः । पौरुषेणैव सम्प्राप्तं ब्राह्मण्यं देवि नान्यथा ॥ ६३ ॥ उत्साद्य दैवसंघातं चक्रुस्त्रिभुवनोदरे । पौरुषेणैव यत्नेन साम्राज्यं दानवेश्वराः ॥ ६४ ॥ यथा यथा प्रयत्नः स्याद्भवेदाशु फलं तथा । इति पौरुषमेवास्ति दैवमस्तु तदेव च ॥ ६५ ॥ क्रमेणोपार्ज्जितेऽप्यर्थे नष्टे कार्य्या न खेदता । न बलं यत्र मे शक्तं तत्र का परिदेवना ॥ ६६ ॥ यथाशास्त्रमनुच्छिन्नां मर्य्यादां स्वामनुज्झतः । उपतिष्ठन्ति सर्व्वाणि रत्नान्यम्बुनिधाविव ॥ ६७ ॥ शास्त्रतो गुरुतश्चैव स्वतश्चेति त्रिसिद्धयः । सर्व्वत्र पुरुषार्थस्य न दैवस्य कदा च न ॥ ६८ ॥ अशुभेषु समाविष्टं शुभेष्वेवावतारयेत् । प्रयत्नाच्चित्तमित्येष सर्व्वशास्त्रार्थसंग्रहः ॥ ६९ ॥ पुरुषो जायते लोके वर्द्धते जीर्य्यते पुनः । न तत्र दृश्यते दैवं जरायौवनबाल्यवत् ॥ ७० ॥ देशाद्देशान्तरप्राप्तिर्हस्तस्य द्रव्यधारणम् । व्यापारश्च तथाङ्गानां पौरुषेण न दैवतः ॥ ७१ ॥ स्वकर्म्मफलसम्प्राप्ताविदमित्थमितीति याः । गिरस्ता दैवनाम्नैताः प्रसिद्धिं समुपागताः ॥ ७२ ॥ भावीत्यवश्यमेवार्थः पुरुषार्थैकसाधनः । यः सोऽस्मिल्लोकसंघाते दैवशब्देन कथ्यते ॥ ७३ ॥ यदेव तीव्रसंवेगाद्दृढं कर्म्म कृतं पुरा । तदेव दैवशब्देन पर्य्यायेणेह कथ्यते ॥ ७४ ॥ तत्रैव मूढमतिभिर्दैवमस्तीति निश्चयः । आत्तःस्तै दुःस्वबोधेन रज्ज्वामिव भुजङ्गमः ॥ ७५ ॥ मूढैः प्रकल्पितं दैवं तत्परास्ते क्षयं गताः । प्राज्ञास्तु पुरुषार्थेन पदमुत्तममागताः ॥ ७६ ॥ शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् । पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ ७७ ॥ अव्युत्पन्नमना

यावन्नु भवस्यज्ञाततत्पदा । गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचर ॥ ॥ ७८ ॥ आलस्यो यदि न भवेज्जगत्यनर्थः को न स्याद्बहुधनको बहुश्रुतो वा । आलस्यादियमवनिः ससागरान्ता सम्पूर्णा नरपशुभिश्च निर्धनैश्च ॥ ७९ ॥ तस्मात्पौरुषमाश्रित्य सच्छास्त्रैः सत्समागमैः । प्रज्ञाममलतां नीत्वा संसारजलधिं तरेत् ॥ ॥ ८० ॥ एवं सर्व्वहितार्थाय तव चैव विशेषतः । विस्तरेण मया प्रोक्तं लोकानां हितसाधनम् ॥ ८१ ॥ रहस्यं रम्यतात्पर्य्यं सर्व्वशास्त्रनियन्त्रितम् । वैराग्यस्य प्रशंस्तस्य पुरुषार्थस्य शोभने ॥ ८२ ॥ एवं मदुपदेशेन पूर्णसाधकतां गता । यतस्त्व मुक्तिमभ्येतुं संसारार्णवतारिणीम् ॥ ८३ ॥ देव्युवाच ॥ सच्छास्त्रश्रवणान्नाथ मयि ते च कृपावशात् । चित्ते संसारवैराग्यमुदितं मे महाफलम् ॥ ८४ ॥ कस्तु पुरुषकारो मेऽनुष्ठेयः कश्च वाऽन्यथा । एवं विचारमापन्ना बुद्धिर्मे कुण्ठिता भृशम् ॥ ८५ ॥ एकतः शास्त्रकाराणां विरोधः परिदृश्यते । मिथो मतेषु सर्व्वेषु बुद्धिस्तेन प्रतार्य्यते ॥ ८६ ॥ ततश्च साधनादीनां संख्याहीना जगद्गुरो । सन्ति नानाऽधिकाराश्च बुद्धिस्तेन प्रमुह्यते ॥ ८७ ॥ सन्देहं मे कृपासिन्धो मनस्तिमिरनाशक । अपनेतुमिमं नाथ

---

१ पूर्वकाले चास्मिन्भारते आर्य्यगणाः सर्वेपि निरालसाः सोत्साहाः सम्यगुद्योगशालिनः आफलोदयकर्म्माणो धृतिमंतः सत्वशालिनो दक्षाश्चतुर्विधपुरुषार्थशालिनः "कणशः क्षणशश्चैव विद्यामर्थं च साधयेत् । न वंध्यं दिवसं कुर्यात्" इतीमामाज्ञां पाल्यंतोऽप्रमत्ताः प्रयत्नपरा बहव एवासन् । तत्कृतैव परमोन्नतिः सर्वेष्वेव पुरुषार्थेषु तदानीमासीत् । तद्वैपरीत्येनेदानींतना यत आर्यगणाः संति अत एवार्यभावशून्या अन्यैरभ्यर्थ्यमानाः पुरुषार्थरहिताः स्वीयदेशविद्याधनसद्गुणावनतिकर्त्तारः स्वविपरीतानां पूर्वपद्धतिमनुसरतां सतां शीलं यत्नं समुपहसंति न सहानुभूतिं कुर्वतीत्यहो विषमा गतिः कालस्य । ऐहलौकिकी पारलौकिकी काऽपि नितांतमवमा सिद्धिः पुरुषकारमन्तरा कैरपि कदापि न लब्धास्ति । "गच्छन्पिपीलिका पंक्तिः समुद्रमपि लंघयेत् । अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति" अतः सर्वैरपि स्वाभिमतपुरुषार्थपरैर्भाव्यम् । अत एव " उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत । क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति । " इति श्रुतिः ।

त्वमेवार्हसि साम्प्रतम् ॥ ८८ ॥ श्रीश्रीमधुसूदन उवाच । माने-ऽक्ष्यङ्घ्रिकणादवाक् कपिलवाक् त्वंशब्दवाच्ये तदो वाच्ये शा-ण्डिलजादिवाक् फणिवचस्तात्पर्य्यवद्धीग्रहे । मीमांसा मतिशो-धि कर्म्मनिचये वेदान्तशास्त्रोक्तयस्तत्वं लक्ष्यविनिर्णयेऽनभिमते का वा विरोधे क्षतिः ॥ ८९ ॥ आद्यानां वै महर्षीणां पूज्यानां देवि सर्व्वथा । मतेषु न विरोधोऽस्ति कुत्रापि शुचिसाधने ॥ ९० ॥ सप्तानां ज्ञानभूमीनां साधकस्याखिलस्य वै । भेदाद्वि-रोध इत्येवं दर्शनेषु प्रतीयते ॥ ९१ ॥ ज्ञानस्य तु समस्तस्य शास्त्रे वा दर्शने क्वचित् । न विरोधो न भिन्नत्वं दृश्यते श्रूयते बुधैः ॥ ९२ ॥ यावन्तो धर्म्ममार्गा वै पृथिव्यां चलिताः पुरा । वेदोक्तं धर्म्मविज्ञानं सर्व्वेषां कारणं मतम् ॥ ९३ ॥ प्रकृतीनामसंख्य-त्वान्नराणां पृथिवीतले । साधनानि भवेयुश्चेदसंख्यातानि का क्षतिः ॥ ९४ ॥ धर्म्मसंसाधनस्यास्य द्वे तु लक्ष्ये प्रकीर्त्तिते । स्वर्गश्चैवापवर्गश्च सर्व्वमानाभिलक्षितः[3] ॥ ९५ ॥ निकृष्टत्वेऽधि-कारस्य लक्ष्यः स्वर्गो भवत्युत । श्रेष्ठत्वे चास्य सर्व्वत्र मोक्ष

---

१ सप्तदर्शनविषयमुद्दिश्य विस्तृता टिप्पणी योगभेदनामाध्याये द्रष्टव्या । स्वभावसिद्धं सप्तविधां मनुष्याणां ज्ञानावस्थामनुसृत्यैव सप्तदर्शनविज्ञानस्याविर्भावोऽभवत् । अवश्यं भाव्येव रीतिभेदस्तेषु शास्त्रेषु न चैषयुक्तिविरुद्धो विषयभेदात् । तत्र हि बहिर्दृष्टयैव दृष्टेषु विषयेषु भेदबुद्धिः सञ्जायते । तत्वतस्तु महर्षीणां पूज्यतमानां विचारेषु न कश्चिदस्ति मतभेदः । एतद्विस्तरः परिशिष्टाध्याये द्रष्टव्यः । २ सनातनधर्मविज्ञानमार्गो धर्ममार्गं कंचिदपि जगति प्रचारितं विदेशीयं महम्मदीयं ईशाशुसंमतं वा स्वदेशीयं जैनबौद्धादिकं वा खंडनादिना दूष-यितुन्नैव प्रवर्तते । यथा हि बहुपुत्रवान् वत्सलः पिता ज्ञानाज्ञानबाल्ययौवनादिविशेषयुतान्स्व-पुत्रान्यथोचितस्नेहेनैवावलोकयति, तथा लक्ष्यविषयाधिकारसाधनानां परावरत्वभेदेन धर्मशास्त्राणां विविधानामपकृष्टोत्कृष्टस्वरूपेणाऽपि सनातनधर्मविज्ञानमार्गः सर्वानेव तान् धर्ममार्गाननुचिता-दरेणैव समाद्रियते । श्रीभगवान् जगत्पितेव सनातनवैदिकधर्मोपि सर्वव्यापकः समदर्शी सा-र्वजनीनहितकारी पूर्णज्ञानयुक्तश्च । अत एव "एकरसोऽव्यवहार्यः" "सुविभातमेकरसे सच्चि-दानन्दाद्वैतैकरसात्मा" इत्यादिश्रुतिः । ३ अत एव "यतोऽभ्युदयनिःश्रेयस्सिद्धिः स धर्मः ।" "तद्वचनादाम्नायस्य प्रामाण्यम् ।" इति पूज्यपादमहर्षिकणादवैशेषिकदर्शने ।

एवाभिलक्ष्यते ॥९६॥ एवञ्च न विरोधोऽस्ति वैदिकेषु मतेष्वपि । नैव वा ज्ञानवैषम्यं सर्व्वमेकरसं स्मृतम् ॥ ९७ ॥ सत्यं नामाव्ययं नित्यमविकारि तथैव च । सर्वधर्म्माविरुद्धेन योगेनैतदवाप्यते ॥ ॥ ९८ ॥ त्वया यत्साधनं ज्ञातं सद्गुरोरुपदेशतः । प्रकृतेरनुकूलं यत्तन्मुख्यं विद्धि सर्व्वदा ॥ ९९ ॥

इति श्रीश्रीमधुसूदनसंहितायां वैराग्याऽभ्यासमाहात्म्यवर्णनं नाम ऊनविंशोऽध्यायः ।

---

## विंशोऽध्यायः ।

# ज्ञानयोगवर्णनम् ।

देव्युवाच । के वा विभागा वेदानां तात्पर्य्यं वा किमुत्तमम् । एतत्सारतरं हृद्यं वद मां कृपया प्रभो ॥ १ ॥ श्रीश्रीमधुसूदन उवाच । उपासनापरः काण्डः कर्म्मकाण्डस्तथाऽपरः । ज्ञानकाण्डश्च वेदानां विभागाः प्रथितास्त्रयः[3] ॥ २ ॥ तत्राहं प्रोक्तवान्

---

१ अत एव "सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव । प्रकाशयंते न विरोधः कुतश्चिद्वेदेषु सर्वेषु तथेतिहासे ॥ " इति श्रीमध्वभाष्योदाहृतपैङ्गी श्रुतिः । २ इति श्रीमत्पूज्यपादभगवान् वेदव्यासः श्रीमहाभारते । ३ परब्रह्मभावुका यथा सच्चिदानंद इति त्रिधा तदनुभवं कुर्वंति तथैव शब्दब्रह्मणो वेदस्यापि कर्मोपासनाज्ञानरूपेण त्रैरूप्यं वेदविद्भिर्ज्ञायते। ते च वेदाः "अनंता वै वेदाः" इति श्रुतेर्यद्यप्यनंतास्तथाप्यस्मिन्कल्पे यावांस्तद्भागो मुनिभिर्दृष्टः स एव श्रीभगवता पुराणेषु कथ्यते तद्यथा "तथाऽपि मुनिशार्दूलाः शाखाभेदेन भेदितः । अनन्ता वै द्विजा वेदा वेदार्थोऽपि द्विजोत्तमाः ॥ अनन्तो वेदवेद्यस्य शंकरस्य शिवस्य तु । मायया न स्वरूपेण द्विजा हा देववैभवम् ॥ ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः । दत्तवानखिलान्वेदानात्मन्येव स्थितानिमान् ॥ ब्रह्मा सर्वजगत्कर्त्ता शिवस्य परमात्मनः । प्रसादादेव रुद्रस्य स्मृतीः सस्मार सुव्रताः ॥ विष्णुर्विश्वजगन्नाथो विश्वेशस्य शिवस्य तु । आज्ञया परया युक्तो व्यासो जज्ञे गुरुर्मम ॥ स पुनर्देवदेवस्य प्रसादादम्बिकापतेः । संक्षिप्य सकलान्वेदांश्चतुर्धा कृतवान् द्विजाः ॥ ऋग्वेदः प्रथमः प्रोक्तो—

भद्रे तत्वानि निखिलानि वै । सूक्ष्मातिसूक्ष्मरूपाणि स्थूलानि परमाणि च ॥ ३॥ सर्व्वाणि सुगभीराणि भक्तिगर्भाणि शोभने । उपासनाविषयिणो वेदकाण्डस्य ते पुरा ॥ ४ ॥ अधुना ते हितार्थाय ज्ञानकाण्डस्य चोत्तमम् । रहस्यं रम्यतात्पर्य्यं वर्णयामि शुचिव्रते ॥ ५ ॥ सारतत्वं विजानीहि यत्तेऽहं वच्मि साम्प्रतम् । ज्ञानकाण्डस्य वेदानां विदुषां परमं प्रियम् ॥ ६ ॥ एतद्धि परमं तत्वं श्रीकृष्णो भगवान् पुरा । व्याचकाराज्र्जुनस्यैतत्स्वयं ब्रह्म सनातनम् ॥ ७ ॥ एष वै विदुषां मान्यो मुनींद्रो बादरायणः । तपस्वी सत्यसन्धश्च परार्थैकप्रयोजनः ॥ ८ ॥ त्रैलोक्यपूजितश्चासौ ब्रह्मवेत्ता त्रिकालवित् । निगमागमतत्वज्ञो ब्रह्मण्यो ब्राह्मणप्रियः ॥ ९ ॥ ज्ञानभक्तिक्रियाकांडसमतादर्शकः सुहृत् । प्रणेता पञ्चमस्यापि वेदस्य कलितापहृत् ॥ १० ॥ जितामित्रो ऋषिश्रेष्ठः सर्वधर्मविदाम्वरः । वेदस्य च चतुर्भेदकर्त्ता वेदान्तसूत्रकृत् ॥ ११ ॥ विज्ञानविग्रहः साक्षाद्भगवान्भास्करद्युतिः । कविचूडामणिस्तद्दै निबबंध जगद्धितम् ॥ १२ ॥ एतज्ज्ञानं विजानीहि सद-

---

—यजुर्वेदस्ततः परः । तृतीयः सामवेदाख्यश्चतुर्थोऽथर्व उच्यते ॥ एकविंशतिभेदेन ऋग्वेदो भेदितोऽमुना । यजुर्वेदो द्विजा एकशतभेदेन भेदितः ॥ नवधा भेदितोऽथर्ववेदः साम सहस्रधा । व्यस्तवेदतया व्यास इति लोके श्रुतो मुनिः ॥ " इत्यादि श्रीसूतसंहितायाम् ॥

१ आषष्ठादस्य ग्रन्थस्य ऊनविंशतिपर्यन्तेष्वध्यायेषु उपासनाकाण्डस्यैव विस्तरेण वर्णनं कृतम् । सत्पुरुषार्थरूपेणोपासनासाधनेनैव केवलेन जीव उन्नतिं साधयितुं समर्थः । उपासनामार्गस्य शेषसीमानं समाध्यवस्थामेव क्रमशः संप्राप्य साधको मुक्तिमभ्येति । एवं उपासनाविधेश्चैकमेव वैज्ञानिकं लक्ष्यं समाधिपदं भवति । सत्पुरुषार्थमनुचरतः क्रमेणात्मोन्नतिंलभमानस्य साधकस्यान्तःकरणे ज्ञानज्योतिषः संविकाशो जायते; तस्य च ज्ञानविकाशस्य पूर्णतैव मुक्तिरिति कथ्यते ॥ २ अत एव—"कणभक्षमक्षचरणं जैमिनिकपिलौ पतंजलिं च नुमः । श्रीमद्व्यासवचोंम्बुधिनयसीकरवर्षिणश्च शांडिल्यम्" । इति च श्रीनीलकंठाचार्य्यः ।

सद्व्यक्तिरूपकम् । सतो भेदेन विज्ञानमसतश्च तथानघे ॥ १३॥ नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्वदर्शिभिः ॥ १४ ॥ न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ १५ ॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही[3] ॥ १६ ॥ दूरेण ह्यवरं कर्म्म बुद्धियोगात्पतिव्रते । बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ १७ ॥ बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते । तस्माद्योगाय युज्यस्व योगः कर्म्मसु कौशलम् ॥ १८ ॥ कर्म्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः । जन्मबन्धवि-

---

१ सामान्यतो ज्ञानस्य द्वौ भेदौ, ज्ञानं विज्ञानश्चेति । ज्ञानस्य लौकिकत्वे निखिलं तज्ज्ञानसंज्ञयाभिधीयते, आध्यात्मिकंचालौकिकं ज्ञानं विज्ञाननाम्ना कथ्यते । अत एव "ज्ञानविज्ञानतत्वतः" इत्यादि ब्रह्म० श्रुतिः । यदा ह्यलौकिकप्रज्ञाबलेन साधकः सत्पदार्थस्य ब्रह्मणोऽसत्पदार्थस्य च मायायाः पृथक्त्वमवगम्य सदैव विज्ञानदशायां स्थिरतया समवस्थातुं शक्नोति, तदैव तस्य मोक्षभावाभ्युदयः संजायते ॥ अत एव " ज्ञानं क्षेत्रक्षेत्रज्ञविज्ञेयम् " । इत्यादिश्रुतिः । २ "उद्यन्हि सविता यद्वत्सृजते रश्मिमंडलं । स एवास्तमपागच्छंस्तदेवात्मनि यच्छति । अंतरात्मा तथा देहमाविश्येंद्रियरश्मिभिः । प्राप्येंद्रियगुणान्पंच सोऽस्तमावृत्य गच्छति । प्रणीतं कर्मणा मार्गं नीयमानः पुनः पुनः ॥ प्राप्नोत्ययं कर्मफलं प्रवृत्तं धर्ममात्मवान् ॥ " इति श्रीमहाभारते शान्तिपर्वणि । ३ अत एव–" येन येन शरीरेण यद्यत्कर्म करोत्ययं । तेन तेन शरीरेण तत्तत्फलमुपाश्नुते ॥ यथा ह्येकरसा भूमिरोषध्यर्थानुसारिणी । तथा कर्मानुगा बुद्धिरंतरात्मानुदर्शिनी ॥ ज्ञानपूर्वा भवेल्लिप्सा लिप्सापूर्वाऽभिसंधिता । अभिसंधिपूर्वकं कर्म कर्ममूलं ततः फलं ॥ फलं कर्मात्मकं विद्यात्कर्म ज्ञेयात्मकं तथा। ज्ञेयं ज्ञानात्मकं विद्याज्ज्ञानं सदसदात्मकं ॥ ज्ञानानां च फलानां च ज्ञेयानां कर्मणां तथा । क्षयांते यत्फलं विद्या ज्ञानं ज्ञेयप्रतिष्ठितं" ॥ इति श्रीमहाभारते मोक्षधर्म्मे । सनातनधर्मविज्ञानानुसारेण न भवति जीवस्य मृत्युरभावरूपः । तादृशमृत्युवादस्य युक्तिविगर्हितत्वात् । एकैकस्य कर्मप्रवाहस्यावसाने स्थूलशरीरस्य परिवर्तनं भवति जीवानाम् , तदेव च देहपरिवर्तनं स्थूलदर्शिभिर्मृत्युरिति कथ्यते ॥ अत एव "न तस्य रोगो न जरा न मृत्युः" । इत्यादि श्वे० श्रुतिः । "शरीरमात्रं मृत्युना" । इत्यादि छां० श्रुतिः ।

निर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ १९ ॥ अपि चेदसि पापिभ्यः
सर्व्वेभ्यः पापकृत्तमा । सर्व्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि
॥ २० ॥ यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुते प्रिये । ज्ञानाग्निः
सर्व्वकर्माणि भस्मसात्कुरुते तथा[2] ॥ २१ ॥ न हि ज्ञानेन सदृशं
पवित्रमिह विद्यते । तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति
॥ २२ ॥ श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः । ज्ञानं
लब्ध्वा परां शान्तिमचिरेणाधिगच्छति[3] ॥ २३ ॥ न कर्त्तृत्वं न
कर्म्माणि लोकस्य सृजति प्रभुः । न कर्म्मफलसंयोगं स्वभा-
वस्तु प्रवर्त्तते ॥ २४ ॥ नादत्ते कस्य चित्पापं न चैव सुकृतं
विभुः । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ २५ ॥ ज्ञा-
नेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्र-
काशयति तत्परम् ॥ २६ ॥ तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परा-
यणाः । गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ २७ ॥ यो-
ऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः । स योगी ब्रह्मनि-
र्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २८ ॥ इदं शरीरं तत्वज्ञे क्षेत्रमि-

---

१ प्रकृत्यात्मवाद एवाज्ञानम्, प्रकृतिपुरुषयोर्भेदविवेकश्चैव ज्ञानमिति कथ्यते । अज्ञानाद्बन्धो ज्ञानाच्च मुक्तिर्जीवानां सञ्जायते । वस्तुतस्तु ज्ञानस्य मुक्तिकारणत्वात्, मुक्तिकारणेन सह बन्धकारणस्य सम्बन्धाप्रसंगाच्च ज्ञानोदये एव साधकस्य सञ्जाते तस्य पापकर्मजातं बन्धनमूलं विनश्यति । ज्ञानकाण्डस्येदमेव परमाद्भुतं विज्ञानरहस्यम् ॥ अत एव "ज्ञानमेव परं तेषां पवित्रं ज्ञानमुत्तमम्" इत्यादि बृह० श्रुतिः । "ज्ञानं मृत्यूत्पत्तिविनाशरहित चैतन्य ज्ञानमित्यभिधीयते" इत्यादि शरभो० श्रुतिः । २ अपि च "दोषबोधेऽपि नोपसर्पणं प्रधानस्य कुलवधूवत्" । इति श्रीमत्पूज्यपादभगवतः कपिलस्य सांख्यदर्शने । ३ अत एव "यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ।" "सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् । तत्सूत्रं विदितं येन स विप्रो वेदपारगः । येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव । तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवान् । अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा । स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः । शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् । ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ।" इत्यादि ब्रह्मोपनिषत् ।

त्यभिधीयते । एतद्योवेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ २९ ॥
क्षेत्रज्ञश्चापि तं विद्धि सर्व्वक्षेत्रेषु शोभने[1] । क्षेत्रक्षेत्रज्ञयोर्ज्ञानं य-
त्तज्ज्ञानं मतं मम[2] ॥ ३० ॥ तत्क्षेत्रं यच्च यादृक् च यद्विकारि
यतश्च यत् । स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥३१॥
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् । ब्रह्मसूत्रपदैश्चैव
हेतुमद्भिर्विनिश्चितैः ॥ ३२ ॥ महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव
च । इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः ॥ ३३ ॥ इच्छा
द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सवि-
कारमुदाहृतम् ॥ ३४ ॥ अमानित्वमदम्भित्वमहिंसा क्षान्तिरा-
र्जवम् । आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः ॥ ३५ ॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च । जन्ममृत्युजराव्याधिदुः-
खदोषानुदर्शनम् ॥ ३६ ॥ असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यञ्च समचित्तत्त्वमिष्टानिष्टोपपत्तिषु ॥ ३७ ॥ ईश्वरेऽनन्ययो-
गेन भक्तिरव्यभिचारिणी । विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥
॥ ३८ ॥ अध्यात्मज्ञाननित्यत्वं तत्वज्ञानार्थदर्शनम् । एतज्ज्ञान-
मिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ३९ ॥ ज्ञेयं यत्तत्प्रवक्ष्यामि
यज्ज्ञात्वामृतमश्नुते । अनादिमत्परं ब्रह्म न सत्तन्ना[3]सदुच्यते ॥
॥ ४० ॥ सर्व्वतः पाणिपादन्तत्सर्व्वतोऽक्षिशिरोमुखम् । सर्व्वतः
श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ॥ ४१ ॥ सर्व्वेन्द्रियगुणाभासं

---

१ "शरीरादिव्यतिरिक्तः पुमान्" इति सांख्यदर्शनम् । २ अत एव "इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् । पृथगुत्पाद्यमानानां मत्वा धीरो न शोचति" ॥ "इन्द्रियेभ्यः परं मनो मनसः सत्वमुत्तमम् । सत्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्" ॥ "अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च । यं ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छति" ॥ "न सदृशो तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्च नैनम् । हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवंति ॥" "तेभ्यो विलक्षणः साक्षी" । इत्यादि श्रुतिः । ३ "वेदांश्च वेद्यं तु विधिं च कृत्स्नमथो निरुक्तं परमार्थतां च । सर्वं शरीरात्मनि यः प्रवेद तस्यैव देवाः स्पृहयंति नित्यं ॥ भूमावसक्तं दिवि चाप्रमेयं हिरण्मयं योऽडजमंडमध्ये । पतत्रिणं पाक्षिणमंतरिक्षे यो वेद भोग्यात्मनि रश्मिदीप्तः" ॥ इति श्रीमहाभारते मोक्षधर्म्मे ।

सर्व्वेन्द्रियविवर्जितम् । असक्तं सर्व्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ ४२ ॥ बहिरन्तश्च भूतानामचरं चरमेव च । सूक्ष्मत्वात्तद्विज्ञेयं दूरस्थं चान्तिके च तत्[1] ॥ ४३ ॥ अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम् । भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ ४४ ॥ ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते । ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्व्वस्य धिष्ठितम् ॥ ४५ ॥ तद्भक्त एतद्विज्ञाय तद्भावायोपपद्यते । इति क्षेत्रं तथा ज्ञानं ज्ञेयञ्चोक्तं समासतः ॥ ४६ ॥ प्रकृतिं पुरुषञ्चैव विध्यनादी उभावपि । विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्[2] ॥ ४७ ॥ कार्य्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते[3] । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ ॥ ४८ ॥ पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् । कारणं गुणसङ्गोस्य सदसद्योनिजन्मसु ॥ ४९॥ उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः । परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ ५० ॥ य एवं वेत्ति पुरुषं प्रकृतिञ्च गुणैः सह । सर्व्वथा वर्त्तमानोऽपि न स भूयोऽभिजायते ॥ ५१ ॥ समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् । विनश्यत्स्वविनश्यन्तं यः पश्यति स प-

---

१ अत एव—"सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुमः । मनो हि मनसा ग्राह्यं दर्शनेन च दर्शनं ॥ ज्ञानेन निर्मलीकृत्य बुद्धिं बुद्ध्या मनस्तथा । मनसा चेंद्रियग्राममक्षरं प्रतिपद्यते ॥" इति श्रीमहाभारते मोक्षधर्म्मे । २ प्रकृतिपरिणामरूपं जगत्प्रपञ्चं पुरुषरूपञ्च परब्रह्मेति द्वयमेवादिविहीनम् । अनादित्वे च वस्तुविशेषस्य, तस्यानन्तत्वमपि युक्तितः संसिद्धमेवेति जगत्प्रपञ्चमनन्तं मन्यते; जगत्प्रपञ्चस्यानन्तत्वेपि जीवानां पक्षे न तदनन्तं भवति । तथात्वे मुक्तिपदस्याभ्युदयो नैव संभवति मुक्तिदशायां जीवस्य चेतनांशो ब्रह्मण्यनन्तचैतन्याधाररूपे, जडांशः प्राकृतिकश्चानन्तमूलप्रकृतौ लयमापद्यते । एवञ्च विद्यमानेपि जगत्प्रपञ्चे मुक्तपुरुषस्य पक्षे तद्भानं विलुप्तमेव भवति । " एषैव पुरुषस्य मुक्तिः " एष एव च "प्रकृतेर्लयभावः" । फलतस्तु प्रकृतिपुरुषयोर्द्वयोरप्यनादिवादे नास्ति कश्चिद्विरोधः ॥ अत एव "विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य" इति श्रीमत्पूज्यपादभगवतः कपिलस्य सांख्यदर्शने । ३ अत एव "अचाक्षुषाणामनुमानेन बोधो धूमादिभिरिव वन्हेः" । "ततः प्रकृतेः" इत्यादि श्रीमत्पूज्यपादभगवान् कपिलः सांख्यदर्शने ।

श्यति ॥ ५२ ॥ समं पश्यन् हि सर्व्वत्र समवस्थितमीश्वरम् । न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ ५३ ॥ प्रकृत्यैव च कर्माणि क्रियमाणानि सर्व्वशः । यः पश्यति तथात्मानमकर्त्तारं स पश्यति ॥ ५४ ॥ यथा भूतपृथग्भावमेकस्थमनुपश्यति । तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ ५५ ॥ अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः । शरीरस्थोऽपि धर्म्मज्ञे न करोति न लिप्यते ॥ ५६॥ यथा सर्व्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते । सर्व्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥५७॥ यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति सुव्रते ॥ ५८ ॥ क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा । भूतप्रकृतिमोक्षञ्च ये विदुर्यान्ति ते परम् ॥ ५९ ॥ अथ ज्ञानप्लवं धीरो गृहीत्वा शांतिमात्मनः । उन्मज्जँश्च निमज्जँश्च ज्ञानमेवाभिसंश्रयेत्[२] ॥ ६० ॥ परावरं तु भूतानां ज्ञानेनैवोपलभ्यते । विद्यया देवि सृष्टानां विद्यैवेह परा गतिः ॥ ६१ ॥ भूतानां जन्म सर्वेषां विविधानां चतुर्विधम् । जरायुजांडजोद्भिज्जस्वेदजं चोपलक्षयेत् ॥ ६२ ॥ स्थावरेभ्यो विशिष्टानि जंगमान्युपधारयेत् । उपपन्नं हि यच्चेष्टा विशिष्येत विशेष्यया ॥ ६३ ॥ आहुर्वै बहुपादानि जंगमानि द्वयानि तु । बहुपाद्भ्यो विशिष्टानि द्विपादानि बहून्यपि ॥ ६४ ॥ द्विपादानि द्वयान्याहुः पार्थिवानीतराणि च । पार्थिवानि विशिष्टानि तानि ह्यन्नानि भुंजते॥६५॥ पार्थिवानि द्वयान्याहुर्मध्यमान्युत्तमानि तु । मध्यमानि विशिष्टा-

---

१ अत एव "यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः" । इति सांख्यदर्शनम् । "पुण्यपापमयं देहं क्षपयन्कर्मसंक्षयात् । क्षीणदेहः पुनर्देही ब्रह्मत्वमुपगच्छति ॥ पुण्यपापक्षयार्थं हि सांख्यज्ञानं विधीयते । तत्क्षये ह्यस्य पश्यंति ब्रह्मभावे परां गतिम्" ॥ इति श्रीमहाभारते मोक्षधर्म्मे । २ अत एव "गवामनेकवर्णानां क्षीरस्याप्येकवर्णता । क्षीरवत्पश्यते ज्ञानं लिङ्गिनस्तु गवां यथा" । इति ब्र. बी. श्रुतिः ।

निजातिधर्मोपधारणात् ॥ ६६ ॥ मध्यमानि ह्यान्याहुर्धर्मज्ञानीतराणि च। धर्मज्ञानि विशिष्टानि कार्याकार्योपधारणात् ॥ ६७ ॥ धर्मज्ञानि ह्यान्याहुर्वेदज्ञानीतराणि च। वेदज्ञानि विशिष्टानि वेदो ह्येषु प्रतिष्ठितः ॥ ६८ ॥ वेदज्ञानि ह्यान्याहुः प्रवक्तृणीतराणि च। प्रवक्तृणि विशिष्टानि सर्वधर्मोपधारणात् ॥ ६९ ॥ विज्ञायंते हि यैर्वेदाः सधर्माः सक्रियाफलाः। सधर्मा निखिला वेदाः प्रवक्तृभ्यो विनिःसृताः ॥ ७० ॥ प्रवक्तृणि ह्यान्याहुरात्मज्ञानीतराणि च। आत्मज्ञानि विशिष्टानि जन्माजन्मोपधारणात् ॥ ७१ ॥ धर्मद्वयं हि यो वेद स सर्वज्ञः स सर्ववित्। स त्यागी सत्यसंकल्पः सत्यः शुचिरथेश्वरः ॥ ७२ ॥ ब्रह्मज्ञानप्रतिष्ठं हि तं देवा ब्राह्मणं विदुः। शब्दब्रह्मणि निष्णातं परे च कृतनिश्चयं ॥ ७३ ॥ अन्तस्थं च बहिष्ठं च साधियज्ञाधिदैवतं। ज्ञानान्वितं हि पश्यन्ति ते देवास्तात ते द्विजाः॥७४॥ तेषु विश्वमिदं भूतं सर्वं च जगदाहितं। तेषां माहात्म्यभावस्य सदृशं नास्ति किं च नै ॥ ७५ ॥ ज्ञानाभ्यासाज्जागरणं जिज्ञासार्थमनंतरं। विज्ञानाभिनिवेशात्तु स जागर्त्यनिशं सदा ॥७६ ॥ तच्चिंतनं तत्कथनमन्योन्यं तत्प्रबोधनं। एतदेकपरत्वं च ज्ञानाभ्यासं विदुर्बुधाः[२] ॥ ७७॥ आर्जवेनाप्रमादेन प्रसादेनात्मवत्तया।

---

१ इदमपि सर्वं ज्ञानोत्कर्षवर्णनं वचनजातम् श्रीमहाभारतस्थम् ॥ अपि च "कृमिकीटपतङ्गेभ्यः श्रेष्ठाः पश्वादयस्तथा। पश्वादिभ्यो नराः श्रेष्ठा नरेभ्यो ब्राह्मणास्तथा ॥ ब्राह्मणेभ्योऽथ विद्वांसो विद्वत्सु कृतबुद्धयः। कृतबुद्धिषु कर्तारस्तेभ्यः संन्यासिनो वराः ॥ तेषां कुटीचकाः श्रेष्ठा बहूदकसमाश्रिताः। बहूदकाद्वरो हंसो हंसात्परमहंसकः ॥ परहंसादपिश्रेयानात्मविन्नास्त्यतोऽधिकः। तस्मादात्मविदः पूज्याः सर्वदा सर्वजन्तुभिः॥" इति श्रीसूतसंहितायाम् ॥ २ अत एव "लोकस्य नोपदेशात्तत्सिद्धिः पूर्ववत्" "पारम्पर्येण तत्सिद्धौ विमुक्तिश्रुतिः" इत्यादि श्रीमत्पूज्यपादभगवतः कपिलस्य सांख्यदर्शने। "तं पूर्वाऽपररात्रेषु युंजानः सततं बुधः। लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि" इति च श्रीमत्पूज्यपादभगवान् वेदव्यासः।

वृद्धशुश्रूषया देवि पुरुषो लभते महत् ॥ ७८ ॥ धर्मोपस्थो ह्रीववरूथ उपायापायकूबरः । अपानाक्षः प्राणयुगः प्रज्ञायुर्जीवबंधनः ॥ ७९ ॥ चेतनाबंधुरश्चारुश्चाचारग्रहनेमिमान् । दर्शनस्पर्शनवहो घ्राणश्रवणवाहनः ॥ ८० ॥ प्रज्ञानाभिः सर्वतंत्रप्रतोदो ज्ञानसारथिः । क्षेत्रज्ञाधिष्ठितो धीरः श्रद्धादमपुरःसरः ॥ ८१ ॥ त्यागसूक्ष्मानुगः क्षेम्यः शौचगो ध्यानगोचरः । जीवयुक्तो रथो दिव्यो ब्रह्मलोके विराजते ॥ ८२ ॥ यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यांति तं कालं वक्ष्यामि कुलपूजिते ॥ ८३ ॥ अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः ॥ ८४ ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते ॥ ८५ ॥ शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्त्तते पुनः ॥८६॥ नैते सृती देवि जानन्योगी मुह्यति कश्च न । तस्मात्सर्वेषु कालेषु योगयुक्ता भवानघे ॥ ८७ ॥ वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् । अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम्[२] ॥ ८८ ॥

इति श्रीश्रीमधुसूदनसंहितायां ज्ञानयोगवर्णनं नाम विंशोऽध्यायः ।

---

## एकविंशोऽध्यायः ॥

# अध्यात्मरहस्यवर्णनम् ।

देव्युवाच । भगवञ्छ्रोतुमिच्छामि यत्तदध्यात्मसंज्ञितम् । रहस्यं विश्वसृष्ट्यादिसमेतं ज्ञानसिद्धये ॥ १ ॥ श्रीश्रीमधुसूदनउवाच ।

---

१ इति श्रीमहाभारते शान्तिपर्वणि । २ इति श्रीभगवद्गीतायाम् ।

यत्तद्ब्रह्म मनोवाचामगोचरमितीरितम् । तत्सर्वकारणं विद्धि सर्वाध्यात्मिकमित्यपि ॥२॥ अनाद्यंतमजं दिव्यमजरं ध्रुवमव्ययम् । अप्रतर्क्यमविज्ञेयं ब्रह्माग्रे संप्रवर्तते ॥ ३ ॥ स्वेच्छामायाख्यया यत्तज्जगज्जन्मादिकारणम् । ईश्वराख्यं तु तत्तत्त्वमधिदैवमिति स्मृतम् ॥ ४ ॥ सर्वज्ञः सद्गुरुर्नित्यो ह्यंतर्यामी कृपानिधिः । सर्वसद्गुणसारात्मा दोषशून्यः परः पुमान् ॥ ५ ॥ यत्कार्यब्रह्म विश्वस्य निधानं प्राकृतात्मकम् । विराडाख्यं स्थूलतरमधिभूतं तदुच्यते ॥ ६ ॥ यस्येहावयवैर्लोकान्कल्पयंति मनीषिणः । कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः ॥ ७ ॥ ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः । ब्राह्मणास्तेन वेदाश्च यज्ञा[२]श्च

१ यद्यपि परं ब्रह्म मनोवाचामगोचरं तथाऽपि तत्त्वद्रष्टारो मुनयस्तस्मिन्नेवाद्वितीये परब्रह्मणि त्रैविध्यं कल्पयंति । यथाऽविद्यावच्छिन्नजीवचैतन्यस्य स्थूलसूक्ष्मकारणरूपं देहत्रितयमस्ति । तथा मायालयाश्रयं परं ब्रह्म । मायोपहितं चेशः । मायालीलाविस्मृतविहाराश्रितं च विराट् । आध्यात्मिकादित्रैविध्यविवेकः सर्ववेदशास्त्रस्य परमं रहस्यं विराडंतर्गतेषु सर्वेष्वपि कार्यकारणसमूहेषु त्रैरूप्यविवेचनमेव परमोन्नताधिकारः । तथैव शब्दब्रह्मणो वेदस्याऽपि कर्मोपासनाज्ञानरूपेण आविर्भाव इति ज्ञेयम् । अत एव "तत्वमाध्यात्मिकं दृष्ट्वा" इत्यादि गौ० श्रुतिः "आध्यात्मिकादि त्रैविध्यरूपम्" इत्यादि आ० श्रुतिः २ यज्ञस्य साधारणं रूपं साधनतपोदानरूपेण त्रिधा भिन्नं धर्मविज्ञानवर्णनाख्ये पंचमेऽध्याये वर्णितं । तत्र साधनमपि कर्मोपासनाज्ञानरूपेण त्रिधा भिन्नं सत्ध्यानोपासनाध्याये चैषां नवधा भेदा निर्दिष्टास्तत्र त्रिगुणभेदात्सप्तविंशतिभेदाः । एवं तपसो दानस्यापि नवनवेत्यष्टादशसंकलनया पंचचत्त्वारिंशद्भेदाः सर्वेप्येते यज्ञभेदा एव । ये के च न यैः कैश्चिदनुष्ठीयमाना धर्मशब्दवाच्यास्ते सर्वेप्येतेष्वेव भेदेषु कस्मिन्नप्यंतर्भवंतीति सनातनस्यास्य वैदिकधर्मस्येयमेव सर्वसंग्राहकता बोध्या । एतेषां के चिद्भेदाः श्रीभगवताऽपि गीताः यथा "ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गतव्यं ब्रह्मकर्मसमाधिना ॥ दैवमेवापरे यज्ञं योगिनः पर्युपासते । ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ श्रोत्रादीनींद्रियाण्यन्ये संयमाग्निषुजुह्वति । शब्दादीन्विषयानन्य इंद्रियाग्निषु जुह्वति ॥ सर्वाणींन्द्रियकर्माणि प्राणकर्माणि चापरे । आत्मसँयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथा परे । स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ अपाने जुह्वति प्राणं प्राणेऽपानं तथा परे । प्राणापानगती रुध्वा प्राणायामपरायणाः ॥ अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति । सर्वेप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ यज्ञशिष्टाऽमृतभुजो यांति ब्रह्म सनातनम् । नायं लोकोऽस्त्ययज्ञस्य–

विहिताः पुरा ॥ ८ ॥ तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्तंते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ ९ ॥ तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः । दानक्रियाश्च विविधाः क्रियंते मोक्षकांक्षिभिः ॥ १० ॥ सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते । प्रशस्ते कर्मणि तथा सच्छब्दो देवि युज्यते ॥ ११ ॥ यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते । कर्म चैव तदर्थीयं सदित्येवाऽभिधीयते ॥ १२ ॥ अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते देवि न च तत्प्रेत्य नो इह ॥ १३ ॥ अधुना कथयिष्यामि सृष्टिज्ञानं सुदुर्लभम् । यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् । प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ १४ ॥ पंचभिः पंचभिर्ब्रह्म चतुर्भिर्दशभिस्तथा । एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥ १५ ॥ महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः । तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥ १६ ॥ इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः । वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते ॥ १७ ॥ मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम् । चतुर्धा लक्ष्यते भेदो वृत्या लक्षणरूपया ॥ १८ ॥ एतावानेव संख्यातो ब्रह्मणः सगुणस्य ह । सन्निवेशो मया प्रोक्तो यः कालः[3] पञ्चविंशकः ॥ १९ ॥ अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् । स्वतो न संभवादन्यस्तत्व-

—कुतोऽन्यः कुरुसत्तम ॥ एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे । कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप । सर्वं कर्माऽखिलं पार्थ ज्ञाने परिसमाप्यते ॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः ॥ " इति ।

१ इति श्रीभगवद्गीतायाम् । २ अत एव " सत्वरजतमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहंकारोऽहंकारात्पंचतन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पंचविंशतिर्गणः । " इत्यादि श्रीमत्पूज्यपादभगवान्कपिलः सांख्यदर्शने । ३ कालस्य विस्तृतं स्वरूपं द्वादशाध्याये वर्णितमेव ।

ज्ञो ज्ञानदो भवेत् ॥ २० ॥ पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि । तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः ॥ २१ ॥ अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः । प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥ २२ ॥ स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः । यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥ २३ ॥ गुणै र्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः । विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया॥२४॥ एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् । कर्म्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥ २५ ॥ तदस्य संसृतिर्बन्धः पारतंत्र्यं च तत्कृतम् । भवत्यकर्त्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥ २६ ॥ कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः । भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ॥ २७ ॥ दैवात्क्षु-

---

१ प्रधानप्रकृतेश्चतुर्विंशतिको गणः । पंचविंशकः कालः । षड्विंशः पुरुषः इत्येव तत्वसंख्यानं । तत्र तत्वेषु परस्परमंतर्भावविभागाभ्यां संख्याभेदोप्यार्षो न मतभेदाय भवति । तदुक्तं श्रीमद्भागवते "युक्तयः सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा । मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥ नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा । एवं विवदतां हेतुं शक्तयो मे दुरत्ययाः ॥ यासां व्यतिकरादासीद्विकल्पो वदतां पदम् । प्राप्ते शमदमेऽप्येति वादस्तमनुशाम्यति ॥ परस्परानुप्रवेशात्तत्वानां पुरुषर्षभ । पौर्वापर्यप्रसंख्यानं यथा वक्तुर्विवक्षितम् ॥ एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च । पूर्वस्मिन् वाऽपरस्मिन्वा तत्त्वे तत्वानि सर्वशः ॥ पौर्वापर्यमतोऽमीषां प्रसंख्यानमभीप्सताम् । यथा विविक्तं यद्वक्त्रं गृह्णीमो युक्तिसंभवात्" इत्यादि । २ "संघातपदार्थत्वात्पुरुषस्य" इति श्रीमत्पूज्यपादभगवतः कपिलस्य सांख्यदर्शने । अपि च "नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् । किमा वरीवः कुहकस्य शर्म्मन्नम्भः किमासीद्गहनं गभीरम् ॥ न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्नपरः किञ्च नास ॥ तमआसीत्तमसा गूढमग्रे प्रकेतं सलिलं सर्व्वमा इदम् । तुच्छेनाभ्वपिहितं यदासीत्तपसस्तन्महिनाऽऽजायतैकम् ॥ कामस्तदग्रे समवर्त्तताधिमनसो रेतः प्रथमं यदासीत् । सतो बन्धुमसति निरविंदन् हृदि प्रतीष्या कवयो मनीषा ॥ तिरश्चीनो विततो रश्मिरेषामधः स्विदासीदुपरिस्विदासीत् । रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥ को अद्धा वेद क इह प्रवोचत्कुत आ जाता कुत इयं विसृष्टिः । अर्व्वाग्देवा अस्य विसर्ज्जनेनाथा-को वेद यत आ बभूव ॥ इयं विसृष्टिर्यत आ बभूव यदि वा दधे यदि वा न । यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद" ॥ इत्यादि ऋक्श्रुतिः ।

भितधर्मिण्यां स्वस्यां योनौ परः पुमान् । आधत्त वीर्यं सासूत महत्तत्वं हिरण्मयम् ॥ २८ ॥ विश्वमात्मगतं व्यंजन्कूटस्थो जगदङ्कुरः । स्वतेजसाऽपिबत्तीव्रमात्मप्रस्वापनं तमः ॥२९॥ यत्तत्सत्वगुणं स्वच्छं शांतं भगवतः पदम् । यदाहुर्वासुदेवाख्यं चित्तं तन्महद्[1]दात्मकम् ॥ ३० ॥ स्वच्छत्वमविकारित्वं शान्तत्वमिति चेतसः । वृत्तिभिर्लक्षणं प्रोक्तं यथाऽपां प्रकृतिः परा ॥ ३१ ॥ महत्तत्वाद्विकुर्वाणाद्भगवद्वीर्यसंभवात् । क्रियाशक्तिरहंकारस्त्रिविधः सं[2]मपद्यत ॥ ३२ ॥ वैकारिकस्तैजसश्च तामसश्च यतो भवः । मनसश्चेन्द्रियाणां च भूतानां महतामपि ॥ ३३ ॥ सहस्रशिरसं साक्षाद्यमनन्तं प्रचक्षते । संकर्षणाख्यं पुरुषं भूतेन्द्रियैं[3]मनोमयम् ॥ ३४ ॥ कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम् । शान्तघोरविमूढत्वमिति वा स्यादहंकृतेः ॥ ३५ ॥ वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत । यत्संकल्पविकल्पाभ्यां वर्तते का[4]मसंभवः ॥ ३६ ॥ यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् । शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः ॥ ३७ ॥ तैजसात्तु विकुर्वाणाद्बुद्धितत्वमभूत्सति । द्रव्यस्फुरणविज्ञानमिद्रियाणामनु[5]ग्रहः ॥

---

१ अत एव "महदाद्यं कार्य्यं तन्मनः" ( यत्प्रकृतेराद्यं कार्यं तन्महत् महत्तत्वं अन्तःकरणं बुद्धिः ) इति सांख्यदर्शनम् । २ अत एव "चरमोऽहंकारः" । "तत्कार्यत्वमन्येषाम् ।" इत्यादि सांख्यदर्शनम् ।३ महत्तत्वे वासुदेवाख्यं अहंतत्वे संकर्षणाख्यं तद्विकारभूतमनआदितत्वेष्वनिरुद्धाख्यं अधिदैवस्वरूपमुपास्यतया निर्दिश्यते । इदमेवास्तिकवैदिकसांख्यदर्शनरहस्यं बोध्यम् । ४ अत एव "अभिमानोऽहंकारः" "एकादशं पंचतन्मात्रं तत्कार्यम् ।" "सत्वादिकमेकादशकं प्रवर्तते वैकृतादहंकारात् ।" "कर्मेंद्रियबुद्धीन्द्रियैरान्तरमेकादशकं मनः ।" इत्यादि सांख्यदर्शनम् । ५ अत्र मनस्तत्वादुत्तरत्र लक्षिता बुद्धिः सा तु ज्ञानेंद्रियाणां धारणकर्त्री ज्ञानशक्तिस्वरूपा बोध्या न तु "मनसस्तुपरा बुद्धिः" इत्यत्रोक्ता बुद्धिर्ग्राह्या । मनो मतिर्ब्रह्मा बुद्धिश्चित्तादयः पर्यायशब्दाइव भिन्नक्रमेण शास्त्रेषु व्यवह्रियंते । तत्र शुद्धाया उन्नतबुद्धेः प्रतिभा नाम मलिनायास्त्ववराया बुद्धेर्धारणा नाम । तत्र धारणा बुद्धिः सर्वेषु चेतनेषु साधारणा । प्रतिभाबुद्धिस्तु समुन्नतज्ञानाधिकारिष्वेवासाधारणा । प्रतिभा च महत्तत्वसंबंधिनी धारणा तु तैजसाहंतत्त्वकार्यरूपेतिज्ञेयम् ।

॥ ३८॥ संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च। स्वाप इत्यु-
च्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ॥ ३९ ॥ तैजसानीन्द्रियाण्येव
क्रियाज्ञानविभागशः। प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता
॥ ४० ॥ तामसाच्च विकुर्वाणाद्भगवद्वीर्यचोदितात्। शब्दमात्रम-
भूत्तस्मान्नभः श्रोत्रं च शब्दगम् ॥४१॥ अर्थाश्रयत्वं शब्दस्य द्रष्टु-
र्लिङ्गत्वमेव च। तन्मात्रत्वं च नभसो लक्षणं कवयो विदुः ॥
॥ ४२ ॥ भूतानां छिद्रदातृत्वं बहिरन्तरमेव च। प्राणेंद्रियात्म-
धिष्ण्यत्वं नभसो वृत्तिलक्षणम् ॥ ४३ ॥ नभसः शब्दतन्मात्रा-
त्कालगत्या विकुर्वतः। स्पर्शोऽभवत्ततो वायुस्त्वक्स्पर्शस्य च
संग्रहः ॥ ४४ ॥ मृदुत्वं कठिनत्वं च शैत्यमुष्णत्वमेव च। एत-
त्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः ॥ ४५ ॥ चालनं व्यू-
हनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः। सर्वेन्द्रियाणामात्मत्वं वायोः क-
र्माभिलक्षणम् ॥ ४६ ॥ वायोश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत्।
समुत्थितं ततस्तेजश्चक्षूरूपोपलम्भनम् ॥ ४७ ॥ द्रव्याकृतित्वं
गुणता व्यक्तिसंस्थात्वमेव च। तेजस्त्वं तेजसः साध्वि रूपमात्र-
स्य वृत्तयः ॥४८॥ द्योतनं पचनं पानमदनं हिममर्दनम्। तेजसो
वृत्तयस्त्वेताः शोषणं क्षुत्तृडेव च ॥ ४९ ॥ रूपमात्राद्विकुर्वा-
णात्तेजसो दैवचोदितात्। रसमात्रमभूत्तस्मादम्भो जिह्वा रसग्रहः
॥ ५० ॥ कषायो मधुरस्तिक्तः कट्वम्ल इति नैकधा। भौति-
कानां विकारेण रस एको विभिद्यते ॥५१॥ क्लेदनं पिण्डनं तृप्तिः
प्राणनाप्यायनोदनम्। तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विव-
माः ॥ ५२ ॥ रसमात्राद्विकुर्वाणादम्भसो दैवचोदितात्। गन्ध-
मात्रमभूत्तस्मात्पृथ्वी घ्राणस्तु गन्धगः ॥ ५३ ॥ करम्भपूतिसौ-
रभ्यशान्तोग्राम्लादिभिः पृथक्। द्रव्यावयववैषम्याद्गन्ध एको
विभिद्यते ॥ ५४ ॥ भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम्।
सर्वसत्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥ ५५ ॥ नभोगुणविशे-

षोऽर्थो यस्य तच्छ्रोत्रमुच्यते । वायोर्गुणविशेषोऽर्थो यस्य तत्स्पर्शनं विदुः ॥ ५६ ॥ तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते । अम्भोगुणविशेषोऽर्थो यस्य तद्रसनं विदुः ॥ ५७ ॥ भूमेर्गुणविशेषोऽर्थो यस्य स घ्राण उच्यते । परस्य दृश्यते धर्मो ह्यपरस्मिन्समन्वयात् ॥ ५८ ॥ अतो विशेषो भावानां भूमावेवोपलक्ष्यते । एतान्यसंहत्य यदा महदादीनि सप्त वै ॥ ५९ ॥ कालकर्मगुणोपेतो जगदादिरुपाविशत् । ततस्तेनानुविद्धेभ्यो युक्तेभ्योऽण्डमचेतनम् ॥ ६० ॥ उत्थितं तदिह प्रोक्ता तत्वसृ-

१ अत एव "स्थूलात् पंचतन्मात्रस्य" इति सांख्यदर्शनम् । स्थूलात् पंचस्थूलभूतात् कार्य्यात् सत्वरजस्तमोभेदेन शान्तिघोरमूढरूपात् पंचतन्मात्रस्य ज्ञानम् । पंच स्थूलभूतानि तु पंचीकृतानि । पंचीकरणं तु आकाशादि पंचसु एकैकं द्विधा समं विभज्य तेषु दशसु भागेषु मध्ये प्राथमिकान् पंच भागान् प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां भागानां स्वस्वद्वितीयार्द्धभागं परित्यज्य भागान्तरेषु संयोजनम् । अत एव भूतानि पंचीकृतापंचीकृतभेदेन द्विविधानि इति ज्ञेयम् । २ इति श्रीकपिलगीतायाम् । अत एव "ॐ सहनाववत्विति शान्तिः । ॐ अथाऽतः पृथिव्यादिमहाभूतानां समवायं शरीरम् । यत्कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेजो यत्सञ्चरति स वायुर्यत्सुषिरं तदाकाशम् । श्रोत्राऽदीनि ज्ञानेन्द्रियाणि । श्रोत्रमाकाशे वायौत्व गम्नौचक्षु रप्सुजिह्वा पृथिव्यां घ्राणमिति । एवमिन्द्रियाणां यथाक्रमेण शब्दस्पर्शरूपरसगन्धाश्चैते विषयाः पृथिव्यादिमहाभूतेषु क्रमेणोत्पन्नाः । वाक्पाणिपादपायूपस्थाऽऽख्यानि कर्मेन्द्रियाणि । तेषां क्रमेण वचनाऽऽदानगमनविसर्गाऽऽनन्दाश्चैते विषयाः। पृथिव्यादिमहाभूतेषु क्रमेणोत्पन्नाः । मनोबुद्धिरहंकारश्चित्तमित्यन्तःकरणचतुष्टयम्। तेषां क्रमेण संकल्पविकल्पाऽध्यवसायाऽभिमानाऽवधारणास्वरूपाश्चैते विषयाः । मनःस्थानं गलाऽन्तं बुद्धेर्वदनमहङ्कारस्य हृदयं चित्तस्य नाभिरिति । अस्थिचर्मनाडीरोममांसाश्चेति पृथिव्यंशाः मूत्रश्लेष्मरक्तशुक्रस्वेदा अबंशाः । क्षुत्तृष्णाऽऽलस्यमोहमैथुनान्यग्नेः। प्रचारणविलेखनस्थूलाऽद्युन्मेषनिमेषाऽऽदि वायोः । कामक्रोधलोभमोहभयान्याकाशस्य । शब्दस्पर्शरूपरसगन्धाः पृथिवीगुणाः। शब्दस्पर्शरूपरसश्चापां गुणाः। शब्दस्पर्शरूपाण्यग्निगुणाः। शब्दस्पर्शाविति वायुगुणौ। शब्द एक आकाशस्य । सात्विकराजसतामसलक्षणानि त्रयो गुणाः " अहिंसा सत्यमस्तेयब्रह्मचर्याऽपरिग्रहाः । अक्रोधो गुरुशुश्रूषा शौचं सन्तोष आर्जवम् । अमानित्वमदम्भित्वमास्तिकत्वमहिंस्रता । एते सर्वे गुणा ज्ञेयास्सात्विकस्य विशेषतः। अहंकर्ताऽस्म्यहं भोक्ताऽस्म्यहं वक्ताऽभिमानवान्। एते गुणा राजसस्य प्रोच्यन्ते ब्रह्मवित्तमैः। निद्राऽऽलस्यौ मोहरागौ मैथुनं चौर्यमेव च। एते गुणास्तामसस्य प्रोच्यन्ते ब्रह्मवादिभिः"। ऊर्ध्वे सात्विको मध्ये राजसोऽधस्तामस इति । सत्यज्ञानं सात्विकम् । धर्मज्ञानं राजसम् । तिमिराऽन्धं तामसमिति ।—

ष्टिस्तवानघे । ततो व्यष्टिस्वरूपेण सृष्टिर्बहुविधाप्यभूत् ॥ ६१॥ योध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः । यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः॥६२॥ एकमेकतराभावे यदा नोपलभामहे । त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥ ६३॥ समष्टिरूपं विस्तारादनंतं प्रकृतीशयोः । व्यष्टिरूपं त्वनंतं स्यात्संख्याद्यानंत्यतस्तयोः ॥ ६४ ॥ आविर्भावतिरोभावावुभयोर्देशकालतः । परिच्छिन्नौ यदा ज्ञातौ तदा सत्ता तयोः पृथक् ॥ ॥६५॥ अत एवाधिदैवात्तु पुरुषादीशशब्दितात् । कूटस्थस्याधियज्ञस्य पृथक् सत्ता प्रतीयते ॥ ६६ ॥ ब्रह्मविद्भिरतो ब्रह्म द्विधा वेद्यतया स्मृतं । स्वरूपं च तटस्थं च तत्तच्छ्रुत्यनुसारतः ॥६७॥ स्वस्वरूपस्थितौ भानं त्रयाणामेकमेव तु । स्यात्परं व्यष्टिसत्तायां तेषां भानं विलक्षणम् ॥ ६८ ॥ प्रकृतिः पुरुषश्चेति विकल्पस्तत्त्वविद्वरे । एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥ ६९ ॥ ईशस्य मायागुणमय्यनेकधा विकल्पबुद्धिश्च गुणैर्विधत्ते । वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ॥ ७० ॥ दृग्रूपमार्कं वपुरत्र रंध्रे परस्परं सिध्यति यः स्वतः खे । आत्मा यदेषामपरो य आद्यः स्वयाऽनुभूत्याऽखिलसिद्धसिद्धिः ॥ ७१॥

—जाग्रत्स्वप्नसुषुप्तितुरीयमिति चतुर्विधा अवस्थाः। ज्ञानेन्द्रियकर्मेन्द्रियाऽन्तःकरणचतुष्टयं चतुर्दशकरणयुक्तं जाग्रत् । अन्तःकरणचतुष्टयैरेव संयुक्तस्स्वप्नः । चित्तैककरणात्सुषुप्तिः । केवलजीवयुक्तमेव तुरीयमिति। उन्मीलितनिमीलितमध्यस्थजीवपरमाऽऽत्मनोर्मध्ये जीवाऽत्मा क्षेत्रज्ञ इति विज्ञायते।"बुद्धिकर्म्मेन्द्रियप्राणपंचकैर्मनसा धिया। शरीरं सप्तदशभिस्सूक्ष्मं तल्लिङ्गमुच्यते। मनो बुद्धिरहङ्कारः खाऽनिलाऽग्निजलानि भूः । एताः प्रकृतयस्त्वष्टौ विकाराष्षोडशाऽपरे । श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं चैव तु पंचमम् । पायूपस्थौ करौ पादौ वाक् चैव दशमी मता । शब्दस्स्पर्शश्च रूपं च रसो गन्धस्तथैव च । त्रयोविंशतिरेतानि तत्त्वानि प्रकृतानि तु । चतुर्विंशतिरव्यक्तं प्रधानं पुरुषः परः ।" इति शारीरकोपनिषद् ।

१ अत एव "नाद्वैतश्रुतिविरोधो जातिपरत्वात्" "जन्मादिव्यवस्थातः पुरुषबहुत्वं" इत्यादि सांख्यदर्शनम् । तथा "तामैश्वर्यपदां काश्यपः परत्वात्" इति भक्तिदर्शनम् । अपि च कूटस्थाधियज्ञस्य भेदप्रतीत्या सांख्ये पुरुषबहुत्वं तदनुसारेण तामैश्वर्यपदामिति सूत्रोक्तं काश्यपद्वैतमतप्रदर्शनपरं भक्तिदर्शनं च नात्मैक्यासिद्धांतविरुद्धम् ।

एवं त्वगादि त्रिविधं विविक्तं ज्ञानादिकर्मादि च चित्तयुक्तम् । योऽसौ गुणक्षोभकृतो विकारः प्रधानमूलान्महतः प्रसूतः ॥७२॥ अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐन्द्रियश्च । आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदाऽर्थनिष्ठः । व्यर्थोऽपि नैवोपरमेत पुंसां तस्मात्परावृत्तधियां स्वलोकात्[२] ॥७३॥ एवं रूपेण कल्पन्ते कल्पका विश्वसंभवम् । अन्योन्यापाश्रया-त्सर्वमाद्यंतवदवस्तु यत् ॥ ७४ ॥ आध्यात्मिकादिरूपेण सर्वं व-स्तु प्रकाशते । विशेषलक्ष्योपादाने भेदो भवति नान्यथा ॥७५॥ तथैव वस्तु नास्त्येव भासकं वर्तते परम् । स्वरूपत्वेन रूपेण स्वरूपं वस्तु भास्यते ॥ ७६ ॥ प्रकृतौ संस्थितं व्यक्तमतीतप्र-लये तु यत्[३] । तस्मात्प्राकृतसंज्ञोऽयमुच्यते प्रतिसंचरः ॥ ७७ ॥ [४]अनादिर्भगवान्कालो नान्तोऽस्य देवि विद्यते । अव्युच्छिन्नास्त-तस्त्वेते सर्गस्थित्यंतसंयमाः ॥७८॥ अथाध्यात्मरहस्यं ते कथया-मि सुदुर्लभम् । यज्ज्ञानादीशकृपया साधको मोक्षमाप्नुयात् ॥७९॥

---

१ अत्रेदं तत्त्वं-जैनबौद्धादिसिद्धांतेषु तत्त्वविचारा बहव एवोन्नताधिकारप्रापकाः संति परं तेषु सर्वेष्वपि आधिभौतिकाध्यात्मिकस्वरूपयोरेव सृष्टिगतार्थेषु विविधानुभवसंपादनं निर्दिश्यते । आधिदैविकस्य तृतीयस्य स्वरूपस्य तेषु परिचयोऽपि नेतीयमेव महती न्यूनता । तस्यैवाधिदेवस्य प्रधानस्य त्रिष्वपि चाभिन्नतयानुदर्शनं वैदिकेऽस्मिन्दर्शने मुहुः क्रियत इतीयता महता भेदेन परिपूर्णतमो वैदिकः पंथाः । २ इति श्रीमत्पूज्यपादभगवतः वेदव्यासस्य । तस्मात्स्वलोकात्परावृत्तधीत्त्वं कुत इति चेत् तदुक्तं "तर्षच्छेदो न भवति पुरुषस्येह कल्मषात् । निवर्तते तदा तर्षः पापमंतगतं यदा ॥ विषयेषु तु संसर्गाच्छाश्वतस्य तु संश्रयात् । मनसा चान्यथा कांक्षन्परं न प्रतिपद्यते ॥ ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथाऽऽदर्शतले प्रख्ये पश्यत्यात्मानमात्मनि" ॥ इति श्रीमहाभारते मोक्षधर्म्मे । ३ प्रकृताविति । अतीतग्रहणं सर्वप्रलयोपलक्षणार्थं अतीतप्रलये यद्यस्मात् प्रकृतौ संस्थितं लीनं विश्वं आसीत् । तस्मात् विश्वस्य प्रकृतौ संचरणात् प्राकृतः अयं महाप्रलयः उच्यते । ४ अनादिरिति । ततः कारणादेते सर्गस्थित्यंतसंयमाः सर्गः स्थितिः च तदन्ते संयमः च अव्युच्छिन्नाः प्रवाहरूपेण अविरताः। अत एव"अनादावद्य यावद्भावाद्भविष्यदप्येवं । इदानीमिव सर्वत्र नात्यंतोच्छेदः" इत्यादि श्रीमत्पूज्यपादभगवतः कपिलस्य सांख्यदर्शने । इति पंच श्लोका विज्ञानभासतंत्रस्थाः ।

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते । भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ८० ॥ अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् । अधियज्ञं तमेवात्र देहे विद्धि विदां वरे ॥ ८१ ॥ एवं भावप्लवं धीरो गृहीत्वा भक्तिमात्मनः । उन्मज्जंश्च निमज्जंश्च भावमेवाभिसंश्रयेत् ॥ ८२ ॥ पुरुषः स परो देवि भक्त्या लभ्यस्त्वनन्यया । यस्यांतस्थानि भूतानि येन सर्वमिदं ततम्॥८३॥ इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ ८४ ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्नपरं किंचित्सा काष्ठा सा परा गतिः ॥ ८५ ॥ एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्रया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिः ॥ ८६ ॥ साधिभूताधिदैवं तं साधियज्ञं च ये विदुः । प्रयाणकालेपि परं ते विदुर्युक्तचेतसः ॥८७॥

इति श्रीश्रीमधुसूदनसंहितायां अध्यात्मरहस्यवर्णनं नामैकविंशोऽध्यायः ॥

---

## द्वाविंशोऽध्यायः ।

# कर्म्मयोगवर्णनम् ।

देव्युवाच । रहस्यं ज्ञानकाण्डस्य वेदानां तत्वतोऽधुना । श्रुत्वाहं परमां तृप्तिं गता वेदविदां वर ॥ १ ॥ कर्म्मकाण्डस्य तत्वेन रहस्यं वर्णयन्परम् । इदानीं कुरु मे नाथ कल्याणं परमं प्रभो ॥ २॥ श्रीश्रीमधुसूदन उवाच । गुणानां परिणामेन सम्बन्धः प्रकृतेर्यथा । कर्म्मभिश्च शरीरेण सम्बन्धोऽस्तीह तादृशः ॥ ३ ॥ न कर्म्मणां निवृत्तिः स्यात्स्थिते देहे कदा च न । कर्म्मानुष्ठानवृत्तिर्वै देहधर्म्मः प्रकीर्त्तितः ॥ ४ ॥ कृत्वापि कर्म्म यत्साधुरक-

१ श्रीमद्भगवद्गीतोपनिषत् । २ बुद्धेः परः महान् आत्मा महत्तत्त्वम् इमास्तिस्रः श्रुतयः काठकोपनिषद्गताः । ३ श्रीमद्भगवद्गीतोपनिषत् ।

र्म्मत्वं प्रतीच्छति । कर्म्मयोगः स एवास्य माहात्म्यं लोकविश्रु-
तम् ॥ ५ ॥ यथा कर्मप्रभावोऽयं सूक्ष्मात्सूक्ष्मतरो महान् । त-
थैव कर्म्मयोगस्य महिमातीन्द्रियक्र[2]मः ॥ ६ ॥ शुभं वाऽशुभमु-
त्कृष्टं निकृष्टं वा बृहल्लघु । न नश्यति क्वचित्कर्म्म समये फल-
ति ध्रुवम् ॥ ७ ॥ यथेदं सात्विकं कर्म स्वर्गादिसुखकारणम् ।
तथैव तामसं कर्म यातनादुःखकार[3]णम् ॥ ८ ॥ इत्येवाध्यात्मत-
त्वांशं विद्वद्भिर्ऋषिभिः स्मृतम् । तत्तत्फलोपभोगाय लोकानां
कल्पना कृता ॥ ९ ॥ सप्तानामूर्द्ध्वलोकानामधस्तात्तावतामपि[4] ॥
कर्म्मैव कारणं मन्ये बलस्येवेह भोजनम् ॥ १० ॥ एतत्संक्षेपरू-
पेण विस्तरेणापि भूयसा । श्रुतिस्मृतिपुराणाद्यैर्दर्शितं लोकवत्स-
लैः ॥ ११ ॥ पठित्वा वा समाकर्ण्य तानि शास्त्राणि यत्नतः ।
सदादेयमसद्धेयं कर्म्मैव सुखमिच्छता ॥ १२ ॥ सकामकर्मणामेष
पन्था निष्कण्टकः स्मृ[5]तः । निष्कामकर्मप्राशस्त्यं वक्तुमीशो न

---

१ समाधिवर्णनेनोपासनाकाण्डविज्ञानम्, ज्ञानयोगवर्णनेन च ज्ञानकाण्डविज्ञानं प्रदर्श्य अध्यायेऽस्मिन् कर्मयोगव्याख्यया कर्मकाण्डस्य परमाद्भुतं विज्ञानं प्रदर्श्यते । त्रयाणामेव वेदकाण्डानामेकमेव लक्ष्यं भवति भावत्रयाणान्तु तन्निष्ठानां स्वतन्त्रत्वात्स्वतन्त्ररूपेणैव त्रीणि काण्डानि सविस्तरं वर्णितानि । अत एव "ध्यानेनात्मनि पश्यन्ति के चिदात्मानमात्मना । अन्ये सांख्येन योगेन कर्मयोगेन चापरे" ॥ इति श्रीमद्भगवद्गीतोपनिषद् । २ "अथातो धर्मजिज्ञासा ।" इति कर्ममीमांसादर्शनं वेदाध्ययनानंतरं धर्मो जिज्ञासितव्यः स हि निःश्रेयसेन पुरुषं संयुनक्तीति प्रतिजानीमह इति हि सूत्रभाष्यम् । "चोदनालक्षणोऽर्थो धर्मः" । क्रियाप्रवर्तकं वचनेन भूतभवद्भविष्यत्सूक्ष्मव्यवहितविप्रकृष्ट इत्येवमादिजातीयकोऽर्थो लक्ष्यते सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे । चोदनैवेममर्थं शक्नोत्यवगमयितुं नान्यत्किं च नेंद्रियम् इति एतमेवार्थं तर्कपादेन प्रथमेन सूत्रयतिस्म भगवान् जैमिनिः । ३ अत एव "ऊर्ध्वं गच्छंति सत्वस्था मध्ये तिष्ठंति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छंति तामसाः " इति श्रीमद्गीतोपनिषद् । एवं यथा सत्कर्मधर्मेण क्रमोन्नतिर्भवति तथा सर्वमेव धर्मविज्ञानवर्णनाध्याये सविस्तरं प्रपंचितम् । ४ प्रकृतेः सप्तप्रकारत्वादूर्ध्वाधो लोकाः सप्त सप्तधैव सत्वतमोमयाः पुण्यपापसुखदुःखफला विराजि कल्पिताः । ५ "देहादिपञ्जरं यन्त्रं तदारोहोऽभिमानिता । विहितप्रतिषिद्धेषु प्रवृत्तिर्भ्रमणं भवेत् ॥ " इति श्रीविद्यारण्यमुनीश्वराः ।

कश्च न ॥ १३ ॥ निष्काममेव सत्कर्म मुक्तिं यच्छति दुर्ल्लभाम् । कर्तव्यमिति कुर्वन्तमनिच्छन्तं फलान्यपि ॥ १४ ॥ कर्माणि नैव बध्नन्ति प्रमदा इव योगिनम् । फलान्यकांक्षमाणो योऽशुभं वा शुभमाचरेत् ॥ १५ ॥ सुखदुःखफलैः पाशैर्न सम्बध्येत कर्हिचित् । स्निह्यन्सर्वेषु भूतेषु निन्दितां वर्जयन् क्रियाम् ॥ १६ ॥ कैवल्यमपि संप्राप्तं हस्ते कृत्य सुखी भवेत् । इत्यादि सर्वशास्त्रेषु व्यासादिविविधर्षयः ॥ १७ ॥ निष्कामकर्मयोगस्य फलानन्त्यमलं जगुः । ब्राह्मणाः क्षत्रियो वैश्यः शूद्रः स्त्री वाथ का च न ॥ १८ ॥ ब्रह्मचारी गृहस्थो वा वनस्थो वापि भिक्षुकः ॥ वर्त्तमानः सदाचारे यथा वर्णं यथाश्रमम् ॥ १९ ॥ यथाधिकारं निष्कामं स्वधर्मं चेद्य आश्रयेत् । संकल्पवर्जितं कर्मयोगं सत्साधनं विदुः ॥ २० ॥ चतुर्वर्गप्रदस्तस्य कर्मयज्ञ उदाहृतः । नित्यनैमित्तिकत्वाभ्यां काम्यरूपेण च त्रिधा ॥ २१ ॥ कर्मापि भेदतः प्रोक्तमृषिभिस्तत्वदर्शिभिः । आधिदैविकमध्यात्ममधिभूतं पुनस्त्रिधा[3] ॥ २२ ॥ अतो हि कर्मकाण्डस्य विस्तारोऽनन्त

१ विस्तृतसत्कर्मधर्मविवरणं सदाचारवर्णनाध्यायादिचतुर्भिरध्यायैः प्रायः प्रपंचितमेव पूर्वमिति। २ अत एव नित्यकर्मविषये कर्म्ममीमांसादर्शनं "अपि वाऽप्येकदेशेस्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात्" अ. ६ पा ३ सू० २ "विध्यपराधे च दर्शनात्समाप्तेः" ६ प्रायश्चित्तविधानाच्च ७ तथा नैमित्तिकविषये च । "नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्स्यात्" अ. ४ पा. ३ अ. २ । नैमित्तिके अन्यार्थं नित्यार्थं च प्रकृतं अन्येन निमित्तेन संबध्यते यथा शाल्यर्थं कुल्याः प्रणीयंते ताभ्यश्च पानीयं पीयते उपस्पृश्यते च एवं नित्ये दर्शपूर्णमासादौ गोदोहनादिनैमित्तिकं तस्मिन् श्रूयमाणे क्रत्वर्थमन्यत्स्यात् कुतः विकारत्वात् विशेषे श्रुतत्वात् इत्यर्थः । असति विशेषे तन्नैमित्तिकं न भवतीति तद्भाष्यम् । काम्ये च काम्यानां यथोक्तकाम्यफलकत्वे "कामो वा तत्संयोगेन चोद्यते, वीते च नियमस्तदर्थम्" ४ । ३ । ९ अ. तथा काम्यानामैहिकामुष्मिकफलवत्वे "योगसिद्धिर्वार्थस्योत्पत्य संयोगित्वात्" ४ । ३ । १२ अ. इत्यादि । ३ "गहना कर्मणो गतिः" इति भगवद्वानात्कर्मणां विस्तारबाहुल्येऽपि तदधिकारिणां भावभेदेनापि पुनस्तदेव कर्माधिदैवादिभेदेन भिद्यते । तत्राधिदैवं यथा सोमयज्ञादि । अध्यात्मं यथा जगति जीवहितार्थं धर्मज्ञानादिग्रंथप्रणयनादिरूपं । अधिभूतं यथा ब्राह्मणभोजनादि । दिग्दर्शनार्थमुदाहृतं सुधिभिरूह्यम् ।

ईक्ष्यते । अत एव सुसंक्षिप्तं विज्ञानं वर्णयत्परम् ॥ २३ ॥ मीमांसादर्शनं शास्त्रं सर्वतोऽत्यतिरिच्यते । अतश्चोत्कर्षमापन्नं गीताशास्त्रं धरातले ॥ २४ ॥ यथोपनिषदः सन्ति वेदसारसमुज्ज्वलाः । तथोपनिषदां सारं गीताशास्त्रं विदुर्बुधाः ॥ २५ ॥ तस्यापि सारं ते कर्मयोगं देवि ब्रुवेऽधुना । यमनुष्ठाय देवाश्च ऋषयश्च परं गताः ॥ २६ ॥ नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ २७ ॥ व्यवसायात्मिका बुद्धिरेकेह पतिवत्सले । बहुशाखा ह्यनन्ताश्च बुद्धयो व्यवसायिनाम् ॥ २८ ॥ योगस्था कुरु कर्म्माणि सङ्गं त्यक्त्वा शुचिस्मिते । सिध्यसिध्योः समा भूत्वा समत्वं योग उच्यते ॥ २९ ॥ आपूर्य्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् । तद्वत्कामा यं प्रविशन्ति सर्व्वे स शान्तिमाप्नोति न कामकामी ॥ ३० ॥ न कर्म्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । न च सन्न्यसनादेव सिद्धिं समधिगच्छति ॥ ३१ ॥ न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्म्मकृत् । कार्य्यते ह्यवशः कर्म्म सर्व्वः प्रकृतिजैर्गुणैः ॥ ३२ ॥ कर्म्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ३३ ॥ यस्त्विन्द्रियाणि मनसा नियम्यारभते प्रिये । कर्म्मेन्द्रियैः कर्म्म-

---

१ बहिरन्तर्लक्ष्यभेदेन लक्ष्यन्तावद्विविधम् । बहिर्लक्ष्यस्य प्रकृत्याश्रितत्वात्तदनन्तं भवति । अन्तर्लक्ष्यस्य तु केवलमाध्यात्मिकविज्ञानाश्रयेण निर्णेयत्वात्तदेकमेव सम्भवति । सैव बुद्धिरन्तर्लक्ष्यविषया व्यवसायात्मिका प्रज्ञा पराख्या एकैव निश्चीयते । २ यथा हि पूर्णो जलधिरसंख्यनदीप्रवाहाघातैरपि नैव चञ्चलतां व्रजति, तथैव निष्कामभावावलम्बनेन पूर्णतामाप्तं साधकस्यान्तःकरणं नैव कर्मस्रोतसां प्रतिघातैश्चाञ्चल्यँल्लभते। एवं च पूर्णताप्राप्तं साधकान्तःकरणं सर्वावस्थायामेव स्थिरमवतिष्ठते । अपूर्णमेव हि वस्तु चञ्चलधर्म्मि भवति पूर्णन्तु न कदापि परिवर्तनं भजते । तथा च कामनादिदूषितत्वादपूर्णभावलक्षितमेवान्तःकरणं वृत्तिचांचल्यरूपिभिस्त्रितापैराध्यात्मिकाधिदैविकाधिभौतिकैरुत्पीडयते । निष्कामभावावलम्बनेन तु पूर्णतामाप्तमन्तःकरणं न कदापि चाञ्चल्यलेशास्पदं भवतीति निश्चितमेव ॥

योगमसक्तः स विशिष्यते ॥ ३४ ॥ नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः । शरीरयात्रापि च ते न प्रसिध्येदकर्म्मतः ॥ ३५ ॥ यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते ॥ ३६ ॥ नैव तस्य कृतेनार्थो नाकृतेनेह कश्च न । न चास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ ३७ ॥ कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः । लोकसंग्रहमेवापि पश्यन्ती कर्तुमर्हसि ॥ ३८ ॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥ ३९ ॥ सक्ताः कर्म्मण्यविद्वांसो यथा कुर्व्वन्ति शोभने । कुर्य्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ ४० ॥ प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः । अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते । ४१ ॥ तत्वविच्चु पतिप्राणे गुणकर्म्मविभागयोः । गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते ॥ ४२ ॥ सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ४३ ॥ किं कर्म्म किमकर्म्मेति कवयोऽप्यत्र मोहिताः । तत्ते कर्म्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ ४४ ॥ कर्म्मणो ह्यपि बोद्धव्यं बोद्धव्यश्च विकर्म्मणः । अकर्म्मणश्च बोद्धव्यं ग-

१ अत एव "कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः" इति श्रुतिः ॥ "अंतस्त्यागी बहिःसंगी सुखं विचर राघव । इयं ज्ञानकला राम सकृज्ज्ञाता विवर्धते" इति च महारामायणम् । एवं श्रुतिस्मृत्येकवाक्यतायां अस्मिंल्लोके निष्कामकर्माण्येव कुर्वन् जीवितुमिच्छेदिति । अत एव अ. २ पा. ४ अ. १ "यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात्" "कर्तुस्तु धर्मनियमात्कालशास्त्रं निमित्तं स्यात्" "जीवने निमित्ते कर्मकर्तुर्धर्मो नियमश्चोद्यत इत्यधिकरणार्थः " इति कर्म्ममीमांसादर्शनम् । २ कर्मयोगिनः स्वदृष्टान्तैरुपदेशवचनैश्च जगति बन्धनागतानां जीवानामशेषकल्याणं साधयन्तीति कर्मयोगस्य परमोपकारिता प्रसिद्धा जीवन्मुक्ता हि "ज्ञानयोगभावयुक्ताः" "कर्मयोगभावयुक्ताः " चेति द्विश्रेणिका भवन्ति । जनकादयो महात्मानः कर्मयोगभावयुक्ता जीवन्मुक्ता आसन् । यावदेव जगतामुपकारजातं भूतपूर्वं यत् भवति भावि च, निखिलमेव तज्जीवन्मुक्तैर्महात्मभिः साधितं साध्यते साध्यं च । इदमेव कर्मयोगस्य परमं श्रेष्ठत्वमवगन्तव्यम् ॥

हना कर्म्मणो [1]गतिः ॥ ४५ ॥ कर्म्मण्यकर्म यः पश्येदकर्म्मणि
च कर्म्म यः । स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्न[2]कर्म्मकृत्॥४६॥
यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः । ज्ञानाग्निदग्धकर्म्मा-
णं तमाहुः पण्डितं बुधाः[3] ॥ ४७ ॥ त्यक्त्वा कर्म्मफलासङ्गं नि-
त्यतृप्तो निराश्रयः । कर्म्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति
सः ॥ ४८ ॥ श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्म्मफलत्यागस्त्यागाच्छान्तिरन[4]न्तरम् ॥ ४९ ॥ का-
म्यानां कर्म्मणां न्यासं संन्यासं कवयो विदुः । सर्व्वकर्म्मफल-
त्यागं प्राहुस्त्यागं विचक्षणाः ॥ ५० ॥ त्याज्यं दोषवदित्येके
कर्म्म प्राहुर्म्मनीषिणः । यज्ञदानतपःकर्म्म न त्याज्यमिति [5]चा-
परे ॥ ५१ ॥ एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्त्तव्यानीति मे देवि! निश्चितं मतमुत्तमम् ॥ ५२ ॥ नियतस्य
तु संन्यासः कर्म्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः
परिकीर्त्तितः ॥ ५३ ॥ दुःखमित्येव यत्कर्म्म कायक्लेशभयात्त्य-
जेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ५४ ॥
कार्य्यमित्येव यत्कर्म्म नियतं क्रियते प्रिये! । त्यक्त्वा सङ्गं फ-
लञ्चैव स त्यागः सात्विको मतः ॥ ५५ ॥ न द्वेष्ट्यकुशलं कर्म्म
कुशले नानुषज्जते । त्यागी सत्वसमाविष्टो मेधावी छिन्नसंशयः
॥ ५६ ॥ न हि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः । यस्तु
कर्म्मफलत्यागी स त्यागीत्यभिधीयते ॥ ५७ ॥ अनिष्टमिष्टं

१ कर्मानुष्ठानस्य स्वभावसिद्धत्वाज्जीवः कर्माकृत्वा क्षणमपि न शक्नोत्यवस्थातुम् । परन्तु कर्मावस्थायामपि स्वान्तःकरणस्य भाववैलक्षण्यानुसारेण जीवो नरकं स्वर्गं मुक्तिपदं वान्ते सँल्लभते । अतश्च विलक्षणफलत्रयप्रदायकत्वात्कर्मणो भावत्रयस्य विलक्षणमेव नामत्रयं प्रदत्तम् । भावत्रयस्यैतस्य दुर्ज्ञेयं भवति मर्म याथार्थ्यम्। गहना हि कर्मणो गतिः सा योगविद्भिरेव परिज्ञातुं शक्यते । २ एतदेव कर्मयोगस्य विज्ञानम् । ३ एतदेव कर्मयोगिनो लक्षणम् । ४ अत एव "एवं त्वयि नान्यथास्ति न कर्म्म लिप्यते नरे" । इति श्रुतिः । ५ कर्मणां प्राधान्यलक्षणं यथा "यैर्द्रव्यं न चिकित्स्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्त्वात्" इति अ. २ पा. १ सू. ७ कर्ममीमांसादर्शनम् ।

मिश्रश्च त्रिविधं कर्म्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ॥ ५८ ॥ सन्न्यासः कर्म्मयोगश्च निश्रेयसकरावुभौ । तयोस्तु कर्म्मसन्न्यासात्कर्म्मयोगो विशिष्यते ॥५९॥ ज्ञेयः स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति । निर्द्वन्द्वो हि महादेवि! सुखं बन्धात्प्रमुच्यते ॥६० ॥ सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः । एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ६१ ॥ यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते । एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति ॥ ६२ ॥ सन्न्यासस्तु शुभाचारे! दुःखमाप्तुमयोगतः । योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६३ ॥ योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः । सर्व्वभूतात्मभूतात्मा कुर्व्वन्नपि न लिप्यते ॥६४॥ नैव किञ्चित्करोमीति युक्तो मन्येत तत्ववित् । पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥ ६५ ॥ प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि । इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन् ॥ ६६ ॥ ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥ ६७ ॥ पञ्चेमानि शुभाचारे! कारणानि निबोध मे । सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्व्वकर्म्मणाम् ॥ ६८ ॥ अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधम् । विविधाश्च पृथक्चेष्टा दैवञ्चैवात्र पञ्चमम् ॥ ६९ ॥ शरीरवाङ्मनोभिर्यत्कर्म्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः[3] ॥ ७० ॥ तत्रैवं सति कर्त्तारमात्मानं केवलन्तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्म्म-

१ ज्ञानयोगः कर्मयोगश्चेति द्वयमेव तुल्यफलप्रदं तत्ततश्चैकरूपम् । कर्मत्यागाधिक्यान्मुक्तः पुरुषो ज्ञानयोगी, निष्कामकर्मसाधनाधिक्यात्तु कर्मयोगीति भिन्नसंज्ञयाभिधीयते ॥ अत एव "सर्व्वगो ह्येष ईश्वरः क्रियाज्ञानात्मा" । इत्यादि श्रुतिः । २ अत एव "परिद्यावापृथिवी सद्यहेत्वापरिलोकान् परिदिशः परिस्वः । ऋतस्य तन्तुं विततं विचृत्य तदपश्यत् तदभवत् तदासीत्" । इति श्रुतिः । ३ इदमपि सर्वकर्मयोगवर्णनवचनजातं श्रीमद्भगवद्गीतास्थम् ।

तिः ॥ ७१ ॥ विध्युक्तं कर्म्म कर्त्तव्यं ब्रह्मविद्भिश्च नित्यशः । प्रयोगकाले योगानां दुःखमित्येव न त्यजेत्[1] ॥ ७२॥ अन्यायाचरणाभावे न हि ज्ञानस्य बाधनं । अतो विद्वानपि न्याय्यं वर्त्ततो[2]त्कर्षसिद्धये ॥ ७३ ॥ अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः । एतादृशोऽपि नाचारं श्रौतं स्मार्त्तं परित्यजेत्[3] ॥ ७४ ॥ न निषिद्धानि वर्त्तेत पूर्णज्ञानफलेच्छया[4] । निषिद्धवर्जनं दांतः संतुष्टः कुरुते सदा ॥ ७५ ॥ विषया विनिवर्त्तंते[5] निराहारस्य देहिनः । रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ॥ ७६ ॥ बुद्धिः कर्मगुणैर्हीना[6] यदा मनसि वर्त्तते । तदा संपद्यते ब्रह्म तत्रैव प्रलयं गतम्[7] ॥ ७७ ॥ अस्पर्शनमश्रृण्वानमनास्वादमदर्शनं । अघ्राणमवितर्कं च सत्वं प्रविशते परम् ॥ ७८ ॥ मनस्याकृतयो मग्ना मनस्त्वभिगतं मतिं । मतिस्त्वभिगता ज्ञानं ज्ञानं चाऽभिगतं परम्[8] ॥ ॥ ७९ ॥ इन्द्रियैर्मनसः सिद्धिर्न बुद्धिं बुद्ध्यते मनः । न बुद्धिर्बुद्ध्यते व्यक्तं सूक्ष्मं त्वेतानि पश्यति[9] ॥ ८० ॥ कर्म्मणां यस्य निलयो निरयस्तस्य कीर्तितः । न देहिना ततः शक्यं त्यक्तुं कर्म्माण्यशेषतः । तस्मादामरणाद्वैधं कर्त्तव्यं योगिना सदा॥८१॥

---

१ इति श्रीमत्पूज्यपादमहर्षिभरद्वाजः। २ इति श्रीब्रह्मतर्के।३ इति श्रीहरिवंशे । ४ इति श्रीपाद्मे।५ एतत्परिहारार्थं निवृत्तं धर्ममाह विषया इति। आहरणमाहारो विषयभोगस्तद्वर्जितस्य विषयाः शब्दाद्यभिलाषाः विनिवर्तंते परन्तु रसो वासनात्मको न निवर्तते सोऽपि परं आत्मानं दृष्ट्वा अवाप्तसकलकामस्य पुंसो निवर्तते । भोगेच्छां त्यक्त्वाऽऽत्मानं पश्यतो विषयबंधो निवर्तत इत्यर्थः । ६ कर्मगुणैः कर्माणि गुणभूतानि येषां तैर्विषयसंगैः मनसि मनःप्रधाने त्वंपदार्थेऽस्मितामात्रे तदा । मनोऽपीति शेषः । ब्रह्म संपद्यते कुतः यतस्तत्रैव प्रलयं गतं भवति । ७ मनसीति आकृतयो घटादिव्यक्तयः, मनःसंकल्पकृतत्वात्तत्रैव मग्ना भवन्ति । तथा चाक्षपादाचार्यप्रणीतं सूत्रं । दोषनिमित्तं रूपादयो विषयाः संकल्पकृता इति । एवं मनसो बुद्धौ बुद्धेर्जीवे तस्य ब्रह्मणि च लय इत्यर्थः।८ इति श्रीमत्पूज्यपादभगवान् वेदव्यासः श्रीमहाभारते । ९ इति श्रीमत्पूज्यपादमहर्षियाज्ञवल्क्यः । अत एव “ पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन् । यदात्मनः सुनियतमानंदोत्कर्षमाप्नुयात् ॥ ” इति कौषारवश्रुतिः ।

त्वश्चैव संत्यजन्तीह फलं कर्म्म समाचर । योगेन परमात्मानं युक्त्वा त्यज कलेवरम् ॥ ८२ ॥ कर्म्मण्येवाधिकारस्ते मा फलेषु कदा च न । मा कर्म्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्म्मणि ॥ ८३ ॥

इति श्रीश्रीमधुसूदनसंहितायां कर्म्मयोगवर्णनं नाम द्वाविंशोऽध्यायः ।

---

## त्रयोविंशोऽध्यायः ।

# वेदान्तवर्णनम् ।

श्रीश्रीमधुसूदन उवाच । ईशानुकम्पासंसिद्धौ वैदिकं कर्म सुव्रते । उक्तं चोपासनं तद्वज्ज्ञानं विज्ञानपूर्वकम् ॥ १ ॥ परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् । यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ २ ॥ प्रमाणोत्पादिता विद्या प्रमाणं प्रबलं विना । न नश्यति न वेदान्तात्प्रबलं मानमीक्षते[2] ॥ ३ ॥ तस्माद्वेदान्तसंसिद्धं सदद्वैतं न बाध्यते । अन्तकालेऽप्यतो भूतविवे-

---

१ अत एव "अनु कृतेस्तस्य च। अपि च स्मर्य्यते।" इति वेदान्तदर्शनम् । "न तद्भासयते सूर्य्यो न शशांको न पावकः।यद्गत्वा न निवर्तन्ते तद्धाम परमं मम।" इति गीतोपनिषद्। इत्थं वेदांतवेद्यं ब्रह्मपदमिति मत्वैव प्रश्नाऽनवकाश इत्यभिसंधिः । २ वेदान्तलक्ष्ये पदे द्वैतभावो न तिष्ठति । अत एव वेदान्त इति श्रेष्ठविज्ञानस्यापरं नाम। त्रिपुटीबोधकोपासनाभावे सदसद्व्यक्तिरूपज्ञानभावे क्रियायोगभावेच द्वैतसम्बन्धो निश्चितमेवावशिष्यते। फलतस्तु वेदान्तज्ञानं सर्वावस्थासु चरमोपलभ्यमेव भवति । अत एवाग्रिमाध्यायोक्तजीवन्मुक्तलक्षणलक्षिता एवैतस्याधिकारिणः न केवलं वेदांतश्रुताः तथा च पूर्वाध्यायांताः सर्वेप्युपदेशास्त्रिगुणमयांतःकरणवतां सैंवषोमवाधिकारिणां परमादरेण निरंतरमनुष्ठेयाः। अत एव श्रीमच्छंकरभगवत्पादसमुपदिष्टं सोपानपंचकं सम्पूर्णं चरितार्थं। न हि सर्वप्रकारेणानुष्ठानमंतराऽद्वैतसाम्राज्यसंपत्तौ केवलं मनोत्साहः सार्थकतां गमिष्यतीत्यनधिकारिवर्गेण संतोष्टव्यम् । अत एव । " तदेव निर्भयं ब्रह्मज्ञानालोकं समंततः " । इत्यादि गौ० श्रुतिः । " अभेददर्शनं ज्ञानम् " इत्यादि स्कं० श्रुतिः । " स्वयमुत्पद्यते ज्ञानम् " सत्यं ज्ञानमनन्तं ब्रह्म " । इत्यादि तै० श्रुतिः । "सोऽविमुक्तं ज्ञानमाचष्टे यो वै तदेवं " । इत्यादि जा० श्रुतिः ।

कान्निर्वृतिः स्थिता ॥ ४ ॥ अनेन यत्पदं लभ्यं परब्रह्माद्वयात्मकम् । दर्शनेषु तदेवोक्तं मुनिभिर्नामभेदतः ॥ ५ ॥ निष्कामावस्थितिः कुत्र परा भक्तिश्च कुत्र चित् । ब्रह्मसद्भावमन्यत्र सर्वं तद्ब्रह्म निर्गुणम् ॥ ६ ॥ तदेव सततं जीवन्मुक्तानां परमं पदम् । परमार्थतया सर्ववेदवेदान्तचिद्रसम्॥७॥य एवं ब्रह्म वेदैष ब्रह्मैव भवति स्वयम् । ब्रह्मणो नास्ति जन्मातः पुनरेष न जायते ॥ ८ ॥ त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवेज्जनः । निर्द्वंद्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान् ॥ ९ ॥ यावानर्थ उदपाने सर्वतःसंप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥१०॥ अज्ञानप्रभवं सर्व्वं ज्ञानेन प्रविलीयते । संकल्पो विविधः कर्त्ता विचारः सोऽयमीदृशः ॥ ११ ॥ निःसरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः । सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि[2] ॥ ॥ १२ ॥ चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता । तमोरजःसत्वगुणा प्रकृतिर्द्विविधा च सा ॥ १३ ॥ सत्वशुध्यविशुद्धिभ्यां मायाविद्ये च ते मते । मायाबिम्बो वशीकृत्य तां स्यात्सर्व्वज्ञ ईश्वरः ॥ १४ ॥ अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा । सा कारणशरीरं स्यात्प्राज्ञस्तत्राभिमानवान् ॥ १५ ॥ तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया । वियत्पवनतेजोऽम्बुभुवो भूतानि जज्ञिरे[3]॥ ॥ १६ ॥ ब्रह्मणः सर्वभूतानि जायन्ते परमात्मनः । तस्मादेतानि ब्रह्मैव भवन्तीत्यवधारयेत्[4] ॥ १७ ॥ प्राज्ञस्तत्राभिमानेन तैजसत्वं

१ वैदिकाद्वैतब्रह्मसद्भावे समुदिते ज्ञातृज्ञेयत्वादिद्वैतभावपूर्णा वैदिकोपदेशा निष्पन्नप्रयोजना एव सम्पद्यन्ते । तत्रैवाद्वैतभावे जीवब्रह्मणोरैक्यसंस्थापनं भवति, स च भावो ब्रह्मपदसच्चिदानन्दभावादिसंज्ञाभिः समभिधीयते । इति श्रीमद्भगवद्गीतास्थं । २ श्रीमत्पूज्यपादभगवतो महर्षेर्याज्ञवल्क्यस्य।३ इदमेव सृष्टिविज्ञानस्य गूढतमं रहस्यम् । विशेषविवेचनं तु वेदान्तदर्शने द्रष्टव्यम्। अत एव "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वम्"। इतिश्रुतिः । ४ अत एव "गतिसामान्यात् श्रुतत्वाच्च" । इति वेदान्तदर्शनम् ।

प्रपद्यते । हिरण्यगर्भतामीशस्तयोर्व्यष्टिसमष्टिता ॥ १८ ॥ समष्टिरीशः सर्वेषां स्वात्मतादात्म्यवेदनात् । तदभावात्ततोऽन्ये तु कथ्यन्ते व्यष्टिसंज्ञया ॥ १९ ॥ चैतन्यं यदधिष्ठानं लिङ्गदेहश्च यः पुनः ॥ चिच्छाया लिङ्गदेहस्था तत्संघो जीव उच्यते ॥ २० ॥ माहेश्वरी तु या माया तस्या निर्म्माणशक्तिवत् । विद्यते मोहशक्तिश्च तं जीवं मोहयत्यसौ ॥ २१ ॥ कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्व्विधा । घटाकाशमहाकाशौ जलाकाशाभ्रखे यथा॥ ॥ २२ ॥ शक्तिरस्त्यैश्वरी का चित्सर्व्ववस्तुनियामिका । आनन्दमयमारभ्य गूढा सर्वेषु वस्तुषु ॥ २३ ॥ वस्तुधर्म्मा नियम्येरन् शक्त्या नैव यदा तदा । अन्योन्यधर्म्मसाङ्कर्य्याद्विप्लुवेत जगत्खलु ॥ २४ ॥ चिच्छायावेशतः शक्तिश्चेतनेव विभाति सा । तच्छक्त्युपाधिसंयोगाद्ब्रह्मैवेश्वरतां व्रजेत् ॥ २५ ॥ बुद्धौ तिष्ठन्नान्तरोऽस्या धिया नीक्ष्यश्च धीवपुः । धियमन्तर्यमयतीत्येवं वेदेन घोषितम् ॥ २६ ॥ तन्तुः पटे स्थितो यद्वदुपादानतया तथा । सर्व्वोपादानरूपत्वात्सर्वत्रायमवस्थितः ॥ २७ ॥ उपक्रमादिभिर्लिङ्गैस्तात्पर्य्यस्य विचारणात् । असङ्गब्रह्ममायावी सृजत्येष महेश्वरः ॥ २८ ॥ अन्नं प्राणो मनो बुद्धिरानन्दश्चेति पञ्च ते । कोशास्तैरावृतः स्वात्मा विस्मृत्या संसृतिं व्रजेत् ॥ २९ ॥ स्यात्पञ्चीकृतभूतोत्थो देहः स्थूलोऽन्नसंज्ञकः। लिङ्गे तु राजसैः प्राणैः प्राणः कर्म्मेन्द्रियैः सह ॥ ३० ॥ सात्विकैर्धीन्द्रियैः साकं विमर्शात्मा मनोमयः । तैरेव साकं विज्ञानमयोधीर्निश्चयात्मिका ॥ ३१ ॥ कारणे सत्वमानन्दमयोमोदादिवृत्तिभिः । तत्तत्कोशैस्तु तादात्म्यादात्मा तत्तन्मयो भवेत् ॥ ३२ ॥ सत्कर्म्मपरिपाकात्ते करु-

१ "ईक्षणादिप्रवेशान्ता सृष्टिरीशकृता भवेत् । जाग्रदादिविमोक्षान्तः संसारो जीवकर्तृकः॥" इति श्रीमत्पूज्यपादविद्यारण्यमुनीश्वराः । २ कूटस्थः जीवचैतन्यांतर्यामी । कूटस्थविवरणमध्यात्मरहस्यवर्णनाध्याये विवेचितम् । ३ अत एव "जन्माद्यस्य यतः" "लोकवत्तु लीलाकैवल्यं ।" इति वेदान्तदर्शनम् । ४ पंचकोशविवरणं तैत्तिरीयभृगुवल्यादिषु द्रष्टव्यम् ।

णानिधनोद्धृताः । प्राप्य तीरतरुच्छायां विश्राम्यन्ति यथासुखम् ॥ ३३ ॥ उपदेशमवाप्यैवमाचार्य्यात्तत्वदर्शिनः । पञ्चकोशविवेकेन लभन्ते निर्वृतिं पराम् ॥ ३४ ॥ संसारः परमार्थोऽयं सँल्लग्नः स्वात्मवस्तुनि । इति भ्रान्तिरविद्या स्याद्विद्ययैश निवर्तते ॥ ३५ ॥ आत्माभासस्य जीवस्य संसारो नात्मवस्तुनः । इति बाधो भवेद्विद्या लभ्यतेऽसौ विचारणात् ॥ ३६ ॥ सदा विचारयेत्तस्माज्जगज्जीवपरात्मनः । जीवभावजगद्भावबाधे स्वात्मैव शिष्यते ॥३७॥ जलव्योम्ना घटाकाशो यथा सर्व्वैस्तिरोहितः । तथा जीवेन कूटस्थः सोऽन्योन्याध्यास उच्यते ॥ ३८॥ अयं जीवो न कूटस्थं विविनक्ति कदा च न । अनादिरविवेकोऽयं मूला विद्येति गम्यताम् ॥ ३९॥ विक्षेपावृत्तिरूपाभ्यां द्विधा विद्या प्रकल्पिता । न भाति नास्ति कूटस्थ इत्यापादनमावृतिः ॥ ४० ॥ अविद्यावृतकूटस्थे देहद्वययुता चितिः । शुक्तौ रूप्यवदध्यस्ता विक्षेपाध्यास एव हि ॥ ४१ ॥ त्रयमेव भवेन्मिथ्या गुणत्रयविनिर्म्मितम् । अस्य द्रष्टा गुणातीतो नित्यो ह्येकश्चिदात्मकः ॥ ४२ ॥ यद्वन्मृदि घटभ्रान्तिं शुक्तौ वा रजतस्थितिम् । तद्वद्ब्रह्मणि जीवत्वं वीक्ष्यमाणो न पश्यति[२] ॥ ४३ ॥ यथा मृदि घटो नाम कनके कुण्डलाभिधा । शुक्तौ हि रजतख्यातिर्जीवसंज्ञा तथापरे ॥ ४४॥ यथैव व्योम्नि नीलत्वं यथा नीरं मरुस्थले । पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥ ४५ ॥ ईश्वरेणापि जीवेन सृष्टं द्वैतं विवि-

१ "आभास एव च" । इति वेदान्तदर्शनम् । "तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्म्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्म्मधर्म्मिणोर्म्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः ।" "तमेतमेवं लक्षणमध्यासं पंडिता अविद्येति मन्यन्ते तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः । तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न संबध्यते ।" इति श्रीमत्पूज्यपादभगवंतः शंकराचार्याः । २ अत एव "उत्क्रमिष्यत् एवं भावादित्यौडुलोमिः । अवस्थितेरिति काशकृत्स्नः । प्रकृतिश्च प्रतिज्ञादृष्टांतानुपरोधात्" । इति वेदान्तदर्शनम् ।

च्यंते । विवेके सति जीवेन हेयो बन्धः स्फुटीभवेत् ॥ ४६ ॥ मा-
यान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्[2] । स मायी सृजतीत्याहुः
श्वेताश्वतरशाखिनः ॥ ४७ ॥ द्रवत्वमुदके वन्हावौष्ण्यं काठिन्य-
मश्मनि । मायाया दुर्घटत्वञ्च स्वतः सिध्यति नान्यथा ॥ ४८ ॥
न वेत्ति मायिनं लोको यावत्तावच्चमत्कृतिम् । धत्ते मनसि पश्चात्तु
मायैषेत्युपशाम्यति ॥ ४९ ॥ अन्वयव्यतिरेकाभ्यां पञ्चकोशंवि-
वेकतः । स्वात्मानं तत उद्धृत्य परं ब्रह्म प्रपद्यते ॥ ५० ॥ परोक्षं
ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम् । बुद्धिपूर्वकृतं पापं कृत्स्नं द-
हति वह्निवत् ॥ ५१ ॥ अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम् ।
संसारकारणाज्ञानतमसश्चण्डभास्करः ॥ ५२ ॥ अनिवृत्तेऽपीश-
सृष्टे द्वैते तस्य मृषात्मताम् । बुध्वा ब्रह्म द्वयं बोद्धुं शक्यं वस्त्वै-
क्यैवादिना[3] ॥ ५३ ॥ प्रलये तन्निवृत्तौ तु गुरुशास्त्राद्यभावतः ।
विरोधि द्वैताभावेऽपि न शक्यं बोद्धुमद्वयम् ॥ ५४ ॥ एतयोर्यदु-
पादानमेकं सूक्ष्मं सदव्ययम् । यथैव मृद्घटादीनां विचारः सोऽ-
यमीदृशः[4] ॥ ५५ ॥ अहमेको हि सूक्ष्मश्च ज्ञाता साक्षी सदव्ययः ।
तदहं नात्र सन्देहो विचारः सोऽयमीदृशः ॥ ५६ ॥ आत्मा वि-
निष्कलो ह्येको देहो बहुभिरावृतः । तयोरैक्यं प्रपश्यन्ति किम-

---

१ अत एव " ऋतं पिबंतौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातपौ ब्रह्म विदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः । इति श्रुतिः तथा " गुहांप्रविष्टावात्मानौहितद्दर्शनात् " इति वेदान्तदर्शनम् । २ अत एव " मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् । " इति स्मृतिः । " मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् " इति वेदान्तदर्शनम् । ३" तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् । एतदेकपरत्वञ्च तदभ्यासं विदुर्बुधाः ॥ वासनानेककालीना दीर्घकालं निरन्तरम् । सादरञ्चाभ्यस्यमाने सर्व्वथैव निवर्तते ॥ " इति श्रीमत्पूज्यपादविद्यारण्यमुनीश्वराः । ४ अत एव " वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं यथा सौम्यैकेन लौहमणिना सर्वं लोहमयं विज्ञातं स्यात् " इत्यादि श्रुतिः । "तदनन्यत्वमारम्भणशब्दादिभ्यः " इति वेदांतदर्शनं च । एतयोः परमात्मजीवात्मनोस्तथा मायाब्रह्मणोः ।

ज्ञानमतःपरम् ॥५७॥देहोऽहमित्ययं मूढो धृत्वा तिष्ठत्यहो जनः। ममायमित्यपि ज्ञात्वा घटद्रष्टेव सर्व्वदा ॥ ५८ ॥ ब्रह्मैवाहं समः शान्तः सच्चिदानन्दलक्षणः । नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ ५९ ॥ निर्व्विकारो निराकारो निरवद्योऽहमव्ययः । नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ ६० ॥ अहं द्रष्टृतया सिद्धो देहो दृश्यतया स्थितः । ममायमिति निर्द्देशात्कथं स्याद्देहकः पुमान् ॥६१ ॥ अहं विकारहीनस्तु देहो नित्यं विकारवान् । इति प्रतीयते साक्षात्कथं स्याद्देहकः पुमान् ॥ ६२ ॥ यस्मात्परमिति श्रुत्यापीदं पुरुषलक्षणम् । विनिर्णीतं विमूढेन कथं स्याद्देहकः[3] पुमान्॥६३॥सर्व्वं पुरुष एवेति सूक्ते पुरुषसंज्ञिते । अप्युच्यते यतः श्रुत्या कथं स्याद्देहकः पुमान्[4]॥६४॥चैतन्यस्यैकरूपत्वाद्भेदो युक्तो न कर्हिचित् । जीवत्वञ्च मृषा ज्ञेयं रज्जौ सर्पग्रहो

---

१ "तमेवं लक्षणमध्यासं पंडिता अविद्येति मन्यन्ते तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः । तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि सन् सम्बध्यते ।" इति श्रीमत्पूज्यपादभगवच्छंकराचार्याः । २ अत एव "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्योरूपाणि पश्यति । स वा अयं पुरुषः जायमानः शरीरमभिसंपद्यमानः पाप्मभिः संसृज्यते । स उत्क्रामन्म्रियमाणः पाप्मनो विजहाति । तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयं स्वप्नस्थानं तस्मिन्सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानम् । अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रम्याक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य सर्व्वतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्म्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति । न तत्र रथानरथयोगानपन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवंत्यथ वेशान्तान् पुष्करिणीः सृजते स हि कर्त्ता ।" इत्यादि श्रुतिः। ३ अत एव "यस्मात्परं नापरमस्ति किंचित् यस्मान्नाणीयो न ज्यायोऽस्ति किंचित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व्वम्" ॥ इति श्रुतिः । विमूढेनापि पुरुषलक्षणमिदं निर्णीतमतः कथं देहकः पुमान्स्यादित्यन्वयः । ४ अत एव "पुरुष एवेदं सर्वम्" इति पुरुषसूक्तश्रुतिः ।

यथा ॥ ६५ ॥ रज्ज्वज्ञानं क्षणेनैव यद्वद्रज्जुर्हि सर्पिणी । भाति तद्वच्चितिः साक्षाद्विश्वाकारेण केवला ॥ ६६ ॥ उपादानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते । तस्मात्सर्व्वप्रपञ्चोऽयं ब्रह्मैवास्ति न चेतरत् ॥ ६७ ॥ व्याप्यव्यापकता मिथ्या सर्व्वमात्मेति शासनात् । इति ज्ञाते परे तत्वे भेदस्यावसरः कुतः ॥ ६८ ॥ श्रुत्या निवारितं नूनं नानात्वं स्वमुखेन हि । कथं भासो भवेदन्यः स्थिते चाद्वयकारणे ॥ ६९ ॥ दोषोऽपि विहितः श्रुत्या मृत्योर्मृत्युं स गच्छति । इह पश्यति नानात्वं मायया वञ्चितो नरः ॥ ७० ॥ एवमात्मन्यविद्यातो देहाध्यासो हि जायते । स एवात्मपरिज्ञानाल्लीयते च परात्मनि ॥ ७१ ॥ सर्व्वमात्मतया ज्ञानं जगत्स्थावरजङ्गमम् । अभावात्सर्व्वभावानां देहस्यानात्मता कुतः ॥७२ ॥ आत्मानमेव विज्ञाय कालं नय पतिव्रते । प्रारब्धमखिलं

---

१ कार्यकारणविचारेणैकमेव परब्रह्म कारणरूपेण कारणब्रह्म, प्रपञ्चमयकार्यरूपेण कार्यब्रह्म च भवति । यद्यपि विचाररीतिभेदेन जगत्कर्तुरीश्वरस्य, कार्यरूपस्य जगतश्च विभिन्नरूपेण वर्णनं विविधेषु शास्त्रेषु दृश्यते तथापि कार्यकारणविचारेषु सर्वेषामेवैकमत्यमवश्यं भावीत्येकमेव परं ब्रह्म कार्यकारणभेदेन प्रकृतिपुरुषरूपं भवति ॥ अत एव "यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति, तदितर इतरं शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति, यत्र वा अस्य सर्व्वमात्मैवाभूत तत् केन कं जिघ्रेत्, केन कं पश्येत्, केन कं शृणुयात्, केन कमभिवदेत्, केन कं मन्वीत, केन कं विजानीयात्, येनेदं सर्व्वं विजानाति तं केन विजानीयात्, विज्ञातारमरे केन विजानीयाम्" । "एकमेवाद्वितीयम्" इत्यादिश्रुतिः । २ अत एव "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" ॥ इति श्रुतिः । ३ "चित्रार्पितमनुष्याणां वस्त्राभासाः पृथक् पृथक् । चित्राधारेण वस्त्रेण सदृशा इव कल्पिताः ॥ पृथक् पृथक् चिदाभासाश्चैतन्याध्यस्तदेहिनाम् । कल्पान्ते जीवनामानो बहुधा संसरन्त्यमी ॥" इति पूज्यपादमहर्षिवशिष्ठः । "अयं प्रपंचो नास्त्येव नोत्पन्नं नोत्थितं जगत् । चित्तं प्रपंच इत्याहुर्नास्ति नास्त्येव सर्वदा" ॥ "सर्वं खल्विदं ब्रह्म" "एकमेवाद्वितीयम्" "उपाऽऽदानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते । तस्मात्सर्वप्रपञ्चोऽयं ब्रह्मैवाऽस्ति न चेतरत् ॥ व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् । इति ज्ञाते परे तत्वे भेदस्याऽवसरः कुतः ॥" इत्यादि श्रुतिः ।

भोग्यं नोद्वेगं कर्तुमर्हसि ॥ ७३ ॥ उत्पन्नेऽप्यात्मविज्ञाने प्रारब्धं नैव मुञ्चति । इति यच्छ्रूयते शास्त्रात्तन्निराक्रियतेऽधुना ॥ ७४ ॥ तत्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते । देहादीनामसत्त्वात्तु यथा स्वप्नो विबोधतः ॥ ७५ ॥ कर्म्म जन्मान्तरीयं यत्प्रारब्धमिति कीर्तितम् । तत्तु जन्मान्तराभावात्पुंसो नैवास्ति कर्हिचित्[1] ॥ ७६॥ स्वप्नदेहो यथाध्यासस्तथैवायं हि देहकः । अध्यस्तस्य कुतो जन्म जन्माभावे हि तत्कुतः ॥ ७७ ॥ तथा स्वप्नेऽत्र वेद्यन्तु न स्थिरं जागरे स्थिरम् । तद्भेदोऽतस्तयोः संविदेकरूपा न भिद्यते ॥७८॥ सुप्तोत्त्थितस्य सौषुप्ततमो बोधो भवेत्स्मृतिः । सा चावबुद्धविषयावबुद्धं तत्तदा ततः ॥ ७९ ॥ स बोधो विषयाद्भिन्नो न बोधात्स्वप्नबोधवत् । एवं स्थानत्रयेऽप्येका संवित्तद्वद्दिनान्तरे ॥ ८० ॥ मासाब्दयुगकल्पेषु गतागम्येष्वनेकधा । नोदेति नास्तमेत्येका संविदेषा स्वयम्प्रभा ॥८१॥ परमात्मावशेषोऽपि तत्सत्यत्वविनिश्चयः । न जगद्विस्मृतिर्नो चेर्ज्जीवन्मुक्तिर्न सम्भवेत् ॥ ८२ ॥ परोक्षा चापरोक्षेति विद्या द्वेधा विचारजा । तत्रापरोक्षविद्याप्तौ विचारोऽयं समाप्यते ॥ ८३ ॥ अस्ति ब्रह्मेति चेद्वेद परोक्षज्ञानमेव तत्[2] । अहं ब्रह्मेति चेद्वेद साक्षात्कारः स उच्यते[3] ॥ ८४ ॥ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायेद्बहूञ्छब्दान्वाचो विग्लापनं हि तत् ॥ ८५ ॥ तत्वं बुध्वापि कामादीन्निःशेषं न जहासि चेत् । यथेष्टाचरणं ते स्यात्कर्म्म शास्त्राति-

---

१ "नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्म्मभिः । न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥" इति श्रीमत्पूज्यपादविद्यारण्यमुनीश्वराः । २ "देहाद्यात्मत्वविभ्रान्तौ जाग्रत्यां न हठात्पुमान् । ब्रह्मात्मत्वेन विज्ञातुं क्षमते मन्दधी स्वतः ॥ अपरोक्षशिला बुद्धिर्न परोक्षेशतां नुदेत् । प्रतिमादिषु विष्णुत्वे को वा विप्रतिपद्यते ॥" इति श्रीमत्पूज्यपादविद्यारण्यमुनीश्वराः । ३ "विचाराज्जायते बोधोऽनिच्छा यं न निवर्तयेत् । स्वोत्पत्तिमात्रात्संसारे दहत्यखिलसत्यताम् ॥ तावता कृतकृत्यः सन्नित्यतृप्तिमुपागतः । जीवन्मुक्तिमनुप्राप्य प्रारब्धक्षयमीक्षते ॥" इति श्रीमत्पूज्यपादविद्यारण्यमुनीश्वराः ।

लङ्गिनः ॥ ८६ ॥ बुद्धाद्वैतसतत्वस्य यथेष्टाचरणं यदि । शुनां तत्वदृशाश्चैव को भेदोऽशुचिभक्षणे ॥ ८७ ॥ येनेक्षते श्रृणोतीदं जिघ्रति व्याकरोति च । स्वाद्वस्वादू विजानाति तत्प्रज्ञानमुदीरितम् ॥ ८८ ॥ चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु । चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्ममय्यपि ॥ ८९ ॥ परिपूर्णः परात्मास्मिन्देहे विद्याधिकारिणि । बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्य्यते ॥९०॥स्वतः पूर्णः परात्मात्र ब्रह्मशब्देन वर्णितः । अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम् ॥ ९१ ॥ एकमेवाद्वितीयं सन्नामरूपविवर्जितम् । सृष्टेः पुराऽधुनाप्यस्य तादृक्त्वं तदितीर्य्यते ॥ ९२ ॥ श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम् । एकता गृह्यतेऽसीति तदैक्यमनुभूयताम् ॥ ९३ ॥ स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् । अहङ्कारादिदेहान्तात्प्रत्यगात्मेति गीयते ॥ ॥ ९४ ॥ दृश्यमानस्य सर्व्वस्य जगतस्तत्त्वमीर्य्यते । ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ ९५ ॥ क्षीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टे परावरे । बहुत्वं तन्निषेधार्थं श्रुत्या गीतं यतः स्फुटम् ॥९६॥ अनेनैव प्रकारेण वृत्तिर्ब्रह्मात्मिका भवेत् । उदेति शुद्धचित्तानां वृत्तिज्ञानं ततः परम्[2] ॥ ९७ ॥ कारणं व्यतिरेकेण पु-

---

१ अत एव "प्रज्ञानमानन्दं ब्रह्म" "अहं ब्रह्मास्मि" "तत्त्वमसि" "अयमात्मा ब्रह्म" इति महावाक्यचतुष्टयम् । "एवं वाक्यान्वयात् ।" इति वेदान्तदर्शनम् । २ "वैराग्यबोधोपरमाः सहायास्ते परस्परम् । प्रायेण सह वर्त्तन्ते वियुज्यन्ते क्वचित् क्वचित् ॥ हेतुस्वरूपकार्य्याणि भिन्नान्येषामसङ्करः । यथावदवगन्तव्यः शास्त्रार्थं प्रविविच्यता ॥ दोषदृष्टिर्जिहासा च पुनर्भोगेष्वदीनता । असाधारणहेत्वाद्या वैराग्यस्य त्रयोऽप्यमी ॥ श्रवणादि त्रयं तद्वत्तत्त्वमित्था विवेचनम् । पुनर्ग्रन्थेरनुदयो बोधस्यैते त्रयो मताः ॥ यमादिर्धीनिरोधश्च व्यवहारस्य संक्षयः । स्युर्हेत्वाद्या उपरतेरित्यसङ्कर ईरितः ॥ तत्वबोधः प्रधानं स्यात्साक्षान्मोक्षप्रदत्वतः । बोधोपकारिणावेतौ वैराग्योपरमावुभौ ॥ त्रयोऽप्यत्यन्तपक्वाश्चेन्महतस्तपसः फलम् । दुरितेन क्वचित्किंचित् कदाचित्प्रतिबध्यते ॥ वैराग्योपरती पूर्णे बोधस्तु प्रतिबध्य तु । यस्य तस्य न मोक्षोऽस्ति पुण्यलोकस्तपोबलात् ॥ पूर्णे बोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा । मोक्षो विनिश्चितः किन्तु दृष्टदुःखं न नश्यति ॥" इति श्रीविद्यारण्यमुनीश्वराः ।

मानादौ विलोकयेत् । अन्वयेन पुनस्तद्धि कार्य्यं नित्यं प्रपश्यं-ति ॥ ९८ ॥ कार्य्ये हि कारणं पश्येत्पश्चात्कार्य्यं विसर्ज्जयेत् । कारणत्वं ततो गच्छेदवशिष्टं भवेन्मुनिः ॥ ९९ ॥

इति श्रीश्रीमधुसूदनसंहितायां वेदांतवर्णनं नाम त्रयोविंशोऽध्यायः ।

---

## चतुर्विंशोऽध्यायः ।

# जीवन्मुक्तलक्षणवर्णनम् ।

देव्युवाच । सर्व्वतत्वस्वरूपाणि व्याख्यातानि जगद्गुरो । न तृप्तिर्जायते श्रुत्वा तव वाचोऽमृतोपमाः ॥ १ ॥ अधुना श्रोतु-मिच्छामि स्थितिं मायाविनिर्गताम् ॥ जीवन्मुक्तिमुपेतानां सा-धूनां सुमहात्मनाम् ॥ २ ॥ स्थितप्रज्ञस्य का भाषा समाधिस्थस्य वल्लभ । स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ३ ॥ श्रीश्रीमधुसूदन उवाच । श्रूयतामधुना देवि कथयामि तवा-ग्रतः । परमं शोभनं शुद्धं जीवन्मुक्तस्य लक्षणम्[3] ॥ ४ ॥ न जा-

---

१ "भावेचोपलब्धेः" । "सत्वाच्चावरस्य ।" इति वेदान्तदर्शनम् । २ "इद-मेव वेदान्तविज्ञानस्य गूढतमं रहस्यम् ।" इति श्रीमत्पूज्यपादशङ्कराचार्य्यभगव-तः । ३ इमानि जीवन्मुक्तलक्षणानि श्रीमन्महाभारतमहारामायणतः संगृहीतानि । अत एव "जीवन्मुक्ता भवन्ति ते ।" "जीवन्मुक्तः स्वरूपः स्यात्" । "जीवन्मुक्तस्थतन्मयः ।" इत्यादि मु० श्रुतिः । "जीवन्मुक्तिविदेहमुक्त्योः" । "जीवन्मुक्त्यादिलाभः" । इत्यादि बी० श्रुतिः । "द्वैतावज्ञा सुस्थिता चेदद्वैता धीः स्थिरा भवेत् । स्थैर्य्ये तस्याः पुमानेष जीवन्मुक्त इतीर्य्यते ॥" इति श्रीविद्यारण्यमुनिः । तथा च "पुरुषस्य कर्तृत्वभोक्तृत्वसु-खदुःखादिलक्षणश्चित्तधर्म्मः क्लेशरूपत्वाद्बन्धो भवति । तन्निरोधं जीवन्मुक्तिः । उपाधिविनि-र्म्मुक्तघटाकाशवत्प्रारब्धक्षयाद्विदेहमुक्तिः । जीवन्मुक्तिविदेहमुक्त्योरष्टोत्तरशतोपनिषदः प्रमा-णम् । कर्तृत्वादिदुःखनिवृत्तिद्वारा नित्यानन्दावाप्तिः प्रयोजनं भवति । तत्पुरुषप्रयत्नसाध्यं भवति । यथा पुत्रकामेष्टिना पुत्रं, वाणिज्यादिना वित्तं, ज्योतिष्टोमेन स्वर्गं, तथा पुरुषप्रय-त्नसाध्यवेदान्तश्रवणादिजनितसमाधिना जीवन्मुक्त्यादिलाभो भवति । सर्व्ववासनाक्षयात्तल्ला-भः ।" इति मुक्तिकश्रुतिः ।

गर्ति न निद्राति नोन्मीलति न मीलति। अहो परदशा कापि वर्त्तते मुक्तचेतसः ॥ ५ ॥ सुषुप्तवदिदं नित्यं पश्यत्यपगतैषणः। असद्रूपमिवासक्तं सर्व्वत्राखिलमात्मवान् ॥ ६ ॥ कैवल्यमिव सम्प्राप्तः परिसुप्तमना इव। घूर्णमान इवानन्दी तिष्ठत्यधिगतात्मदृक् ॥ ७ ॥ सर्व्वत्र दृश्यते स्वस्थः सर्व्वत्र विमलाशयः। समस्तवासनामुक्तो मुक्तः सर्व्वत्र राजते ॥ ८ ॥ नादत्तमप्युपादत्ते गृहीतमपि पाणिना। अन्तर्मुखतयोदात्तरूपया समया धिया ॥ ९ ॥ वाञ्छा न विश्वविलये न द्वेषस्तस्य च स्थितौ। यथा जीविकया तस्माद्धन्य आस्ते यथासुखम् ॥१०॥ यन्त्रपुत्रकसञ्चार इतीमं जनताक्रमम्। अन्तःसँल्लीनया दृष्ट्या पश्यन्हसति शान्तधीः ॥ ११ ॥ नापेक्षते भविष्यञ्च वर्तमाने न तिष्ठति। न संस्मरत्यतीतं हि सर्व्वमेव करोति च ॥ १२ ॥ सुप्तः प्रबुद्धो भवति प्रबुद्धोऽपि च सुप्तवान्। सर्व्वं कर्म्म करोत्यन्तर्न करोति च किञ्च न ॥ १३ ॥ कृतं देहेन कर्म्मेदं न मया शुद्धरूपिणा। इति चिन्ताऽनुरोधी यः कुर्व्वन्नपि करोति न[२] ॥ १४ ॥ अन्तः सर्व्वपरित्यागी नित्यमन्तरनेषणः। कुर्व्वन्नपि बहिः कार्य्यं सममेवाऽवतिष्ठते ॥ १५ ॥ बहिः प्रकृतसर्व्वेहो यथाप्राप्तक्रियोन्मुखः। स्वकर्म्मक्रमसंप्राप्तबन्धुकार्य्यानुवृ-

---

१ अत एव "यदा सर्व्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः। अथ मर्त्योऽमृतो भवत्येतावदनुशासनम्॥" इति श्रुतिः। २ "प्रवृत्तौ वा निवृत्तौ वा देहेन्द्रियमनोधियाम्। न किंचिदपि वैषम्यमस्त्यज्ञानिविबुद्धयोः॥ व्रात्यश्रोत्रिययोर्वेदपाठापाठकृता भिदा। नाहारादावस्ति भेदः सोऽयं न्यायोऽत्र योज्यताम्॥ न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति। उदासीनवदासीन इति ग्रन्थिभिदोच्यते॥ औदासीन्यं विधेयञ्चेद्वच्छब्दव्यर्थता तदा। न शक्ता ह्यस्य देहाद्या इति चेद्रोग एव सः॥ तत्वबोधं क्षयव्याधिं मन्यन्ते ये महाधियः। तेषां प्रज्ञातिविशदा किं तेषां दुःशकं वद॥ भरतादेरप्रवृत्तिः पुराणोक्तेति चेत्तदा। जक्षन् क्रीडन् रतिं विन्दन्नित्यश्रौषीर्न किं श्रुतिम्॥ न ह्याहारादि संत्यज्य भरताद्याः स्थिताः क्वचित्। काष्ठपाषाणवत् किन्तु सङ्गभीता उदासते॥" इति श्रीविद्यारण्यमुनीश्वराः।

त्तिमान् ॥ १६ ॥ निर्व्वासनो निरालम्बः स्वच्छन्दो मुक्तबन्धनः । क्षिप्तः संस्कारवातेन चेष्टते शुष्कपर्णवत् ॥ १७ ॥ समग्रसुखभोगात्मा सर्व्वाशास्विव संस्थितः। करोत्यखिलकर्म्माणि त्यक्तकर्तृत्वविभ्रमः ॥ १८ ॥ न कदाचिज्जगत्यस्मिन्तत्वज्ञो देवि खिद्यते । यत एकेन तेनेदं पूर्णं ब्रह्माण्डमण्डलम् ॥ १९ ॥ उदासीनवदासीनः प्रकृतः क्रमकर्म्मसु । नाऽभिवाञ्छति न द्वेष्टि न शोचति न हृष्यति ॥ २० ॥ शून्या दृष्टिर्वृथा चेष्टा विकलानीन्द्रियाणि च । न स्पृहा न विरक्तिर्वा क्षीणसंसारसागरे ॥२१॥ अनुबन्धपरे जन्तावसंसक्तेन चेतसा । भक्ते भक्तसमाचारः शठे शठ इव स्थितः ॥ २२ ॥ बालो बालेषु वृद्धेषु वृद्धो धीरेषु धैर्य्यवान् । युवा यौवनवृत्तेषु दुःखितेष्वनुदुःखितः ॥ २३ ॥ प्रवृत्तवाक् पुण्यकथो दैन्याद्व्यपगताशयः । धीरधीरुदितानन्दः पेशलः पुण्यकीर्तनः ॥ २४ ॥ प्राज्ञः प्रसन्नमधुरः पूर्णः स्वप्रतिभोदये । निरस्तखेददौर्गत्यः सर्व्वस्मिन् स्निग्धबान्धवः ॥ २५ ॥ जीवः शिवः सर्व्व एव भूतेष्वेवं व्यवस्थितः । एवमेवाऽभिपश्यन्हि जीवन्मुक्तः स उच्यते ॥ २६ ॥ उदारचरिताकारः समः सौम्यसुखोदधिः । सुस्निग्धः शीतलस्पर्शः पूर्णचन्द्र इवोदितः ॥ २७ ॥ न तस्य सुकृतेनाऽर्थो न भोगैर्न च कर्म्मभिः । न दुष्कृतैर्न भोगानां सन्त्यागेन न बन्धुभिः ॥ २८ ॥ न कार्य्यकारणारम्भैर्न निष्कृततया तथा । न बन्धेन न मोक्षेण न पातालेन नो दिवा ॥ २९ ॥ यथा वस्तु यथा दृष्टं जगदेकमयात्मकम् । तदा बन्धविमोक्षाणां न क्वचित्कृपणं मनः ॥ ३० ॥ न

१ "परीत्य भूतानि परीत्य लोकान् परीत्य सर्व्वाः प्रदिशो दिशश्च । उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश" ॥ इति श्रुतिः ॥ २ "अधिक्षिप्तस्ताडितो वा बालेन स्वपिता तदा । न क्लिश्यति न कुप्येच्च बालं प्रत्युतपालयेत् ॥ निन्दितः स्तूयमानो वा विद्वानज्ञैर्न निन्दाति । न स्तौति किन्तु तेषां स्याद्यथाबोधस्तथा चरेत् ॥" इति श्रीमत्पूज्यपादविद्यारण्यमुनीश्वराः ।

जातु विषयाः केऽपि स्वारामं हर्षयन्त्यमी । सल्लकीपल्लवप्रीत-
मिवेभं निम्बपल्लवाः ॥ ३१ ॥ पश्यन् शृण्वन् स्पृशन् जिघ्रन्न-
श्नन् गृह्णन् वदन् व्रजन् । ईहितानीहितैर्मुक्तो मुक्त एव महाशयः
॥ ३२ ॥ सम्यग् ज्ञानाग्निना यस्य दग्धाः सन्देहजालिकाः ।
निश्शङ्कमलमुड्डीनस्तस्य चित्तविहङ्गमः ॥ ३३ ॥ यस्य भ्रान्ति-
विनिर्मुक्तं मनः समरसं स्थितम् । नास्तमेति न चोदेति व्यो-
मवत्सर्व्वदृष्टिषु ॥ ३४ ॥ मञ्जूषायां निषण्णस्य यथा बालस्य
चेष्टितं । अङ्गावल्यनुसन्धानवर्जितं ज्ञानिनस्तथा ॥ ३५ ॥ अयं
सोऽहमयं नाऽहमिति क्षीणा विकल्पनाः । सर्व्वमात्मेति निश्चित्य
तूष्णींभूतस्य योगिनः ॥ ३६ ॥ न विक्षेपो न चैकाग्र्यं नाऽतिबोधो
न मूढता । न सुखं न च वा दुःखमुपशान्तस्य योगिनः
॥ ३७ ॥ घूर्णन् क्षीब इवाऽऽनन्दी मन्दीभूतपुनर्भवः । अनुपा-
देयबुद्ध्या तु न स्मरत्यकृतं कृतम् ॥ ३८ ॥ सर्व्वं सर्व्वप्रकारेण
गृह्णाति च जहाति च । अनुपादेयसर्व्वार्थो बालवत्स विचेष्टते
॥ ३९ ॥ स्वाराज्ये भैक्ष्यवृत्तौ च लाभालाभे जने वने । निर्व्वि-
कल्पस्वभावस्य न विशेषोऽस्ति योगिनः ॥ ४० ॥ स तिष्ठन्नपि
कार्य्येषु देशकालक्रियाक्रमैः । न कार्य्यसुखदुःखाभ्यां मनागपि
हि गृह्यते ॥ ४१ ॥ बहिः प्रकृतसर्व्वार्थोऽप्यन्तः पुनरनीहया ।
न सत्तां योजयत्यर्थे न फलान्यनुधावति ॥ ४२ ॥ नोपेक्षते दुः-
खदशां न सुखाशामपेक्षते । कार्य्योदये नैति मुदं कार्य्यनाशे न
खिद्यते ॥ ४३ ॥ अपि शीतरुचावर्के सुतप्तेऽपीन्दुमण्डले । अ-
प्यधः प्रसरत्यग्नौ विस्मयोऽस्य न जायते ॥ ४४ ॥ चिदात्मन
इमा इत्थं प्रस्फुरन्तीह शक्तयः । इत्यस्याश्चर्य्यजालेषु नाभ्यु-
देति कुतूहलं ॥ ४५ ॥ क्व धर्म्मः क्व च वा कामः क्व चाऽर्थः क्व
विवेकिता । इदं कृतमिदं नेति द्वन्द्वैर्मुक्तस्य योगिनः ॥ ४६ ॥
कृत्यं किमपि नैवाऽस्ति न काऽपि हृदि रञ्जना । तथा जीवन-

मेवेह जीवन्मुक्तस्य योगिनः ॥ ४७ ॥ क्व मोहः क्व च वा विश्वं क्व तद्ध्यानं क्व मुक्तता । सर्व्वसङ्कल्पसीमायां विश्रान्तस्य महात्मनः ॥ ४८ ॥ न दया दैन्यमादत्ते न क्रौर्य्यमनुधावति । न लज्जामनुसन्धत्ते नालज्जत्वं च गच्छति ॥ ४९ ॥ न कदा च न दीनात्मा नोद्धतात्मा कदा च न । न प्रमत्तो न खिन्नात्मा नोद्विग्नो न च हर्षवान् ॥ ५० ॥ नास्य चेतसि सुस्फारे शरदम्बरनिर्म्मले । कोपादयः प्रजायन्ते नभसीव नवाङ्कुराः ॥ ५१ ॥ सानुरागां स्त्रियं दृष्ट्वा मृत्युं वा समुपस्थितम् । अविह्वलमनाः स्वस्थो मुक्त एव महाशयः ॥५२॥ सुखे दुःखे नरे नार्य्यां सम्पत्सु च विपत्सु च । विशेषो नैव धीरस्य सर्व्वत्र समदर्शिनः ॥५३॥ विहरन्नपि संसारे जीवन्मुक्तमना मुनिः । आदिमध्यान्तविरसा विहसेज्जागतीर्गतीः ॥ ५४ ॥ येन विश्वमिदं दृष्टं स नास्तीति करोतु वै । निर्वासनः किं कुरुते पश्यन्नपि न पश्यति ॥ ५५ ॥ येन दृष्टं परं ब्रह्म सोऽहं ब्रह्मेति चिन्तयेत् । किं चिन्तयति निश्चिन्तो द्वितीयं यो न पश्यति॥५६॥दृष्टो येनात्मविक्षेपो विरोधं कुरुते त्वसौ । उदारस्तु न विक्षिप्तः साध्याभावात्करोति किम् ॥ ५७ ॥ न मुक्तो विषयद्वेष्टा न वा विषयलोलुपः । असंसक्तमना नित्यं प्राप्तप्राप्तमुपाश्नुते ॥ ५८ ॥ समाधानासमाधानहिताहितविकल्पनाः । शून्यचित्तो न जानाति कैवल्यमिव संस्थितः ॥ ५९ ॥ सर्व्वप्रकृतकार्य्यस्थो मध्यस्थः सर्व्वदृष्टिषु । ध्येयं तं वासनात्यागमवलम्ब्य व्यवस्थितः ॥ ६० ॥ सर्व्वत्र विगतोद्वेगः सर्व्वार्थपरिपोषकः । विवेकोद्योतदृष्टात्मा प्रबोधोपवनस्थितिः ॥ ६१ ॥ धीरो लोकविपर्य्यस्तो वर्त्तमानोऽपि लोकवत् । न समाधिं न विक्षेपं न लेपं स्वस्य पश्यति ॥ ६२ ॥ भावाभावविहीनोयस्तृप्तो निर्वासनो बुधः । नैव किञ्चित्कृतं तेन लोकदृष्ट्या विकुर्व्वता ॥ ६३ ॥ प्रवृत्तौ वा निवृत्तौ वा नैव धीरस्य दुर्ग्रहः । यदा यत्कर्तुमायाति

तत्कृत्वा तिष्ठतः सुखम् ॥ ६४ ॥ सर्व्वातीतपदालम्बी पूर्णेन्दु-
शिशिराशयः । नोद्वेगी न च तुष्टात्मा संसारे नावसीदति॥६५॥
सर्व्वशत्रुषु मध्यस्थो दयादाक्षिण्यसंयुतः । प्राप्तकर्म्मकरोऽग्र्याणां
संसारे नावसीदति ॥ ६६ ॥ सर्व्वस्याभिमतं वक्ता चोदितः पेश-
लोक्तिमान् । आशयज्ञश्च भूतानां संसारे नाऽवसीदति ॥ ६७ ॥
असंसारस्य तु क्वाऽपि न हर्षो न विषादिता । सशीतलमना
नित्यं विदेह इव राजते ॥ ६८ ॥ युक्तायुक्तदृशा ग्रस्तमाशोपह-
तचेष्टितम् । जानाति लोकदृष्टान्तं करकोटरबिल्ववत् ॥ ६९ ॥
परं पदमुपारूढो भङ्गुरां जागतीं स्थितिम् । अन्तः शीतलया
बुद्ध्या हसन्निव निरीक्षते ॥ ७० ॥ अज्ञप्रबोधान्नैवान्यत्कार्यम-
स्यत्र तद्विदः । कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः । तृ-
प्यन्नेवं स्वमनसा मन्यतेऽसौ निरन्तरम् ॥ ७१ ॥ एवं विद्वान्
कर्म्मणी द्वे हित्वात्मानं स्मरेत्सदा । कृते च कर्म्मणी स्वात्मरू-
पेणैवैष पश्यति ॥ ७२ ॥ प्रजहाति यदा कामान्सर्व्वान्देवि म-
नोगतान् । आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ७३ ॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः
स्थितधीर्मुनिरुच्यते ॥ ७४ ॥ यस्सर्व्वत्रानभिस्नेहस्तत्तत्प्राप्य
शुभाशुभम् । नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता
॥ ७५ ॥ जितचित्ता महात्मानो ये हि दृष्टपरावराः । स्वभाव ईदृ-
शस्तेषां कथितस्तव सुव्रते ॥ ७६ ॥ यथोपश्रयमाणस्य भगवन्तं
विभावसुं । शीतं भयं तमोऽप्येति साधून् संसेवतस्तथा ॥ ७७ ॥
निमज्जोन्मज्जतां घोरे भवाब्धौ परमायणम् । सन्तो ब्रह्मविदः
शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ ७८ ॥ अन्नं हि प्राणिनां प्राण
आर्त्तानां शरणं शिवम् । धर्म्मो वित्तं नृणां प्रेत्य सन्तोर्वाग् वि-

१ "शापानुग्रहसामर्थ्यं यस्यासौ तत्वविद् यदि । न तत् शापादिसामर्थ्यं फलं स्यात् तपसो यतः ॥" इति श्रीमत्पूज्यपादविद्यारण्यमुनीश्वराः ।

भ्यतो रणम् ॥ ७९ ॥ सन्तो दिशन्ति चक्षूँषि बहिरर्कः समुत्थितः । देवता बान्धवाः सन्तः सन्तो ब्रह्मस्वरूपिणः ॥ ८० ॥ विच्छिन्नग्रन्थयस्तज्ज्ञाः साधवः सर्व्वसम्मताः । सर्व्वोपायेन संसेव्यास्ते ह्युपाया भवाम्बुधौ ॥ ८१ ॥

इति श्रीश्रीमधुसूदनसंहितायां जीवन्मुक्तलक्षणवर्णनं नाम चतुर्विंशोऽध्यायः।

## पञ्चविंशोऽध्यायः ।

# आत्मस्वरूपवर्णनम् ।

देव्युवाच । श्रुतस्ते कृपया नाथ कृपामय मयाऽधुना । धर्म्मोपदेशनिचयो निश्चयो वेदवादिनाम् ॥ १ ॥ श्रुत्वा च कृतकृत्याऽहं स्रस्तं हृदयबन्धनम् । संशयो धर्म्मवादेषु नास्त्येव मम कश्चन ॥ २ ॥ अधुना वर्णयन् किञ्चित्स्वरूपं परमात्मनः । एकस्यैवाऽद्वितीयस्य सच्चिदानन्दरूपिणः ॥ ३ ॥ जनयन्परमानन्दं शाधि मां ब्रह्मचिन्तने । यथा लभेय कल्याणं तथा कुरु ममाशिषम् ॥ ४ ॥ श्रीश्रीमधुसूदन उवाच । यदा साधनसम्पन्नः साधकः पूर्णसिद्धिमान् । ब्रह्मसद्भावमभ्येत्य सर्व्वसिद्धेः परं फलम् ॥ ५ ॥ मेघवारीव पतितं जलधौ लयमागतम् । ब्रह्मवारान्निधौ याति विलयं लीनभेदधीः ॥ ६ ॥ तदैव ब्रह्मरूपं स्वमात्मानं

१ त्रयोविंशाध्याये वर्णितं वेदान्तविज्ञानमेव तत्वतो ब्रह्मसद्भावस्वरूपम् । एतत्परमविज्ञानभावविलक्षितो हि महापुरुषो जीवन्मुक्तसंज्ञयाभिधीयते । तस्यैव जीवन्मुक्तस्यालोकसामान्यचरित्रमत्र वर्णितम् । जीवन्मुक्तावस्थायां द्वैतभावो नैव विद्यते । तदाहि जीवन्मुक्तो महात्मा ब्रह्मभावे निमग्नो ब्रह्मकार्यमेव सम्पादयति । महर्षयस्त्रिकालदर्शिनो जगत्पूज्याः सर्वे एतदवस्थापन्ना महापुरुषा आसन् । यावदेव जगतामाध्यात्मिककल्याणसाधनार्थं सत्पुरुषार्थजातं पुरा समनुष्ठीयतेस्म भविष्यच्च काले तदनुष्ठास्यते; तदखिलमेव जीवन्मुक्तयोगिभिः साधितं साध्यते साध्यञ्च नेतरैः ते हि साक्षाद्ब्रह्मरूपिणः, न चास्ति सीमा काचित्तन्माहात्म्यानाम् ।

योगपारगः । समर्थः स्यात्परिज्ञातुं परमानन्दसंस्थितः ॥ ७ ॥ असङ्गोऽहमसङ्गोऽहमसन्देहः पुनः पुनः । सच्चिदानन्दरूपोऽहमहमेवाहमव्ययः ॥ ८ ॥ नित्यशुद्धो विमुक्तोऽहं निराकारोऽहमव्ययः ॥ ९ ॥ नित्योऽहं निरवद्योऽहं निराकारोहमक्षरः । परमानन्दरूपोऽहमहमेवाऽहमव्ययः ॥ १० ॥ शुद्धचैतन्यरूपोऽहमात्मारामोऽहमेव च । अखण्डाऽऽनन्दरूपोऽहमहमेवाऽहमव्ययः ॥ ११ ॥ स्वयं प्रकाशरूपोऽहं चिन्मयोऽहं परोऽस्म्यहम् । अद्वैताऽऽनन्दरूपोऽहमहमेवाऽहमव्ययः ॥ १२ ॥ शाश्वताऽनन्दरूपोऽहं शान्तोऽहं प्रकृतेः परः । प्रत्यक्चैतन्यरूपोऽहमहमेवाऽहमव्ययः ॥ १३ ॥ तत्त्वाऽतीतः परात्माहं मध्यातीतः परः शिवः । मायातीतः परं ज्योतिरहमेवाऽहमव्ययः ॥ १४ ॥ नामरूपव्यतीतोऽहं चिदाकारोऽहमच्युतः । सुखप्रकाशरूपोऽहमहमेवाऽहमव्ययः ॥ १५ ॥ यदज्ञानतो भाति विश्वं समस्तं विनष्टं भवेत्तयदाऽत्मप्रबोधः । मनोवागतीतं विशुद्धं विमुक्तं परं ब्रह्म नित्यं तदेवाऽहमस्मि ॥ १६ ॥ अनन्तं विभुं सर्व्वयोनिं निरीहं शिवं सङ्गहीनं यदोङ्कारगम्यम् । निराकारमत्युज्ज्वलं मृत्युहीनं परं ब्रह्म नित्यं तदेवाऽहमस्मि ॥ १७ ॥ यमग्न्युष्णवन्नित्यबोधस्वरूपं मनश्चक्षुरादीन्यबोधात्मकानि । प्रवर्त्तन्त आश्रित्य निष्कम्पमेकं स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १८ ॥ मुखाभासको दर्पणे दृश्यमानो मुखत्वात्पृथक्त्वेन नैवाऽस्ति वस्तु । चिदाभासको धीषु जीवोऽपि तद्वत्स नित्योपलब्धिस्वरूपोऽहमात्मा ॥१९॥ मनश्चक्षुरादेर्विमुक्तः स्वयं यो मनश्चक्षुरादेर्मनश्चक्षुरादिः । मनश्चक्षुरादेरगम्यस्वरूपः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥२०॥

१ अत एव "स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्जतेऽसितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयात्" ॥ "ब्रह्मैव ब्रह्मविद्भवेत्" ॥ इत्यादि श्रुतिः ॥ "भूतोत्पत्तेः पुरा भूमा त्रिपुटीद्वैतवर्जनात् । ज्ञातृज्ञानज्ञेयरूपा त्रिपुटी प्रलये हि नो ॥" इति श्रीमत्पूज्यपादविद्यारण्यमुनीश्वराः ।

यथाऽनेकचक्षुः प्रकाशो रविर्न क्रमेण प्रकाशीकरोति प्रकाश्यम् ।
अनेकाधियो यस्तथैकः प्रबोधः स नित्योपलब्धिस्वरूपोऽहमात्मा
॥ २१ ॥ माया तत्कार्य्यदेहादिर्मम नाऽस्त्येव सर्व्वदा । स्वप्रका-
शैकरूपोऽहमहमेवाऽहमव्ययः ॥ २२ ॥ गुणत्रयव्यतीतोऽहं ब्र-
ह्मादीनाञ्च साक्ष्यहं । अनन्ताऽऽनन्दरूपोऽहमहमेवाऽहमव्ययः
॥ २३ ॥ अन्तर्य्यामिस्वरूपोऽहं कूटस्थः सर्व्वगोऽस्म्यहम् । पर-
मानन्दरूपोऽहमहमेवाऽहमव्ययः ॥ २४ ॥ द्वन्द्वादिसाक्षिरूपो-
ऽहमचलोऽहं सदोदितः । सर्व्वरूपस्वरूपोऽहमहमेवाऽहमव्ययः
॥ २५ ॥ निष्कलोऽहं निष्क्रियोऽहं सर्व्वात्मा च सनातनः ।
अतोऽक्षयस्वरूपोऽहमहमेवाऽहमव्ययः ॥ २६ ॥ अहं निर्व्वि-
कल्पो निराकाररूपो विभुर्व्यापि सर्व्वत्र सर्व्वेन्द्रियाणाम् । न
वा बन्धनं नैव मुक्तिर्न भीतिश्चिदानन्दरूपः शिवोऽहं शिवोऽहम्
॥ २७ ॥ मत्तो नान्यं किञ्चिदस्तीह विश्वं सत्यं बाह्यं वस्तु मा-
योपक्लृप्तम् । आदर्शान्तर्भासमानस्य तुल्यं मय्यद्वैते भाति त-
स्माच्छिवोऽहम् ॥ २८ ॥ प्रज्ञानघनएवाऽहं विज्ञानघन एव च ।
अकर्ताऽहमभोक्ताऽहमहमेवाऽहमव्ययः ॥ २९ ॥ निराधारस्व-
रूपोऽहं सर्व्वाधारोऽहमेव च । आत्मकामस्वरूपोऽहमहमेवाऽह-
मव्ययः ॥ ३० ॥ तापत्रयवियुक्तोऽहं देहत्रयविलक्षणः । अव-
स्थात्रयसाक्ष्यस्मि अहमेवाऽहमव्ययः ॥ ३१ ॥ अन्तर्ज्योतिर्ब-
हिर्ज्योतिः प्रत्यक्ज्योतिः परात्परः । ज्योतिर्ज्योतिःस्वयंज्यो-
तिरात्मज्योतिः शिवोऽस्म्यहम् ॥ ३२ ॥ अहमेव परं ब्रह्म सच्चि-
दानन्दरूपकम् । अद्वितीयमिति ज्ञात्वा ब्रह्मैव ब्रह्मविद्भवेत्
॥ ३३ ॥ एवं तव हितार्थाय सर्व्वथा पतिवत्सले । सत्यधर्म्मप्र-

१ अध्यात्मिकाधिदैविकाधिभौतिकास्त्रयस्तापाः स्थूलसूक्ष्मकारणभूतास्त्रयोदेहाः जाग्रत्स्व-प्रसुषुप्तयस्तिस्रोऽवस्थाः । २ अत एव "चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः । दर्शयच्चैव प्रत्यक्षानुमाने ।" इत्यादि वेदान्तदर्शनम् । "तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् । तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥" इत्यादिश्रुतिः ।

चाराय मनुजेषु च सुव्रते ॥ ३४ ॥ मयेदं गदितं गूढं धर्म्मतत्त्वं सनातनम् । स्थूलतः सूक्ष्मतश्चैव यथैव श्रुतिचोदितम् ॥ ३५ ॥ मूलधर्म्मात्सदाचारादारभ्य स्थूलतो मया । व्याख्यातं सूक्ष्मतत्वं ते ब्रह्मसद्भावरूपकम् ॥ ३६ ॥ संहिताया य एतस्यास्तात्पर्य्यं वेत्ति सारवत् । संसारवारिधेः पारं स यायाल्लीलया नरः ॥ ३७॥ यस्त्वेतच्छ्रावयेद्विद्वान्नित्यं भक्तिसमन्वितः । सर्व्वजन्मकृतं पापं सर्व्वं सद्यः प्रणश्यति ॥ ३८ ॥ शृणुयाद्यः सकृद्वापि योगाख्यानमिदं नरः । अज्ञानजनितं पापं तत्क्षणादेव नश्यति ॥ ३९ ॥ अनुतिष्ठन्ति ये नित्यं एतज्ज्ञानसमन्वितम् । नित्यकर्म्मचि तान्दृष्ट्वा देवाश्च प्रणमन्ति हि ॥ ४० ॥ तद्धि सर्वोत्तमं ज्ञानं येन संवेत्ति बुद्धिमान् । सूक्ष्मातिसूक्ष्मभावानां स्थूलधर्म्मेण चैकताम् ॥ ४१ ॥ द्रव्येषु हि समस्तेषु भावेषु निखिलेषु च । सर्व्वत्र समदृष्टित्वं तेनैव जायते नृणाम् ॥४२॥ तदेव श्रेष्ठविज्ञानं विख्यातं सार्व्वलौकिकम् । कारणब्रह्मणा कार्य्यब्रह्मणश्चैकता मतिः॥४३॥ समदृष्टिः समाप्नोति स्थैर्य्यं चित्तस्य चोत्तमम् । स्थैर्य्यान्मोक्षपदं ब्रह्माद्वैतभावविधायकम् ॥ ४४ ॥ विज्ञानदृष्ट्या यः पश्येद्धर्म्मभावान्सदाखिलान् । स ज्ञानी पुरुषश्रेष्ठो जीवन्मुक्तो भवेद्ध्रुवम् ॥ ४५ ॥ इदं हि धर्म्मविज्ञानं परमं सार्व्वलौकिकम् । सिद्धान्तोऽयं प्रसिद्धाऽर्थो वेदानामागमस्य च ॥ ४६ ॥ ज्ञानस्यैतस्य लोपाद्धि घोरे चाऽस्मिन्कलौ युगे । सत्यं स्वरूपं धर्म्मस्य न सम्यक् संप्रकाशते ॥ ४७ ॥ कामं प्रीतोऽस्मि ते भद्रे तवैव प्रश्नकर्म्मणा । इदानीं पापबहुले काले लोकशुभावहम् ॥ ४८ ॥

---

१ स्थूलधर्मविज्ञानेन सह सूक्ष्मतमधर्मविज्ञानस्यैकतास्थापनम्, धर्मस्य परमसर्वजनीनताप्रदर्शनम्, कार्यब्रह्मणा कारणब्रह्मण ऐक्यसंपादनेनापवर्गसाधनं चेति वेदसमूहानां गूढं तात्पर्य्यम्, ऋषीणामुपदेशसमूहानां च मुख्यतमं लक्ष्यम् । पूर्वोक्तनिखिलश्रेष्ठविज्ञानावलीनां प्रकटीकरणार्थं लोकानामेतद्विषयकपूर्वाभावदूरीकरणार्थञ्च परमाद्भुतायाः संहितायाः एतस्याः प्रादुर्भावोऽभवत् ॥

सिद्धान्तरूपं वेदानां विज्ञानं सार्व्वलौकिकम् । प्रकाशं प्राप तल्लोके शुद्धं परममद्भुतम् ॥ ४९ ॥ आशिषं ते प्रयच्छामि प्रीतोऽहं तव भक्तितः । सुचिरं पुण्यचारित्र्ये भूयाः कल्याणभागिनी ॥ ५० ॥ धर्म्मे तव प्रवृत्तिश्च सर्व्वथैव दृढा भृशम् । सर्व्वलोकोत्तरा सुभ्रु विस्मयं प्रकरोति मे ॥ ५१ ॥ अतस्ते गर्भे जायेत धार्म्मिको रूपवान्सुतः । ब्रह्मनिष्ठो गुणाधारः सर्व्वलोकहिते रतः ॥ ५२ ॥ यथा श्रीशङ्करस्याऽन्ते जगत्पूज्यस्य धीमतः । आविर्बभूव रक्षार्थं पदव्याः श्रीजगद्गुरोः ॥ ५३ ॥ श्रीमधुसूदनाचार्य्यः साधुपूज्यो महामतिः । सरस्वतीपदाङ्कः श्रीसरस्वत्याश्च वल्लभः ॥ ५४ ॥ तथा तवैव पुण्याद्वै धर्म्मबुद्धेश्च कारणात् । अपूर्व्वं पुत्ररत्नं ते भविष्यत्येव नाचिरात् ॥ ५५ ॥ आचार्य्यपदवीं प्राप्य स पुत्रो बुद्धिमद्वरः । उपदेक्ष्यति लोकानां विज्ञानं परमं महत् ॥ ५६ ॥ कालयोगाद्विलुप्तं वै धर्म्मतत्वं सनातनम् । पुनः प्राप्स्यति विस्तारं तस्य शास्त्रविचारतः ॥ ५७ ॥ तस्य विज्ञानप्रभया प्राचीनं सत्यरूपकम् । प्रकाशं प्राप्नुयाद्भूयो धर्म्मतत्त्वं जगद्धितम् ॥ ५८ ॥ तथा धर्म्मविजिज्ञासुगणैः सर्व्वैरसंशयम् ।

---

१ श्रीमद्वेदोपवेदतदंगतच्छिरोभागताद्विज्ञानोद्बोधकसप्तदर्शनपारावारीण-तदनुष्ठानसुशिक्षितदेवमुनिमानव-चतुर्दशविद्याचतुःषष्टिकलादिसत्प्रमाणजातयावत्स्वरूपाद्यवतारभूभूत-श्रीमदद्वैतसत्सिद्धान्तप्रतिष्ठापनाचार्य्य-श्रीजगद्गुरुपूज्यपादश्रीमच्छङ्करभगवतः सम्प्रदायजलधिजनितहिमरश्मयः—अखिलदिङ्मंडलविधारकसकलविद्वत्सामंतचक्रचूडामणिरत्नाकराः, भावुकजीवन्मुक्तमुनिजनपरमहंसाश्रितकल्पतरुरूपनिजकृपापात्रोद्यानांतःपारिजाताः, पतितपामरजनतोद्धारपरायणाः, श्रीकृष्णप्रेमभक्तिपरिपूर्णस्वाचार्यसत्सिद्धान्तात्मभूतसद्व्याख्यानेन श्रीमद्भगवद्गीताशास्त्रार्थवक्तारः तथाभूतश्रीमद्भागवतोत्तमव्याख्याकाराः श्रीमदद्वैतसिद्धिप्रणयनेन स्वाचार्यसत्सिद्धान्तसमुद्धारकाः,श्रीमद्भगवद्भक्तिरसायनाद्याविर्भावेण विद्याग्रहग्रस्तजगन्नासत्याः, श्रीमन्मधुसूदनसरस्वत्याख्यान्वर्थनामानो, ये चागोपालांगनसुप्रसिद्धा, इदानीं यशःशरीराविर्भावापन्नाः, संति तत्संततिकमलवनहिर्षैकसत्कारणास्तदनुगुणरूपनामानश्चेमे श्रीमन्मधुसूदनमुनयश्चैतत्संहिताप्रतिवक्तारः,समभवन्निति ज्ञेयम् ॥ तथोभावपीमौ समाननामानौ श्रीहर्षसत्कुलभूषणावित्यपि ज्ञेयम् ॥

तस्य धर्म्मविचाराच्च तस्य शास्त्रार्थवाचनात् ॥ ५९ ॥ दृश्येत धर्म्ममार्गो यो दर्शितो मुनिभिः पुरा । त्रिकालदर्शिभिः पूज्यैर्भ्रान्तिशून्यैर्महात्मभिः ॥ ६० ॥ अज्ञानान्धतमोवृते कलियुगे पापैकमुख्याश्रये ज्ञानज्योतिरतीव हारि विमलं सर्व्वत्र विस्तारयन् । सर्व्वप्राणिहितं प्रगुप्तमतुलं धर्म्मैकतत्त्वं परं संसारे परितः प्रकाशममलं संनेष्यते ते सुतः ॥ ६१ ॥ सप्तानां दर्शनानां विविधमतजुषां चक्षुषां वेददृष्टौ साम्यं सम्यक् प्रसाध्यातुलविमलधिया व्याकृतं शुद्धभाष्यैः । योगान्भेदैश्चतुर्धातिगहनरसान्दर्शयन् गूढतत्वं व्याख्यायाऽसौ सुजन्मातिसुगमपथं साधनं साधु कुर्य्यात् ॥ ६२ ॥ मनसि वचसि काये पुण्यशीलो जितात्मा निखिलभुवनलोकान् प्रीणयन् शास्त्रवादैः । जगति तव स पुत्रः सत्यविद्याप्रचारे नियतमतुलकीर्त्तिः कारणं चारु भूयात् ॥ ६३ ॥ व्याख्यानैर्निगमागमान्सुकथनैर्धर्म्मञ्च विस्तारयन्पितॄंश्चैव शुभालयान् जनिभुवः पुण्यालयान् कारयन् । आद्यान्सर्व्वगुणान्वितानृषिजनान् कुर्व्वन् जपैस्संयुतान्पूज्यः पुण्यगुणाकरो जनगणैर्भूयाच्चिरं त्वत्सुतः ॥ ६४ ॥ ईश्वरः सर्वभूतानां हृद्देशे देवि तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६५ ॥ जटिने दंडिने नित्यं लम्बोदरशरीरिणे । कमंडलुनिषंगाय तस्मै ब्रह्मात्मने नमः ॥ ६६ ॥ चन्द्रार्धकृतशीर्षाय व्यालयज्ञोपवीतिने । पिनाकशूलहस्ताय तस्मै उग्रात्मने नमः ॥ ६७ ॥ पञ्चभूतात्मभूताय भूतादिनिधनाय च । अक्रोधद्रोहमोहाय तस्मै शान्तात्मने नमः ॥ ६८ ॥ संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् । बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः ॥ ६९ ॥ युगेष्वावर्तते योगैर्मासर्त्वयनहायनैः । सर्गप्रलययोः कर्त्ता तस्मै

१ "जानामि धर्म्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः । केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥" इति श्रीमत्पूज्यपादभगवान् वेदव्यासः ।

कालात्मने नमः ॥ ७० ॥ परः कालात्परो यज्ञात्परात्परतरो हि यः । अनादिरादिर्विश्वस्य तस्मै विश्वात्मने नमः ॥ ७१ ॥ यो निषण्णो भवेद्रात्रौ दिवा भवति धिष्ठितः । इष्टानिष्टस्य च द्रष्टा तस्मै द्रष्ट्रात्मने नमः ॥ ७२ ॥ अकुंठं सर्वकार्येषु धर्मकार्यार्थिमुद्यतम् । वैकुंठस्य हि तद्रूपं तस्मै कार्यात्मने नमः ॥७३॥ यं विनिद्रा जितश्वासाः शांता दांता जितेन्द्रियाः । ज्योतिः पश्यन्ति युंजानास्तस्मै योगात्मने नमः ॥ ७४ ॥ यस्मात्सर्वाः प्रसूयन्ते सर्गप्रलयविक्रियाः । यस्मिंश्चैव प्रलीयंते तस्मै हेत्वात्मने नमः ॥ ७५ ॥ यं व्यक्तिस्थितमव्यक्तं विचिन्वन्ति महर्षयः । क्षेत्रे क्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः ॥ ७६ ॥ यं पृथग्धर्मचरणाः पृथग्धर्मफलैषिणः । पृथग्धर्मैः समर्चन्ति तस्मै धर्म्मात्मने नमः ॥ ७७ ॥ यश्चिनोति सतां सेतुमृतेनामृतयोनिना । धर्मार्थं व्यवहारार्थं तस्मै सत्यात्मने नमः ॥ ७८ ॥ यं बृहंतं बृहत्युक्थं यमिनो यं महाध्वरे । यं विप्रसंघा गायंति तस्मै वेदात्मने नमः ॥ ७९ ॥ पदांगसंधिपर्वाणं स्वरव्यंजनभूषणम् । यमाहुश्चाक्षरं नित्यं तस्मै वागात्मने नमः ॥ ८० ॥ अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः । शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥ ८१ ॥ ज्ञाता ज्ञानं तथा ज्ञेयं द्रष्टा दर्शनदृश्यभूः । कर्ता हेतुः क्रिया यस्मात्तस्मै ज्ञप्त्यात्मने नमः ॥ ८२ ॥ स्फुरन्ति शीकरा यस्मादानंदस्यांबरेऽवनौ । सर्वेषां जीवनं तस्मै ब्रह्मानन्दात्मने नमः ॥ ८३ ॥ तमेव शरणं गच्छ सर्व्वभावेन सुव्रते । तत्प्रसादात्परां शांन्ति स्थानं प्राप्स्यसि शाश्वतम् ॥ ८४ ॥ इति ते ज्ञानमाख्यात गुह्याद्गुह्यतरं मया । विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ८५ ॥ एवं ते प्रोक्तवान् देवि यावद्वाचा प्रकथ्यते । तथाऽनिर्व्वचनीयाँस्तान् भावान् श्रीपरमात्मनः ॥ ८६ ॥ परं

१ अत एव "अवाङ्मनसगोचरः" । "यतो वाचो निवर्त्तते अप्राप्य मनसा सह ।" इत्यादि श्रुतिः ।

शश्वद्विजानीहि पदं ब्रह्मसनातनम् । न गोचरं वाङ्मनसोः सर्व्वातीतं विलक्षणम् ॥ ८७ ॥ एवमुक्त्वा मुनिश्रेष्ठो योगी श्रीमधुसूदनः । महाभावं प्रपद्याशु समाधौ संन्यविक्षत ॥ ८८ ॥

इति श्रीश्रीमधुसूदनसंहितायां आत्मस्वरूपवर्णनं नाम पञ्चविंशोऽध्यायः

# परिशिष्टम् ।

## ( निगमागमप्रामाण्यनिरूपणम् )

एतस्याः पंचविंशतिसंख्याकैरध्यायैर्विभक्तायाः श्रीश्रीमधुसूदनसंहितायाः परिशिष्टद्वारेण संक्षेपतो निगमागमसिद्धान्तास्तत्प्रामाण्यं च प्रदर्श्यते । तेन च लक्ष्यप्राप्तौ पाठकानां श्रद्धाज्ञानयोः सुगमता भविष्यतीति । त्रयो हि भावा ज्ञातृज्ञेयज्ञानरूपास्ते च त्रिपुटीति कथ्यन्ते । ज्ञेयं त्वेकमेवाद्वितीयं ब्रह्म; तच्च स्वरूपतटस्थेति लक्षणद्वयवेद्यम् । कैश्चिदाचार्य्यैस्तदेव ब्रह्म कारणब्रह्म कार्य्यब्रह्मेति रूपेण वर्णितम् । भवतु तत् ज्ञानद्वारेणैव केवलं ब्रह्म विज्ञायते इति तु निश्चितम् । ज्ञानमयास्तु वेदास्तैरेव तु वेद्यं ब्रह्म भवति । अत एव वेदाः शब्दब्रह्मेति कथ्यन्ते । विद्धातुनिष्पन्नस्य करणधर्मंतस्य वेदशब्दस्य ज्ञानकरणत्वं प्रसिद्धमेव । प्रलयावस्थायां प्रपंचरूपे संसारे लयमापन्नेऽपि कारणरूपतया पूर्णज्ञानप्रकाशकत्वाद्वेदानां नित्यता विज्ञानसिद्धा । दर्शनादिशास्त्राणि च तथैव व्याकुर्वते । अत एव च नित्यत्वम् । समाननामरूपत्वाच्च वृत्तावप्यविरोधो दर्शनात्स्मृतेश्च । इति वेदान्तदर्शनम् । तथा " युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा " ॥ इतिस्मृतिः ।

ननु तत्काले एव वेदाविर्भावः कुतोऽभवत् इदानीं कस्मात् तदाविर्भावो न भवतीति चेन्न । शब्दब्रह्मरूपा वेदाः साक्षात् ब्रह्मणो वाक्यानीति निश्चीयते । अभ्रान्तवेदोक्तविज्ञानानुसारेणादिसृष्टिकालेऽपि संसारसृष्टिः पूर्णशक्तियुक्तैवासीदिति । तत्र च विज्ञानसिद्धं प्रमाणमेवमुल्लिख्यते । आदिसृष्टावेव ब्रह्ममनःसृष्टसनकादिमहात्मनां प्रादुर्भावान्नाग्रे पुनः सृष्टेः किमपि प्रयोजनमासीत् । फलतस्तु तदैव सृष्टेरत्युत्तमावस्थायां विशिष्टज्ञानसंपन्नानामृषीणामंतःकरणेषु पूर्णज्ञानरूपिणां श्रुतिज्योतिषामाविर्भावो विज्ञानसिद्ध एव प्रतिभाति स्म । वेदस्वरूपनिर्णयेच्छूनामृतभावविकलमतीनां सम्भवति शंका संकुचितचित्तानां किं वा प्रामाण्यमपौरुषेयत्वे वेदानां कथं वा स्वीक्रियते भगवज्ज्ञानरूपत्वं वेदविज्ञानस्येति । एवमादि शंकानिरासार्थमित्थमनुकथ्यते । प्रमाणानि त्रिधैव भवन्ति; प्रत्यक्षमनुमानमाप्तवाक्यञ्चेति । तदतिरिक्तप्रमाणानि दर्शनशास्त्रेषु विविधेषूल्लिखितान्येतेष्वेवान्तर्भवन्तीति मन्यते विबुधैः । यथा चैवाप्तप्रमाणादिद्वारेण पूर्वाचार्य्यैः सायनशबरादिभिः कृतमेतादृशीनां शंकानां समाधानं तदत्र संक्षिप्य निर्द्दिश्यते । तत्रादौ पूर्वपक्षो यथा । ननु कोऽयं वेदोनाम ? न हि तत्र लक्षणं प्रमाणं चास्ति, न च तदुभयव्यतिरेकेण किंचिद्वस्तु प्रसिध्यति, लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति न्यायविदां मतं, प्रत्यक्षादिषु अन्तिमो वेद इति तल्लक्षणमिति चेन्मन्वादिस्मृतिष्वतिव्याप्तेः, मंत्रब्राह्मणात्मकः शब्दराशिर्वेद इति चेदद्यापि तदनिर्णयात्, तस्मान्नास्ति तल्लक्षणं नापि तद्भावे प्रमाणं पश्यामः । वाक्यप्रामाण्यं तावन्निर्दोषतया संभवति निर्दोषता च अपौरुषेयतया आप्तिमूलतया च, तत्र वेदस्य प्रमाणत्वे न तावत्प्रत्यक्षं प्रमाणं, तस्य सत्संप्रयोगे पुरुषस्येंद्रियाणां बुद्धिजन्म तत्प्रत्यक्षं अनिमित्तं विद्यमानोपलम्भनात्

इति जैमिनीयचतुर्थसूत्रेणैव धर्म्मप्रत्यक्षप्रामाण्यत्वखण्डनेन तत्प्रतिपादकवेदस्यापि तत्सद्भावे प्रत्यक्षं प्रमाणं न भवितुमर्हतीति । न चाप्यनुमानं, तस्याद्यापिवेदाननुकूलत्वेन यथेष्टं कर्तुं शक्यत्वात् । वेदवाक्यं अप्रमाणं वाक्यत्वात् लौकिकवाक्यवत् इत्यादि । नाप्यागमः स्वान्तःपातित्वेनात्माश्रयत्वप्रसंगात् । न च स्मृतिः तस्यापि श्रुतिमूलत्वेनासाधकत्वात् । सार्वजनीना प्रसिद्धिरपि न नीलनभोवद्भ्रांतत्वात्सर्वस्य । अपौरुषेय इति विशेषणे, तस्यापि सहस्रशीर्षापुरुषनिर्मितत्वं, कर्म्मफलरूपशरीरिनिर्मितत्वाभावेन तत्वमिति चेत् ऋग्वेद एवाग्नेरजायतेति जीवेभ्यः तदुत्पत्तिश्रवणान्नापौरुषेयत्वेन प्रामाण्यम् । प्रत्युत वैयासिकं भारतं इतिवत् काठकं कौथुमं इति शाखाकर्तृत्वेनाख्याततत्रात् । विमतं वेदवाक्यं पौरुषेयं वाक्यत्वात्कालिदासादिवाक्यवत् । इति चानुमानम् नाप्यनादित्वं वेदानां, तत्रार्वाचीनराजकथोपलंभात् । नापि नित्यत्वं तत्प्रतिपाद्यदेवादीनां सृष्टौ अनित्यत्वेन प्रलये चाभावेन वाच्यार्थत्वाभावात् आनर्थक्येन लौकिकवाक्यवत् अनित्यत्वम् । न च सम्यक् अनुभवसाधनत्वेन तथा अनधिगतार्थगन्तृत्वेन वा प्रामाण्यम् । अम्यक्सातइन्द्र इत्यादिमंत्राणां अबोधकत्वेनानुभवस्यैवाभावात् । अधः स्विदासीदित्यादीनां संदिग्धतार्थत्वेनाप्रमाणत्वात् । ओषधे त्रायस्वेत्यादिष्वचेतनानां सम्बोधनं विपरीतार्थकबोधकमिति तदप्रामाण्यमेव । एको रुद्रः सहस्रशो रुद्रा इति च मंत्रा व्याघातबोधका इति तदप्रामाण्यम् । अग्निर्हिमस्य भेषजं इति लोकसिद्धार्थानुवादकत्वात् अनधिगतार्थगन्तृत्वं नास्ति । अभ्रिरसीतिमंत्रेणाभ्यादाने ब्राह्मणेन तां चतुर्भिरभ्रिमादत्ते इति पुनर्विधानात् अन्यतरवैयर्थ्यम् । द्विविधं हि ब्राह्मणं, विधिरर्थवादश्च, विधिरपिद्विविधः अप्रवृत्तप्रवर्तनमज्ञातज्ञापनं चेति, तत्र कर्म्मकाण्डविधयोऽप्रवृत्तप्रवर्तकाः, तेपि अ-

नाहुतिर्वै जर्तिला इति आरण्यतिलगोधूमाहुतिद्रव्यं निषिद्धं सत् तस्यैव जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा जुहुयादिति तद्विधायकत्वेन अप्रामाण्यम् । अज्ञातज्ञापकेषु ब्राह्मणविधिष्वपि, आत्माग्र आसीत् असदग्रआसीत् इति परस्परविरोधादप्रामाण्यम् । अर्थवादानां चानर्थक्यं, उक्तानां वेदलक्षणानां तेष्वभावात् काव्यालापैः समानत्वादप्रमाणम् । मंत्रब्राह्मणयोः स्वरूपस्य निर्णेतुमशक्यत्वाच्च न प्रामाण्यम् । तस्मात् एवमादिपरः सहस्रदोषैराकुलितत्वेन वेदो न प्रमाणं इत्यादि पूर्व्वपक्षः ॥

अस्ति कश्चित् ब्रह्माण्डमण्डले निर्दोषपूर्णगुणविग्रहः जगदीश्वर इवापरो वेदः । येषां नये त्वीश्वरसद्भावे यत्प्रमाणं यच्च तल्लक्षणं तच्छब्दमूर्तिधरस्य भगवतो वेदस्यापि । येषां नये ईश्वर एव न तत्सिद्धान्ते धर्म्मस्वर्गापवर्गादिव्यवस्थाया अभावात्प्रयोजनाभावेन स्वतो व्याहतत्वात् उपेक्ष्य एव सः न च दृष्टं धनादि प्रयोजनं तदभावात् । न च धर्म्माद्यभावबोधनद्वारा लोकोपकारः, परस्पर हिंसादिना अपकारस्यैव प्राप्तेः, न चोपकारः स्वरूपतः प्रयोजनं तेनापि प्रयोजनं वाच्यं, न तावददृष्टं तदनभ्युपगमात् नापि दृष्टं कुवर्त्मना गच्छंतं लौकिकैरनादरणात्, अप्राप्ते शास्त्रमर्थवदिति न्यायात् । सम्यक्ज्ञानचारित्रैश्च प्रयोजनाभावे नाधिकारिणां प्रत्याशाऽभावेन समयाभावात् तथाविधाविशेषदृशं प्रतीश्वरेण वेदेन वा न किमपि क्रियत इति । किं चरेतोधात्वाद्यतींद्रियैः प्रमापकैरनुमानजीवेश्वरागमादृष्टादिसिद्धेर्न नास्तिकवादो युक्तः । ईश्वरसद्भाववादिनामवैदिकानां तत्तत्सत्वेन तावत्प्रत्यक्षं प्रमाणं, तन्मते केवलनिराकारस्येशस्याद्यापि कैरपि तैः प्रत्यक्षीकृतत्वस्य तद्ग्रथेष्वनुपलंभात् । नाप्यनुमानं, तदभावेऽपि यथेष्टं कर्तुं शक्यत्वात्, न च शब्दः, तस्य विवादास्पदत्वात्, न च वैदिकैः यथा शब्देनेशादिसिद्धिः क्रियते तद्वदस्मा-

भिरपि कर्तुं शक्यत इति चेन्न, अवैदिकशब्दानां, किं अपौरुषेयत्वेन नित्यत्वेन वा प्रामाण्यं, उभयथाप्यनभ्युपगमात्। न चाप्तो वक्ता, तदाप्तत्वे चावैदिकसामयिकानां परस्परपक्षपातविद्वेषदर्शनेनानवस्थितेः। न च वैदिकेषु तथा, तेषु वैदिकावान्तरभेदभिन्नत्वेऽपि परस्परं वेदप्रामाण्ये साम्यांगीकारात्। पञ्चविंशत्यध्याय्यामस्यां संहितायाञ्चान्यतरसाधनेषु वेदबाह्येश्वरसद्भाववादिनामप्यन्तर्भावोक्त्या न पक्षपातविद्वेषादयो वैदिकेषु। तस्मात् अवैदिकैः केनापि प्रमाणेनेशादिसिद्धेः कर्तुमशक्यत्वेन मूलशैथिल्यात् श्रद्धाभरमात्रविलसितं तन्मतं नास्माकमीशसिध्यंशे तादृक् विरुद्धम्। वेदस्तु खलु सर्वथा प्रमाणमिति नात्र पक्षपातः किन्तु न्यायविदां समचित्तानां सूक्ष्मदृशां यथार्थानुभवेन तत्प्रामाण्यं सर्वथाभ्युपेतम्। तद्यथा दिग्दर्शनम्।

अयं वेदः अपौरुषेयः सर्वथा नित्यः स्वतःप्रमाणप्रमितः सल्लक्षणलक्षितः सम्यगनुभवसाधनः अनधिगतार्थगन्तेत्यादिगुणकः संशयविपर्य्ययव्याघातानुवादादिदोषविधुर ईश्वरदेवर्षिक्रमादाविर्भूतो धर्म्मार्थकाममोक्षफलप्रदः पूर्व्वसृष्टेरद्यावधि सर्वजनप्रसिद्धः इति विचार्य्यते।

तत्र वेदानां अपौरुषेयत्वमेव। अत एव वेदस्य श्रुतिः अनुश्रवः इति नामद्वयम्। अन्वनु श्रूयत एव ननूत्पादकः स्वोत्पत्तिकालो वास्तीति अन्वर्थं नामद्वयं योगेन रूढ्या च गीर्वाणभाषाकोशादावुपलभ्यते। सृष्टेरादावुपदेशाभावे अग्रिमपुरुषाणां जातिबधिराणां स्थावराणामिव वा तद्व्यवहाराभावेनेदानीमपि तदभावोपलब्धिप्रसंगः स्यात् उपलभ्यते च वेदः। तत्पुस्तके च निर्मातुर्नाम नोपलभ्यते ननु चोक्तंकाठकादिशाखाकर्तृत्वेन तेषां महर्षीणां कर्तृत्वम्। वेदस्य कठादिपुरुषेभ्यः पूर्वत्वं कठादयश्च प्रवचनवन्तः तत्तच्छाखाध्ययनाध्यापनादिसंप्रदायप्रवर्तकाः।

स्मर्य्यते च वैशंपायनः सर्वशाखाध्यायी कठः पुनरिमां केवलां शाखामध्यापयां बभूवेति । स बहुशाखाध्यायिनां सन्निधावेकशाखाध्यायी अन्यां शाखामनधीयानः तस्यां प्रकृष्टत्वादसाधारणमुपपद्यते विशेषणं काठकमिति । अत एव " गोत्रचरणाद्वुञ् " ( ४–३–१२६ ) " चरणाद्धर्म्माम्नाययोः " इति वक्तव्यम् । " आख्याप्रवचनात् " ( ९–१६० ) इत्यादि शास्त्रं इति । एवं मण्डलऋषीणां यानि शतर्च्यादिनामानि तानि चैतरेयके यथा महायोगविद्द्रूढ्या ब्रह्मपराणि तथा तत्रैव द्रष्टव्य।नि। ऋष्येककर्तृत्वे श्रुतिस्मृत्योर्भेदे बीजाभावेनाद्यावधिभिन्नतया महर्षिभिरेव मर्यादाकरणस्य व्यर्थता स्यात् । एकस्य स्वप्रणीतग्रन्थस्य पूर्वं प्रामाण्यं ततोऽवरमपरस्येत्यत्र कारणादर्शनात् । न चोक्तदिशा अन्येषामपि भाषान्तराणां अपौरुषेयत्वमिति भ्रमितव्यम् । कर्तुराख्या देशाख्यानां च प्रसिद्धत्वात् । अस्यास्तु देवभाषा इति लौकिकवाक्यस्यापि प्रसिद्धत्वात् वेदे च कैमुत्यं, तदेव च अपौरुषेयत्वे साधकम् । न च ऋग्वेदोऽग्नेरजायतेति जीवेभ्य उत्पत्तिश्रुतिः । ईश्वरस्याग्न्यादिप्रेरकत्त्वेन तेषां संप्रदायप्रवर्तकतया तद्वाक्यमुपचरितम् । पुरुषसृष्टिवाक्ये च " तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे " इत्यादि पूर्वं तद्दर्शनात् तत्रैव चाग्रे " मुखादिंद्रश्चाग्निश्च " इति अग्नेरप्युत्पत्तिकथनात् । न चापौरुषत्वे चोपष्टंभकमनुमानं, तस्य भूतभविष्यवर्तमानसूक्ष्मव्यवहितविप्रकृष्टादि अदृष्टार्थबोधकत्वरूपोपाधेः,तथा अधिकारिणां चात्युत्कटतपःपापाभ्यां प्रत्यक्षतो वैदिककर्म्मानुष्ठानस्य फलदर्शनेन बाधसिद्धेरपौरुषेयो वेदः। एवं अपौरुषेयत्वेन स्वतःप्रामाण्ये नित्यत्वे च सिद्धे पुनस्तदेव विचार्य्यते । तत्र औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् इति जै-

मिनिसूत्रे शब्दस्य अर्थेन सम्बन्धः औत्पत्तिको नित्यः अपौरुषेयः प्रत्यक्षादिभिरनवगतस्यादृष्टादेरुपदेशो विशिष्टशब्दोच्चारणं अव्यतिरेकश्च ज्ञानस्य न हि तदुत्पन्नं ज्ञानं विपर्य्येति, यथा विज्ञायते तथैव भवति, तस्मात्तत्प्रमाणं, न हि एवं सति प्रत्ययान्तरं पुरुषान्तरं वा अपेक्षितव्यं, बादरायणस्य श्रीकृष्णद्वैपायनस्यापीदं मतमिति सूत्रार्थः । तत्र च "सिद्धे शब्दार्थसम्बन्धे" इति च भगवान् कात्यायनो वार्तिककारः । नित्यपर्य्यायवाची सिद्धशब्दः यत्कूटस्थेष्वविचालिषु भावेषु वर्तते इति पातंजलमहाभाष्यम् । वैदिकोऽपि शब्दो जातिव्यक्तिस्फोटात्मको नित्यः तथा जातिलक्षणोर्थः द्रव्यपक्षेपि सर्वशब्दानां असत्योपाध्यवच्छिन्नब्रह्मणो वाच्यत्वात्प्रवाहरूपेण वार्थो नित्यः। सम्बन्धोपि व्यवहारपरंपरया अनादिरिति सोपि नित्यः । इति तद्वार्तिकार्थनिरूपणाय श्रीमत्पतंजलिभाष्यतट्टीकाकैयटयोः प्रवृत्तत्वान्नित्या वेदाः । न च केनापि पुरुषेण शब्दानामर्थैः सह सम्बन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीता इति वाच्यम् । पुरुषस्य सम्बन्धुरभावात् । कथं सम्बन्धो नास्ति, प्रत्यक्षस्याभावात् चिरवृत्तत्वात् अप्रत्यक्ष इदानींतनानामिति चेत्, न हि चिरवृत्तो न स्मर्येत । न च हिमवदादिषु कूपादिवदस्मरणं, पुरुषवियोगो हि देशकुलोत्सादनेन तेषु । न च शब्दार्थव्यवहारवियोगः पुरुषाणामस्ति, ननुसम्बन्धमात्रव्यवहारिणो निष्प्रयोजनं कर्तृस्मरणं अनाद्रियमाणा विस्मरेयुः। यदि हि पुरुषः कृत्वा संबन्धं व्यवहारयेत् स व्यवहारकाले अवश्यं स्मर्तव्यो भवति । संप्रतिपत्तौ हि कर्तृव्यवहर्त्रोरर्थः सिध्यति न प्रतिपत्तौ न हि वृद्धिशब्देन पाणिनेर्व्यवहारतः आदैचः प्रतीयेरन्नपाणिनिकृतिमननुमन्यमानस्य व । न हि विस्मृते वृद्धिरादैच् सूत्रस्य कर्तरि वृद्धिर्यस्याचामादिरिति किंचित् प्रतीयेत । तेन वेदे व्यवहरद्भि-

रवश्यं स्मरणीयः सम्बन्धस्य कर्त्ता स्यात् व्यवहारस्य च । तस्मात् न कृत्वा सम्बन्धं व्यवहारार्थं केन चिद्वेदाः प्रणीताः। प्रमाणान्तरेण च सम्बन्धारं न प्रतिपद्येमहि । तस्मादपौरुषेयः शब्दस्यार्थेन सम्बन्ध इति च शावरभाष्यम् ! पस्पशान्हिके च महाभाष्ये, शास्त्रपूर्वके प्रयोगे अभ्युदयः तत्तुल्यं वेदशब्देनेति वार्तिके, " शब्दप्रमाणका वयं, यच्छब्द आह तदस्माकं प्रमाणं शब्दश्च शब्दज्ञाने धर्म्ममाह " इत्युक्तम् ।

तत्र यदि वेदा अनित्याः तर्हि जगति प्रामाण्याभाव एव स्यात् न च प्रत्यक्षं, रेतोधात्वादिमोक्षधर्म्मवचनसंगृहीतार्थेषु प्रमापकेषु सर्वविधेन्द्रियसन्निकर्षणामभावात् न च बौद्धं मानसं वा स्वपरिभाषितमेव स्वगोष्ठीषु प्रमाणतया संग्रहितुं युक्तम् । नाप्यनुमानं, तस्य प्रत्यक्षोपजीव्यत्वेन स्वतंत्रतया प्रमापकत्वाभावात् । न च आप्त ईश्वरः तन्निर्मितत्वात् वेदे प्रामाण्यम् । अद्यावधि वैदिकेश्वरस्याभावात् । न चानुमितः सः । तथात्वेपि तस्य सार्वज्ञादौ मानाभावेनाप्य निश्चयात् । ईशसार्वज्ञं कस्य चित् प्रत्यक्षं, प्रमेयत्वादित्यनुमानं मानमिति चेन्न । प्रमेयत्वेन विप्रतिपन्नधर्म्मान्तरसाधनापातात् । न च विप्रतिपन्नं सकर्तृकं कार्य्यत्वात् घटवत् इत्यनुमानेन जगत्कर्तरि सिद्धे तस्य सार्वज्ञादिसिद्धिरिति चेन्न शरीरिजन्यत्वोपाधेः शरीर्य्यजन्यत्वेन सत्प्रतिपक्षत्वाच्च । अस्तु वा सकर्तृकत्वं, कथं सार्वज्ञसिद्धिः बहुकर्तृत्वेनाप्युपपत्तेः । लाघवादेकाङ्गीकार इति चेत् न, बह्वङ्गीकारस्य लोकानुकूल्येनागौरवात् । अतः सार्वज्ञसिद्धिः । अस्तु वा आप्तिनिश्चयः तन्मूलत्वं कुतो वेदस्य । वेदः सार्वज्ञादिमता प्रणीतः वेदत्वात् इति व्यतिरेक्यनुमानादिति चेन्न वेदत्वस्य पामरप्रणीतत्वादौ साम्यात् । वेद आप्तप्रणीतः प्रमाणवाक्यत्वादिति चेन्न वेदानित्यत्वे प्रामाण्यविवादात् । वेदस्याप्तप्रणीतत्वे

मूलप्रमाणेन भाव्यं, पौरुषेयस्य मूलप्रमाणसापेक्षतानियमात्। न च प्रत्यक्षं, अदृष्टादौ तदप्रवेशात्। नाप्यनुमानं प्रतिपक्षादिदुष्टत्वात्। न हि लशुनादने पापं यज्ञेन पुण्यमित्यत्रानुमानसहस्रमपि साधकं स्यात्। अतो वाक्यमेव वक्तव्यं तदपि न पौरुषेयं, मूलान्तरान्वेषणेऽनवस्थानात्। अतस्तन्नित्यमेवापेक्षितम्। तथा च श्रुतिसिद्धमेव वेदनित्यत्वमंगीकार्य्यम्। वाचा विरूपनित्ययेति हि ऋक्। "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवः" इति स्मृतिः। अत एव च नित्यत्वामिति च सूत्रम्। ननु वेदस्य नित्यत्वेपि न प्रामाण्यम्, आप्तोक्तत्वाभावात् इति चेन्न। प्रामाण्यस्य स्वतस्त्वेन गुणानपेक्षणात्। प्रामाण्यं नाम, यथार्थज्ञानकरणत्वम्। न च याथार्थ्यं ज्ञानकारणातिरिक्तकारणमपेक्षते। याथार्थ्यं ज्ञानकारणातिरिक्तकारणनिरपेक्षं अयथार्थतातिरिक्तत्वे सति ज्ञानधर्म्मत्वात् ज्ञानत्ववत्। याथार्थ्यं न गुणोत्पन्नं ज्ञानधर्म्मत्वात् आप्रामाण्यवत् इत्याद्यनुमानात्। यथात्माऽनवस्थित्यादिदोषेभ्यः स्वप्रकाशोभ्युपगंतव्यस्तद्वद्वाक्यमपि स्वतः प्रमाणीभूतमवश्यमंगीकार्य्यम्। तच्च नित्यमपौरुषेयं वेदरूपमेव। त्रिविधा हि जीवाः स्वभावसिद्धाः शब्दप्रामाण्यमंतारः। स्वतःप्रामाण्यं, परतः प्रामाण्यमप्रामाण्यं च, पूर्वं स्वतोऽप्रामाण्यमेव सति प्रामाण्यकारणे प्रामाण्यं चेति निश्चयस्वरूपाः संति॥ तत्र सात्विका वैदिकाः प्राथमिकाः। राजसास्तार्किका द्वितीयाः। तामसा नास्तिकास्तृतीया इति। ननु चोक्तं वेदानां नित्यत्वेऽर्वाचीनराजकथानामनित्यदेवानां वाच्यार्थानां सद्भाव इति, नित्यस्य स्वतंत्रस्य वेदस्य न विषयसिद्ध्यधीना स्वप्रवृत्तिः किं तु स्वप्रवृत्त्यधीना विषयसिद्धिः, यत ईश्वर एव वेदं दृष्ट्वा तेभ्योऽखिलं जगन्निर्म्ममे। भूतकालादिनिर्देशस्तु त्रैकालिकसर्वज्ञदृष्ट्या सर्वेषामेव जातप्रायत्वादुपपद्यते। अनेकेषां चेंद्रा-

दिदेवानां स्वस्वविद्याकर्मभ्यां स्वस्वपदप्राप्त्या न कदाचिदपि देवपदानामभावः । प्रलये च वेदसमन्वयाध्यायदिशा ब्रह्मवाचकत्वादप्राकृतेषु लोकेषु मुक्तदेवानां विद्यमानत्वाद्वा न कदाचिदपि वेदस्य स्वार्थराहित्येनानित्यत्वम् । ननु लौकिकानामपि शब्दानां वेदानुसारिनयेषु नित्यत्वमभ्युपगम्यत इति कथं वैदिकानां व्यावृत्तिरिति चेत्, स्वरवर्णपदवाक्यार्थानां क्रमस्य प्रयोक्त्रिच्छाधीनत्वाभावेन महाभेदस्य विद्यमानत्वात् । ननु तस्य वेदस्य लक्षणलक्षितत्वाभावात् अप्रामाण्यमिति चेन्न, अर्च्यते प्रशस्यते इति ऋक् । यजुर्यजतेः । मंत्रा मननात् । छंदांसि छादनात् । स्तोमः स्तवनात् । साम सांत्वनात् अथर्वा अरणात् । ब्राह्मणं बृंहणात् । उप ब्रह्मसमीपे नितरां सीदतीत्युपनिषद् । एवमादि व्युत्पत्तिदर्शनात् । मंत्रब्राह्मणात्मकं वेदस्य लक्षणम् । न च तयोः स्वरूपानिर्णय इति वाच्यम् । जैमिनीयधर्मजिज्ञासाद्वितीयाध्यायस्य प्रथमे पादे सप्तमाष्टमाभ्यामधिकरणाभ्यां निर्णीतत्वात् । तन्निष्कर्षश्च यथा—" याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् । तेनुष्ठानस्मारकादौ मंत्रशब्दं प्रयुञ्जते "। तथा च याज्ञिकसमाख्यातत्वं, अनुष्ठानस्मारकत्वं, स्तुतिरूपत्वं, त्वांतत्वं, आमंत्रणोपेतत्वं,। प्रैषरूपत्वं, विचाररूपत्वं, परिदेवनरूपत्वं, प्रश्नोत्तररूपत्वादिकत्वं च येषु ते मंत्रा इति मंत्रलक्षणम् । पादेनार्धर्चेन चोपेता वृत्तबद्धा मंत्रा ऋचः । गीतरूपा मंत्राः सामानि । वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मंत्रा यजूंषीत्युक्ते न क्वापि लक्षणसंकरः । तदेवं त्रैविध्यं जैमिनिना सूत्रत्रयेण लक्षितम् " तेषामृङ्मंत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुःशब्दः " इति । एतमेव मंत्रावान्तरविशेषमुपजीव्य वेदानामृग्वेदो यजुर्वेदः सामवेद इति त्रैविध्यंसम्पन्नम् । लक्षणोपयोगः पूर्वाचार्य्यैर्दर्शितः । " ऋषयोऽपि पदार्थानां नान्तं

यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ” इति । तस्मादभियुक्तानां मंत्रोऽयमिति समाख्यानं मंत्रलक्षणम् । ब्राह्मणलक्षणं च । “ मंत्रावशिष्टवेदभागो ब्राह्मणं ” इति तल्लक्षणम्, स च “ हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः । परक्रिया पुराकल्पो व्यवधारणकल्पनात् ” इति बहुविधम् । तैत्तिरीयारण्यकेद्वितीयाध्याये, “ यद्ब्राह्मणानीतिहासपुराणानि कल्पान्गाथा नाराशंसीः ” इति संगृहीतानां विप्रपरिव्राजकन्यायेन ब्राह्मणाद्यवान्तरभेदानामेवेतिहासादीनां पृथगभिधानम् । वेदोपनिषदाश्च मंत्रेतराणां ब्राह्मणेष्वेवान्तर्भावात् मंत्रब्राह्मणव्यतिरिक्तवेदभागानामभावात् सुस्थं उभयात्मकं वेदस्येति, भगवान् आपस्तम्बो यज्ञपरिभाषायां “मंत्रब्राह्मणयोर्वेदनामधेयम् ” इति सूत्रयतिस्म । किं च सम्यगनुभवसाधन एव वेदः । यदुक्तं अम्यक्सात इन्द्र इत्यादीनां अनुभव एव नेति तन्निरुक्तग्रन्थपरिचयरहितानामेव दोषमावहति न मंत्राणाम् । नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवतीति न कदाचित् कुत्रापि केनापि वेदे अननुभवसाधनत्वं कर्तुं शक्यम् । उपनिषदां च अनधिगतपरब्रह्मार्थाधिगन्तृत्वं आगोपालांगनप्रसिद्धम् । अधःस्विदासीदित्यादीनां न संदेहाय प्रवृत्तिः, किं तर्हि जगत्कारणस्य परवस्तुनोतिगभीरत्वं निश्चेतुं, तदर्थमेव हि गुरुशास्त्रसंप्रदायरहितेषु दुर्बोधत्वमधःस्विदित्यनया वचो भङ्ग्योपन्यस्तम् । स एवाभिप्राय उपरितनेषु को अद्धा वेदेत्यादिमंत्रेषु स्पष्टीकृतः । ओषध्यादिमंत्रेष्वपि चेतना एव तत्तदभिमानिदेवतास्तेन तेन नाम्ना सम्बोध्यंते, ताश्च देवता भगवता बादरायणेनाभिमानिव्यपदेशस्त्विति सूत्रेण सूत्रिताः । एकस्यापि रुद्रस्य स्वमहिम्ना सहस्रमूर्तिस्वीकारात् “ अजायमानो बहुधा विजायते” इति श्रुतेर्नास्ति परस्परं व्याघातः । असदि-

ति चेन्न प्रतिषेधमात्रत्वादिति चोत्तरमीमांसासूत्रेणात्माग्रे असदग्रे- इति श्रुत्योर्विषयव्यवस्थायाः स्वयमेवोक्तत्वात्तदनभिज्ञस्य तादृशशंकोत्थितिः । उक्तश्च तदधिकरणार्थोऽस्यां संहितायां ज्ञानयोगाध्यायटिप्पण्याम् । एवमन्येषां शंकाभासानां निराकरणं ऋग्भाष्यपीठिकायां श्रीसायनाचार्यैः कृतमिति सर्वं तत्तत एव द्रष्टव्यम् । विस्तरभयान्नात्र प्रपंच्यते । अर्थवादानां विधिशेषत्वेन तदेकवाक्यतया सार्थक्यमिति सविस्तरं जैमिनिधर्म्ममीमांसाप्रथमाध्याये द्वीतीयपादे प्रपंचितमिति नानर्थक्यं तेषाम् ॥ अस्य वेदस्य मूलं बीजं प्रणवः तस्य च द्रष्टृब्रह्मेति वैदिकाः । तच्च ब्रह्म न प्राकृतपुरुषाद्याकारविशिष्टमंगीक्रियते वैदिकैः । ततश्च सर्वविशेषशून्यसर्वविशेषाधिष्ठानतया सर्वविशेषप्रत्यायकस्य ब्रह्मणो वेदमूलप्रणवशब्दस्वरूपत्वम् । तच्च सर्वव्यापकं शब्दब्रह्म स्फोटात्मकं स्वरवर्णपदवाक्यमहावाक्यादिशब्दप्रपंचस्य विवर्ताधिष्ठानरूपतया क्रमशः स्वव्यापकत्वाव्ययत्वादिपारमार्थिकीं सत्तामनपहायैव सर्वदा वर्तते । प्रणवे च यथा व्याहृतिगायत्र्यादिसर्ववेदसृष्टिस्तथा वैदिकग्रन्थेषु समुपलभ्यत इत्येवं आत्मस्वरूपे ब्रह्मणि वेदस्थितिः । तत्तु समन्वयात् इति च सूत्रम् । ततश्च तस्य ब्रह्मणः स्वस्वरूपानतिरिक्तमायाख्यशुद्धसत्वान्तः प्रतिबिम्बितस्य ईशशब्दवाच्यस्य सहस्रशीर्षपुरुषस्य सर्वजगन्मूलभूतस्य निश्वासगतशब्दात्मका वेदाः किंचिन्नित्यस्वरवर्णादिसमुद्भूतविशेषविशिष्टास्तिष्ठन्तीति जगद्बीजपुरुषे वेदस्थितिः । शास्त्रयोनित्वादितिच सूत्रम् । ततश्च कार्य्यब्रह्म स्वयंभूहृदि परमपुरुषेण कृतो वेदाविर्भावः । ततश्चतुर्मुखतः शब्दराशिवेदानां सर्वेषां प्रादुर्भावः । "यो ब्रह्मणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति च श्रुतिरिति । ततस्तपोबललब्धप्रकाशमयहृदयेषु महर्षिषु चाविर्भाव इति । श्रूयते च तैत्तिरीयब्राह्मणे, इन्द्रेण

तपःप्रसन्नेन भरद्वाजाय महर्षये ऋगादिवेदेभ्यस्तेजोराशिमयेभ्योऽनंतेभ्यः कृपया दर्शितेभ्यः प्रतिवेदं मुष्टिमात्रवेददानम् । एवं ऐतरेयब्राह्मणाख्यायिका । एवमेव च तैत्तिरीयवाजसनेयिशाखयोराख्यायिका वैदिकानुसारिग्रन्थेषु समुपलभ्यंते । तथा च ऋषयोन्तःप्रकाशा इति श्रुतेस्तदन्तःप्रकाशमयहृदयेषु वेदप्रादुर्भावः । तदुक्तं श्रीमद्भागवतैकादशस्कंधे चतुर्दशाध्याये उद्धवं प्रति भगवद्वाक्यं । " कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता । मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥ तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा । ततो भृग्वादयोऽगृह्णन्सप्त ब्रह्ममहर्षयः ॥ तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः । मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः ॥ किंदेवाः किन्नरा नागा रक्षःकिंपुरुषादयः । बह्वयस्तेषां प्रकृतयो रजःसत्वतमो भुवः ॥ याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा ॥ यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ॥ एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम् । पारंपर्येण केषां चित्पाखण्डमतयोऽपरे ॥ मन्मायामोहितधियः पुरुषाः पुरुषर्षभ । श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि " इति ॥ एवं, वेदस्य निर्दोषत्वे, पूर्णगुणकत्वे च, स्वयं वेदः, तदंगानि षट्, सप्त दर्शनानि, पुराणेतिहासादीनि च, उपक्रमादितात्पर्य्यग्राहकपरःसहस्रनयैः सन्नद्धानि, प्रकाशमानानि, सन्ति, तानि चिरकालेन वैदिकनियमानुसारेण श्रीमत्सद्गुरुतः संप्रदायानुभवोन्मुखानि यदा भवन्ति, तदैवास्तिकहृदये शब्दब्रह्मपरब्रह्मणोः क्रमेण प्रादुर्भावो भवतीति । " वेदोऽखिलो धर्म्ममूलं " इति मनुः " धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते" इति भारतसावित्री, " कर्मणा ज्ञानमातनोति ज्ञानेनामृती भवति धर्म्मार्थकाममोक्षं च विंदति " इत्यादि श्रुतिस्मृतिभ्यो वेदा-

१ तिरोधानं गता ।

देव पुरुषार्थचतुष्टयसिद्धिः । पूर्वसृष्टेरद्यावधि आर्य्यजनास्तु वेदस्य प्रामाण्यमंगीकुर्वंतीति तेषु च तत्प्रसिद्धिरस्त्येव । परं च येऽपि सर्वेऽनार्य्यावैदिकजातिमंतस्तेषु च तत्तद्ग्रन्थेषु वेदस्य प्राचीनतमत्वमंगीकुर्वंतीति सर्वजनप्रसिद्धो वेदः ।

उन्नतपदमारूढा विचारशीला अपि जनाः प्रायशो भवन्ति शब्दानुशासनस्यैवाधिकारिणः, बुद्धिश्च तेषां पूर्णतामप्राप्य बाहुल्येनाप्तप्रमाणस्यैवानुशासनाधीनतया परिवर्त्तते। अत एवाप्तप्रमाणानामपि बाहुल्येनावलम्ब्य वेदानां प्रामाण्यं सिद्धतया प्रदर्श्यते।सत्प्रमेयस्य तु सर्व्वप्रमाणगम्यत्वाद्वेदानामपि प्रामाण्यं स्वत एव प्रत्यक्षानुमानरूपप्रमाणान्तरद्वयसिद्धमिति चास्ति निश्चयः। अनुमानबलेन सुखसाध्येऽपि वेदप्रामाण्ये पूर्णतामापन्नायामेव बुद्धौ तज्जिज्ञासूनामुपजायते शक्तिस्तादृगनुमानव्यापारकरणे । पूर्णतासंपादनार्थं च बुद्धेः सम्यगालोचनीयाः शास्त्रविषया बहवो हि भवन्ति । तत्र क्रियाविज्ञानरूपं कल्पशास्त्रम्, कालविज्ञानात्मकं ज्योतिस्तत्वम् स्वरादिविज्ञानप्रकाशकं शिक्षाशास्त्रम्, छन्दोज्ञानप्रदं छन्दःशास्त्रम्, शब्दविज्ञानपूर्णं व्याकरणशास्त्रम्, भगद्भावरहस्यविज्ञानरूपं वेदार्थबोधकं निरुक्तशास्त्रञ्च सम्यगध्ययनादिभिरवगन्तव्यम् । ततश्च सप्तविधज्ञानरहस्यविज्ञानात्मकानामाध्यात्मिकतत्तद्दर्शनसंपादकानां ज्ञानचक्षूरूपिणां दर्शनशास्त्राणां सप्तविधानां प्रकृतरहस्यसमालोचनेन गूढतत्वमवबोद्धव्यम् । तेनैव वेदार्थरहस्याधिगमो नान्यथेति । साधनचतुष्टयसंपन्ना एव जिज्ञासवो ब्रह्मजिज्ञासायामधिकारिणो भवन्ति नान्ये इति सिद्धतया प्रदर्शितं दर्शनशास्त्रेषु । लौकिकबुद्धिबलेन भगवद्भावानुमानस्य संभवाभावात् । यदैव पूर्व्वोक्तषडंगादिसर्वविज्ञानसमालोचनेन सप्तदर्शनरहस्यावगमेन च पूर्णज्ञानवतामभ्युदेति का चिदलौकिकी विचारशक्तिस्तदैव तादृगधि-

कारिणोऽनुमानबलेन वैदिकरहस्यमखिलं प्रभवन्ति समवगन्तुम्। अलौकिकयोगबलेन समाधिद्वारेणैवेश्वरसाक्षात्कारः संभवतीति सम्यक् प्रदर्शितं योगसांख्यवेदान्तादिदर्शनविचारप्रस्तावेषु। एवञ्चेश्वरसाक्षात्कारो यथासमाधिरूपं कमपि पुरुषार्थमलौकिकमपेक्षते, तथैवेश्वरवाक्यरूपं वेदरहस्यमपि तदेवासाधारणं समाधिबलं समपेक्षते येनैव हि तस्यावगमः संभवति। एवञ्च समाधिक्रियाधिकारिणां सिद्धयोगिनामेव मनस्यनन्तवेदानामपौरुषेयत्वं प्रत्यक्षसिद्धवत् प्रतिभाति॥ फलतस्त्वधिकारभेदानुसारेण वैदिकरहस्यमखिलं स्वतन्त्ररूपेण प्रमाणत्रयसाध्यमित्यत्र नास्ति कश्चित् संशयः। श्रीभगवतः स्वरूपत्रयस्याध्यात्मिकाधिदैवाधिभूतस्य यथार्थद्रष्टा योगिश्रेष्ठ एव कीदृगभ्रान्तविज्ञानपूर्णं शब्दब्रह्मरूपं वेदरहस्यं भवतीति शक्नोति समवगन्तुम्। स्वरूपब्रह्मणः शब्दब्रह्मणश्च परस्परं कार्य्यकारणसम्बन्धेन संबद्धत्वात्। श्रुतिषु च सर्वत्रैव परिदृश्यते विकाशः पूर्वोक्तस्वरूपभावत्रयस्य। श्रुतीनां माहात्म्यस्यालौकिकत्वस्य चैतदेव गूढतमं रहस्यं, यत्प्रतिश्रुतेरेव स्वतन्त्ररूपतया भावत्रयात्मकं त्रिविधमेव स्वरूपं प्रतिपद्यते। ब्रह्मस्वरूपस्यादिरहितस्यानन्तत्वाज्ज्ञानमप्यनन्तमेव भवति। एवञ्च ज्ञानमया वेदा अनन्ता इति स्वतःसिद्धमेव। तथापि कल्पेऽस्मिन् यावत्संख्याका एव वेदाः प्राकट्यमायाताः श्रीवेदव्यासेनोद्धृतास्तएवात्र समुल्लिख्यन्ते, तदुक्तं स्कान्दे। "अवतीर्णो महायोगी सत्यवत्यां पराशरात्। उत्सन्नान्भगवान्वेदानुज्जहार हरिः स्वयम्॥ ऋचः सऋचमुद्धृत्य ऋग्वेदं कृतवान्प्रभुः। यजूंषि निगदाच्चैव तथा सामानि सामतः॥ चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः। शतधा चैकधा चैव तथैवच सहस्रधा॥ कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये। चकार ब्रह्मसूत्राणि येषां सूत्रत्वमंजसा॥ चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्प-

मेधसः । एवं च संकलनया ११३७ वेदानां शाखाः तत्र क्वचित्सूतसंहितादिवचनेषु तथा पातंजलमहाभाष्ये च ऋचः शाखाः ( २१ ) एकविंशतिसंख्याकाः, अथर्वणवेदस्य नव शाखा इति मतभेदो दृश्यते वचनानि तु संहितायामस्यां ज्ञानयोगाध्याये समुपन्यस्तानि टिप्पण्याम् । एवं "ऋग्वेदस्य तु शाखाः स्युरेकविंशतिसंख्यकाः । नवाधिकशतं शाखा यजुषो मरुतात्मज । सहस्रसंख्यया जाताः शाखाः साम्नः परंतप । अथर्वस्य च शाखाः स्युः पंचाशद्भेदतो हरे ।" इति मुक्तिकोपनिषच्छ्रुतौ । तथा च "सर्वेषां चैव वेदानां शाखाभेदस्त्वशक्तिज" इति स्मृतेर्वास्तविकशाखाभेदस्य तादृग्विवक्षितत्वाभावादंतर्भावविभागाभ्यां महर्षिवचसां न कोऽपि विरोधः तत्र मंत्रब्राह्मणयोर्वेदनामधेयमित्युक्तलक्षणाद्यावंत्यो वेदसंहितास्तावंत एव ब्राह्मणभागा इति बोध्यम् । ब्राह्मणमपि त्रिविधं विधिरूपमर्थवादरूपं तदुभयविलक्षणं च । तत्र शब्दभावनालिंगादिप्रयोगो विधिरिति प्राभाकराः इष्टसाधनताविधिरिति तार्किकादयः । सर्व्वोपि विधिश्चतुर्विधः । उत्पत्त्यधिकारविनियोगप्रयोगभेदात् । प्राशस्त्यनिंदान्यतरलक्षणं, यद्विधिशेषभूतं वाक्यमर्थवादः । स च त्रिविधोः गुणवादोनुवादोभूतार्थवादश्चेति । विध्यर्थवादोभयविलक्षं तु वेदांतवाक्यम् । तच्चाज्ञातज्ञापकत्वेप्यनुष्ठानाप्रतिपादकत्वान्न विधि । स्वतः पुरुषार्थं परमानंदज्ञानात्मकब्रह्मणि स्वार्थे उपक्रमोपसंहारादिषड्विधतात्पर्य्यलिंगवत्तया स्वतः प्रमाणभूतं सर्वानपि विधीनंतःकरणविशुद्धिद्वारा स्वशेषतामापाद्य अन्यशेषत्वाभावाच्च नार्थवादः । एवं "एकैकस्यास्तु शाखाया एकैकोपनिषन्मता । तासामेकमृचं येन पठ्यते भक्तितो मयि ॥ स मत्सायुज्यपदवीं प्राप्नोति मुनिदुर्लभाम् ।" इति च मुक्तिकोपनिषद् । उपनिषदां बहुत्वं बोध्यं कर्म्मकाण्डे व्यापारभेदेपि सर्वासां वेदशाखाना-

मेकरूपत्वमेव ब्रह्मकाण्ड इति गतिसामान्यादितिसूत्रे स्पष्टम् । चतुर्णां वेदानां प्रयोजनभेदेन भेदो यथा । तत्र च वेदा हि यज्ञार्थमभिप्रवृत्ता इत्यङ्गवाक्याद्यज्ञियहोतृप्रयोग ऋग्वेदेन, अध्वर्युप्रयोगो यजुर्वेदेन, उद्गातृप्रयोगः सामवेदेन, ब्रह्मयजमानप्रयोगौ तत्रैवांतर्भूतौ, अथर्ववेदस्तु शांतिकपौष्टिकाभिचारिकादियज्ञकर्म्मदेवतोपासनारहस्यज्ञानप्रतिपादकत्वेनात्यंतविलक्षण ऋगनुकारी ।

अथ वेदचतुष्टयस्य क्रमेण चत्वार उपवेदाः । आयुर्वेदो धनुर्वेदो गांधर्ववेदः स्थापत्यवेद इति । तत्रायुर्वेदस्याष्टौ स्थानानि भवन्ति सूत्रं शारिरमैंद्रियं चिकित्सा निदानं विमानं विकल्पः सिद्धिश्चेति । ब्रह्मदक्षप्रजापत्यश्विनीकुमारधन्वंतरींद्रभरद्वाजात्रिजमदग्निविश्वामित्रादिभिरुपादिष्टश्चरकेण संक्षिप्तः । तत्रैव सुश्रुतेन पंचस्थानात्मकं प्रस्थानान्तरं कृतम् । एवं वाग्भटादिभिरपि बहुविशेषः कृतस्तेन शास्त्रभेदः । वात्स्यायनेन पंचाध्यायात्मकं कामशास्त्रं प्रणीतं तच्चायुर्वेदान्तर्भावमर्हति तत्रैव सुश्रुतेन वाजीकरणाख्यकामशास्त्राभिधानात् । तस्य च विषयवैराग्यमेव प्रयोजनं, शास्त्रोद्दीपितविषयभोगे दुःखमात्रपर्य्यवसानात् । एवं धनुर्वेदः पादचतुष्टयात्मकः श्रीविश्वामित्रपरशुरामादिभ्यः प्रादुर्भूतः तत्र प्रथमो दीक्षा द्वितीयः संग्रहस्तृतीयः सिद्धिः चतुर्थः प्रयोगपाद इति । तत्र प्रथमे आयुधाधिकारिणो निर्णयः । द्वितीये गुरुसम्प्रदायसिद्धानामस्त्रशस्त्राणामभ्यासमंत्रदेवतासिद्धिनिरूपणम् । तृतीयेऽस्त्रप्रयोगः । चतुर्थे क्षत्रियाणां स्वधर्म्मयुद्धं प्रजापालनमित्यादि निरूपितम् । गांधर्व्ववेदश्च श्रीसदाशिवादिभ्यः प्रादुर्भूतः । उक्तं च संगीतरत्नाकरे । " सदाशिवः शिवो ब्रह्मा भरतः कश्यपो मुनिः । मतंगः पार्ष्णिगो दुर्गा शक्तिः शार्दूलकोहलौ ॥ विशाखिलो दन्तिलश्च कंबलोऽश्वतरस्तथा । वा-

युर्विश्वावसू रंभाऽर्जुनो नारदतुंबरू । आंजनेयो मातृगुप्तो वारुणो नन्दिकेश्वरः । स्वातिर्गणो देवराजः क्षेत्रराजश्च राहलः । दुर्जयो नाम भूपालो हाहाहूहूश्च रावणः । परमन्दी च सोमेशो जगदेकमहीपतिः । व्याख्यातारो भारतीये लोल्लटोद्भटशंकुकाः । भद्राभिनवगुप्तश्च श्रीमत्कीर्तिधरोऽपरः । अन्ये च बहवः पूर्वे ये संगीतविशारदाः ।" तत्र " मार्गदेशीयभेदेन द्विधा संगीतमुच्यते । द्वेधा मार्गाख्यसंगीतं भरतायाब्रवीत्स्वयम् । ब्रह्मणोऽधीत्य भरतः संगीतं मार्गसंज्ञि तत् । अप्सरोभिश्च गन्धर्वैः शम्भोरग्रे प्रयुक्तवान् ।" इति श्रीमतंगः । एवं च मार्गनाम्नि संगीते रागरागिणीनां षोडशसहस्रसंख्याकानां षट्त्रिंशदधिकत्रिशतैस्तालैर्गानमिति गांधर्ववेदस्य कियान्विस्तार इति कः संख्यातुं समर्थः। तस्य च देवताराधननिर्विकल्पकसमाध्यादिसिद्धिश्च परमं प्रयोजनम् । स्थापत्यवेदान्तर्गतमर्थशास्त्रं बहुविधं नीतिशास्त्रमश्वशास्त्रं गजशास्त्रं शिल्पशास्त्रं सूपकारशास्त्रं चतुःषष्टिकलाशास्त्रं चेति विश्वकर्म्मादिभिस्तथा नाना मुनिभिः प्रणीतं तस्य च सर्वस्य लोकस्य लौकिकालौकिकतत्प्रयोजनभेदाद् भेदो द्रष्टव्यः। एवमुपवेदा निरूपिताः । तत्र वेदेषु ज्ञानविज्ञानयोर्द्वयोरेव सुमहान् विस्तारः परिदृश्यते । स्थूलदृशैव यदा ज्ञानावगम्यं स्थूलजगदेवानन्तरूपतया प्रतिभाति तदा कारणरूपस्याऽध्यात्मजगत आनन्त्यानुभवो मनसि कीदृग् विस्मयमुत्पादयति तद्धीरपुरुषैरनुमेयम् । फलतस्तु तादृशानन्त्यवर्णनकारिणो वेदा नियतमनन्ता एवेति कः संदेहः । श्रुतिश्च कथयति " अनन्ता वै वेदाः" इति । यदा वेदा एवानन्तास्तदा वेदसंमतानां शास्त्रान्तराणां संख्यानमसंभवमेव भवति ।

प्राचीनकाले वेदषडंगानां स्वाध्यायप्रवचनसंप्रदायः पूर्णरूपेणासीत्। इदानीं वेदोक्तकर्मक्रमसूचकानां हस्तस्थानीयानां प्रति-

शाखं विभक्तानां कल्पसूत्राणां तिरोहितप्रायत्वाद् वैदिकसत्कर्मणामभाव एव जातः । एवं वैदिककर्मांगकालज्ञानाय ज्योतिषं तदपि "सूर्यः पितामहो व्यासवशिष्ठात्रिपराशराः । कश्यपो नारदो गर्गो मरीचिर्मनुरंगिराः ॥ लोमशः पैलिशश्चैव च्यवनो यवनो गुरुः ॥ शौनकोऽष्टादशाश्चैव ज्योतिःशास्त्रप्रवर्तकाः" इति सूर्य्यसिद्धान्ताद् बहुविधम् । इदानीं पौरुषेयग्रन्थैराकुलितं लोकोपयोगिफलितार्थकथनाय व्यवह्रियत इति महाञ्शोकावसरः । वेदश्रोत्रस्थानीयं निरुक्तमपि बहुविधं वैदिकमंत्रपदार्थभावबोधनात्मकमतीवावश्यकमिदानीं तदभावाद् वेदार्थ एव दुर्लभ इति वेदबधिरत्वम् । यथा वेदानन्त्यं तथैव निर्वचननिरुक्तनिघंट्वानन्त्यम् । तदभावादेव वेदादरे कार्श्यम् । शास्यन्ते वैदिकवर्णार्थस्वरादयो याभिरिति शिक्षा वेदनासास्थानीयाः प्रतिशाखं मुनिभिः प्रकाशितवर्णोच्चारणभेदरूपप्रातिशाख्यनामापरपर्याया अपि बहुविधाः । तदभावादेवसाम्नां यथार्थगानशिक्षणाभावेन प्रायो लोप एव दृश्यते । एवं वेदाङ्गानां ग्लानिरिति अङ्गिनो वेदस्यापि ग्लानिः स्फुटैव । अतो वेदतदंगस्वाध्यायसत्संप्रदायप्रवृत्तिरतीवावश्यकीति । एवं वेदविज्ञानदर्शनरूपशास्त्राणि बहुभेदमापन्नानीव दृश्यमानानि ज्ञातुमतिगभीराणीति सर्वत्र बह्वी हानिरस्ति, तदर्थं तदेकवाक्यतया तत्तद्विज्ञानभूमयः संक्षेपतो निर्दिश्यंते । "सदेव सौम्य इदमग्र आसीत्" "सत्यं ज्ञानमनन्तं ब्रह्म" "तमेव विदित्वाऽति मृत्युमेति" "नाऽन्यःपंथा विद्यतेऽयनाय" "एकमेवाऽद्वितीयं ब्रह्म" "प्रज्ञानमानन्दं ब्रह्म" "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" "तमेवैकमात्मानं विजानथान्या वाचो विमुञ्चथ" इत्यादिश्रुतिभ्योऽद्वितीयपरमानन्दचिद्घनसाक्षात्कारः परमपुरुषार्थ इत्यध्यवसितम् । तत्राऽद्वितीयं ब्रह्म प्रमेयं तत्साक्षात्कारश्च प्रमा सा च प्रमाणाधीना इत्य-

तो माननिरूपणायैव गौतमकणादाभ्याम्महर्षिभ्यां षोडश सप्त पदार्थगर्भे न्यायवैशेषिकदर्शने प्रणीते, तथाच न पदार्थतद्धर्माणां वा निरूपणे तात्पर्य्यमपि तु प्रमाणनिरूपण एव । स्थूलविज्ञानसहायेन सद्वस्तुनिरूपणे वैशेषिको न्यायश्चेति दर्शनद्वयमेव परमोपयोगितया निर्धार्यते । ततो हि धर्मधर्मिणोर्द्वयोरेव सम्यग् विनिर्णयद्वारेण तत्वजिज्ञासूनां प्रभूतकल्याणमुपजायते । "समे शुचौ वन्हिजलाग्निवालुकाविवर्जिते शब्दजलाशयादिभिः । मनोनुकूलेन तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजनम्" । "आत्मा वारे द्रष्टव्यः श्रोतव्यो निदिध्यासितव्यः" इत्यादिश्रुतिभ्यो निदिध्यासनस्यात्मसाक्षात्कारं प्रति हेतुत्वेन श्रूयमाणत्वात्त्वंपदलक्ष्यार्थाऽद्वितीयपरमात्मविषयकचित्तवृत्तिधारालक्षणनिदिध्यासनसमये विषयेभ्यश्चित्तवृत्तिनिरोधाय प्रधानप्रथमतत्वग्रामसांगयोगप्रपंचनार्थमथयोगानुशासनमित्यारभ्य योगदर्शनं श्रीमन्महर्षिणा पतंजलिना प्रपंचितमित्यतो न प्रधानादिनिरूपणेन वा योगस्य स्वागमीयफलनिरूपणे तात्पर्य्यमपि तु अद्वितीयपरमात्माकारावच्छिन्नचित्तवृत्तिप्रवाहरूपनिदिध्यासनाय विषयेभ्यश्चित्तवृत्त्येकाग्रतामात्र एव । अत एव सर्वसाधनसमूहानामुपासनाक्रियाणां च योग एवावसानभूमिः । "नावेदविन्मनुते तं बृहन्तं" "वेदैश्च सर्वैरहमेव वेद्य" इत्यादि श्रुतिस्मृतिभ्यो ब्रह्मणो वेदप्रमाणैकगम्यत्वेन शब्दप्रमाणेन प्रमेयविचारप्रवृत्तौ प्रमेयस्याद्वितीयब्रह्मणस्तत्वमसीत्यादिमहावाक्यीयतत्त्वंपदलक्ष्यतया पदज्ञानस्य च शक्यार्थज्ञानद्वारा लक्ष्यार्थबोधकत्वेन श्रीमद्भगवता कपिलेन प्रधानप्रमुखतत्वगर्भं सांख्यदर्शनं त्वंपदशक्यार्थनिरूपणाय प्रणीतमतो न प्रधानादिपदार्थनिरूपणे, न वा प्रधानादीनामाविर्भावादिनिरूपणे तात्पर्यं किन्तु कपिलस्य त्वंशब्दवाच्यान्तःकरणावच्छिन्नचैतन्यनिरूपण एव

तात्पर्यं भवतीति । एवं त्वंपदशक्यार्थनिर्णयानन्तरं प्रमेयस्याद्वितीयपरमात्मनस्तत्पदस्यापि लक्ष्यतया तत्पदशक्यार्थबोधः । महावाक्यस्थत्त्वंपदार्थनिर्णयायैकं भवति सांख्यं योगइति द्वयमेव दर्शनम् । तत्र च योगदर्शनं तात्पर्यबुद्धिरूपिण्याः प्रज्ञायाः सम्यग् विकासं संजनयति सांख्यदर्शनं च त्वंपदार्थविबोधे सहायकतामुपैति । चित्तैकाग्र्याय श्रीमद्भगवता पतंजलिना सांख्ययोगे प्रणीते सत्यनादिसंसारभूतानां कर्म्मणां वासनाभी रागद्वेषादिकलुषितान्तःकरणेन योगसाधनानां शमदमादीनामसंभवेन तत्संभवाय तमेतं वेदानुवचनेन "ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" "सर्वे वेदा यत्पदमामनन्ति सर्वाणि भूतानि च यद्विशन्ति" "यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योम्" "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्" इत्यादि श्रुतिस्मृतिभ्योऽन्तःकरणमलानां कर्म्मभिः क्षयिमाणत्वश्रवणेनान्तःकरणपंकानां व्यवच्छेदाय परमर्षिर्भगवान् जैमिनिराचार्य्योऽथातो धर्म्मजिज्ञासेत्यारभ्य द्वादशलक्षणीं प्रणिनाय । वेदस्य त्रिकांडविषयत्वात्तदर्थप्रकाशकानि कर्ममीमांसाभक्तिमीमांसाब्रह्ममीमांसेतिमीमांसात्रयदर्शनानि श्रीमज्जैमिनिशांडिल्यवेदव्यासप्रणीतानि । तेषु कर्मसु अधिकारिणां प्राथम्यादत्यावश्यकत्वं श्रैष्ठ्यं चास्तीति तस्यातीव विस्तारः । यमन्तरा लक्ष्यार्थानवबोधस्तं तत्पदशक्यार्थं निरूपयितुं शाण्डिल्यशेषपाशुपतप्रणेत्रादिभिर्महात्मभिर्भगवानेको वासुदेवः परमार्थतत्वमित्येवमादिसगुणनिरूपणोदाहरणानि दैवीभक्तिमीमांसादीनि प्रणीतानि इत्थं च रुचिवैचित्र्यात्तत्पदशक्यार्थो वासुदेवोऽस्तु पशुपतिर्वा भवत्वित्यत्र न विशेषः । तथा च गुणावच्छिन्नं परात्मनो रूपमित्यादिनिरूपणे न तात्पर्यमपि तु तत्पदवाच्यमायावच्छिन्नचैतन्यनिरूपण एव महावाक्यस्य तत्वमिति

पदावबोधजननार्थं कर्ममीमांसाभक्तिमीमांसाचेति मीमांसाशास्त्रद्वयं कार्यकारणरूपेण भूरि सहायकं भवति । अतोऽग्निहोत्रचातुर्मास्यादीनां स्वर्गादावक्षय्यस्थित्यादिहेतुत्वनिरूपणे, न वा प्रपंचस्य सत्यत्वादिनिरूपणे तात्पर्य्यं किंतु योगाङ्गशमदमादिसिद्धयेऽन्तःकरणमलानां विहितकर्म्मानुष्ठानैर्निवृत्तौ भगवतो जैमिनेर्वाक् तात्पर्य्यवतीति परिचरितचरेण मार्गेणाक्षपादकणादकपिलशांडिलजफणिजैमिनीनां तात्पर्यविषयभूतानि परस्परमविरुद्धानि प्रमाणानि त्वंपदशक्यतत्पदशक्यचित्तैकाग्र्यान्तःकरणमलापाकरणानि दर्शयित्वा व्याससूत्रार्थं श्रुतेरर्थं च यथायथं वर्णयंतिस्म। योगदर्शनविज्ञाने योगभूमिकासप्तकं, वेदांतदर्शनविज्ञाने ज्ञानभूमिकासप्तकं येन क्रमेणास्ति तेनैव क्रमेण सोपानारोहणमिवोभयशास्त्रोक्तभूमिकासु समारोहत्यधिकारीति सुतरां शास्त्रैक्यमिति सप्तभूमिकासमारोहायैव सप्तदर्शनानीति गूढं रहस्यम्। तथा च क्रमप्राप्तसोपानारोहे तदुत्तरोत्तरभूमिसमारोहणे सौलभ्यं भवतीति नार्षविज्ञाने विरोधगंधः। ज्ञानदर्शनसप्तभूमिकाविज्ञानरहस्यमेतद्ग्रंथकारप्रणीतसप्तदर्शनसमन्वये द्रष्टव्यमिति। सप्तमं च दर्शनं ब्रह्ममीमांसाशास्त्रं ब्रह्मस्वरूपबोधोत्पादकमिति सर्वजनप्रसिद्धम् । वस्तुतस्तु सप्तैव दर्शनान्येतानि मुक्तिपदस्यैवाद्वितीयस्य निर्णायकानीति । तथाऽपि ज्ञानोत्कर्षस्य तारतम्यानुसारतो वेदान्ता एव वेदसिद्धान्ता इति प्रकीर्त्यन्ते । प्रत्यक्षानुमानशब्दादिप्रमाणैकवाक्यताप्रमितदृष्टादृष्टप्रपंचजातनिर्णायकचतुर्विंशतिमहर्षिप्रणीतसायनाचार्यादिधृतद्वादशलक्षसूत्रात्मकविद्युत्सौदामिनीकलाशास्त्रमतिविस्तृतंचेदानीं भागशः क्वचित्कर्नाटकादावुपलभ्यते । ईदृशानां ग्रंथानां तिरोधानादेवेदानीं जनेषु धर्मकर्मादौ विवादोपस्थानं परिदृश्यते। तथा च दर्शनोद्धारः परमावश्यक इति ज्ञेयम् ।

वेदा हि मूलमनादिरूपस्य भ्रमादिदोषरहितस्य निखिलजनहितकारिणः सनातनधर्मस्य । तदनु च स्मृतयस्ततश्च पुराणानि ततश्च तंत्राणि क्रमशो भिन्नाधिकारप्रयोजनतया प्रमाणरूपेण समाद्रियन्ते । चतुष्टयमेव तद्वैदिकज्ञानविज्ञानसमूहानां संप्रकाशकमिति सर्वजनप्रसिद्धम् । वेदद्रष्टॄणां महर्षीणां स्मृतिबलेन प्रकाशितानि शास्त्रजातानि स्मृतिशास्त्राणीति कथ्यन्ते । वेदानां परममाननीयत्वे सिद्धे तदनुकूलस्मृतयोऽपि माननीया भवन्तीति कः संदेहः। ततश्च द्वितीयाधिकरणविषयाणां स्मृतिशास्त्राणां सम्बंधे नास्ति का चिदपि शंका। वर्तमानसमये स्मृतयो नाम धर्मशास्त्राणि वक्ष्यमाणरीत्या भेदमापन्नानि तद्यथा-"मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः । यमापस्तंबसंवर्ताः कात्यायनबृहस्पती । पराशरव्यासशंखलिखिता दक्षगौतमौ । शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥" अन्यानि देवल १ गोभिल २ जमदग्नि ३ विश्वामित्र ४ प्रजापति ५ वृद्धशातातप ६ पैठीनसि ७ आश्वलायन ८ पितामह ९ बौधायन १० छागलेय ११ जाबालि १२ च्यवन १३ मारीच १४ कश्यपा १५ दिप्रणीतानि उपस्मृतिरूपाणि आचारव्यवहारप्रायश्चित्तवर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकानि संति निबंधेषु तत्तद्वचनोपलब्धिरपि भवति । एवं श्रीमहाभारते तथा वाल्मीकीये श्रीमद्रामायणे साक्षात् तथा आख्यानोपाख्यानादिपरंपरया धर्मस्यैव प्रवृत्तिनिवृत्तिलक्षणस्योक्ततया इतिहासनाम्ना महाकाव्यनाम्ना च भिन्नमपि धर्मशास्त्रे स्मृतिष्वेव प्रमाणमुकुटाग्रतया तद्द्वयं निर्विवादं वरीवर्ति एवं सर्वदेवसाधारणं मन्त्रशास्त्रं शारदातिलकादितांत्रिकविषयातिरिक्तश्रुतिस्मृतिसिद्धसिद्धार्थांशबहुलं धर्मशास्त्र एवान्तर्भूतं ज्ञेयम् । स्मृतीनां प्रामाण्यं मनसि कृत्यैव तत्र तत्र वेदान्तसूत्रेषु " स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनव-

काशदोषप्रसंगात् " । २-१-१ " इतरेषां चानुपलब्धेः " २-१-२ " स्मृतेश्च " इत्यादिसूत्राणि प्रणयतिस्म भगवान् वेदव्यासः । स्मृतीनां महर्षिसंस्कारजन्यविशुद्धज्ञानमयत्वेन तत्कृतं वेदविषयकमनुमानं तत्प्रामाण्यं बोधयति इति स्मृतिप्रामाण्यसंप्रदायः । अत एव स्मर्यते मुनिभिश्चिन्त्यते सा स्मृतिः । चिन्तनं च यद्विषयिणी आर्षेक्षाबुद्धिरुत्थाप्योत्थिताकांक्षापुरस्कारेणोदेति तद्विषयस्यैव अन्यतरस्य वान्यमहर्षिकृतान्यतमरूपेण विशिष्टचिन्तनं न विरुध्यते । यस्य विषयस्य यत्र स्मार्तेऽर्थे स्थूलत्वं तत्र विज्ञानसिद्धार्थनिरूपणं दुर्बलं भवति यत्र च पदार्थसूक्ष्मत्वं तत्र वैज्ञानिकसिद्धांशनिरूपणं प्रबलं भवतीति, पूर्वावस्थायां मुनिमतभेदसंभवोऽस्ति नोत्तरस्यामुक्तायामवस्थायाम्। यथा नारीधर्मेषु "न स्त्री स्वातंत्र्यमर्हति" इत्यत्र पुरुषतंत्रप्रकृतिरिति विज्ञानसिद्धेऽर्थे न केषामपि मतभेदः किं तु विवाहकालनिर्णये दृष्टादृष्टरजस्करूपदैहिके स्थूलेऽर्थेऽस्ति कोऽपि मतभेद इति न स लक्ष्यनिर्णये विरोधापादक इति दिक् । यथोत्तरं च मुनीनां प्रामाण्यं भगवत्प्रसादमूलकविद्यातपोयोगसमाधिबललब्धविज्ञानतरतमभावेन चिरन्तनैः स्मृतिहृदयाभिज्ञैरङ्गीक्रियत इति न विरोधगंधः ।अस्यां संहितायां वर्णाश्रमादिधर्मनिरूपणप्रस्तावेषु टिप्पण्यां बाहुल्येन स्मृतिरहस्यं वर्णितप्रायमिति तत्र तत्रैव बोधयितुमुपयुज्यते ।

भावतत्त्वतः शब्दतत्वस्य महदनन्तराद् यथा हि संभवति कश्चिद्भेदः शब्दभावान्मनोभावस्य, तथैव संभवो भवति भावभेदः कश्चिच् श्रुतिस्मृत्योर्नच तद्दोषावहं भवति । श्रुतिस्मृतिरहस्यानां सर्व्वजीवगणेषु प्रचारणार्थं प्रकाटितं तृतीयाधिकारविषयकं शास्त्रजातं पुराणनाम्ना प्रसिद्धम् । एवं श्रीमन्महाभारतं हरिवंशाखिलसहितं सपादलक्षसंख्याविशिष्टं पुराणलक्षणैक-

देशलक्षितग्रंथांशबहुलं श्रौतेतिहासनामकं सर्वशिरोधार्यं पंचमवेदतया श्रुतिप्रसिद्धं वेदार्थोपबृंहकं श्रीमद्भगवतो व्यासनारायणादाविर्भूतं प्रमाणपरभागतया प्रकाशमानमस्ति । महापुराणोपपुराणान्यपि श्रुतीनां स्मृतीनामनुकूलानीति सदैव माननीयानि। तेषां संख्या नामानि च साधारण्येन यथा– "ब्राह्मं दशसहस्राणि पाद्मं पञ्चोनषष्टि च । श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् । दशाष्टौ श्रीभागवतं नारदं पञ्चविंशतिः । मार्कण्डं नव वान्हं तु दशपञ्च चतुःशतम् । चतुर्दश भविष्यं स्यात्तथा पञ्चशतानि च । दशाष्टौ ब्रह्मवैवर्तं लिङ्गमेकादशैव तु । चतुर्विंशति वाराहमेकाशीतिसहस्रकम् । स्कान्दं शतं तथा चैकं वामनं दश कीर्तितम् । कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश । एकोनविंशत्सौपर्णं ब्रह्माण्डं द्वादशैव तु ।एवं पुराणसंदोहश्चतुर्लक्ष उदाहृतः ।" इति श्रीमद्भागवते द्वादशस्कंधे । कौर्मे पूर्वभागप्रथमाध्याये महापुराणान्युक्त्वा । तेषु वायवीयमधिकमुक्त्वा " अन्यान्युपपुराणानि मुनिभिः कथितानि तु । अष्टादशपुराणानि वक्ष्ये संक्षेपतो द्विजाः। आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् । तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् । चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् । दुर्व्वाससोक्तमाश्चर्य्यं नारदीयमतः परम् । कापिलं वामनं चैव तथैवोशनसेरितम् । ब्रह्माण्डं वारुणञ्चैव कालिकाह्वयमेव च । माहेश्वरं तथा साम्बं सौरं सर्व्वार्थसञ्चयम् । पराशरोक्तं मारीचं तथैव भार्गवाह्वयम् " इति। तेषु स्कान्दं महापुराणोपपुराणेतिरूपेण द्विविधम्। श्रीभगवता शङ्करेणोक्तं स्कंदाय महापुराणं श्रीस्कंदभगवता कुमारेण मुनीन् प्रति कथितं तदुपपुराणम् । शिवधर्म्माख्यमुपपुराणं

१–तत्राष्टादशाध्यायोत्तरत्रिशताध्यायात्मकं देवीभागवतं नाम महापुराणम् द्वात्रिंशदध्यायाधिकत्रिशताध्यायात्मकं विष्णुभागवतमिति मतांतरविवेकः ।

नन्दीपुराणम् । अन्यत्र तूपपुराणेषु वामनस्थाने भानवं स्कांद-
स्थाने नन्दीपुराणं शिवधर्माख्यं च भिन्नं दृश्यते । नारदीयं
नारदमिति भेदेन महापुराणोपपुराणरूपेण द्विधा द्विधा ज्ञेयम् ।
अन्यतरस्य कौर्म्मवचनाद् वायवीयता वा बोध्येति, "ततो
वासिष्ठलैंगाख्यम्" इत्यपि कुत्रचित्पाठो दृश्यत इति न विरो-
धः । श्रुतिषु चेतिहासः पुराणमिति । य इतिहासः प्रसिद्धस्तत्रैव
श्रीमद्रामायणं षट्कांडानि तथोत्तरमितिसप्तकांडात्मकं योगवा-
सिष्ठापरपर्यायमहारामायणोत्तरखिलसहितं च । "वेदवेद्ये परे
पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणा-
त्मना" इत्यभियुक्तोक्त्या वेद इवापरं ब्रह्मवरलब्धश्रीवाल्मीकि-
मुनेः प्रादुर्भूतं पुराणमिव प्रमाणपदवीं गतं बोध्यम् । उपपुरा-
णानां चाष्टादशानामन्यान्युपपुराणानि च सन्ति तन्नामनिर्देशो
विस्तरभयान्न क्रियते । के च न पुराणभागाः भरद्वाजसंहिता-
वेदव्याससंहितेत्यादिपुराणसंहितानाम्ना रहस्यनाम्ना तांत्रि-
का इवोपलब्धा भवन्ति । गणेशपुराणं मुद्गलपुराणमादिपुराण-
मादित्यपुराणमेवमादिनाम्नापि प्रसिद्धानि कानिचित्पुराणानि नि-
बंधधृतवचनानि समुपलभ्यंते तत्र महापुराणमारभ्यादित्यपुरा-
णपर्यंतपुराणेषु चार्षानार्षग्रन्थनिरसनप्रक्षेपादिर्महान् प्रपंचः का-
लमहिम्ना प्रस्तुत इति महदनिष्टम् । अविर्भावश्चैतेषां तत्तदृषिभ्यो
भवति नतूत्पत्तिः तत्र स्वरवर्णपदवाच्यादीनां वेदवन्न क्रमनि-
त्यत्वं नापि तदर्थक्रमनित्यत्वं किं तु प्रतिपाद्यार्थमात्रगतं
नित्यत्वमिति तदाविर्भाव एव कृतानीति व्यवहारस्तु शब्दक्रमं
पुरस्कृत्येति तत्वम् ननु तर्हि शब्दानां नित्यत्वेन लौकि-
कवाक्यस्याप्याविर्भावो वाच्य इति चेन्न लौकिकशब्दानां
नित्यत्वेऽप्यर्थस्योपनिबध्यमानस्य यादृच्छिकतयाऽनित्यत्वे-
नाविर्भावस्य वक्तुमशक्यत्वात् । अर्थानां श्रुतिस्मृतिपुराणादिप्रति-

पादितानां लौकिकशब्दैरुपनिबद्धत्वेन पौरुषेयत्वेऽपि तेषु पुण्योपचयः श्रौतः । साधुशब्दापभ्रंशभूतेषु भाषांतरेषूपनिबद्धानां तथाभूतानामर्थानां ततोऽप्यवरतया न पुण्योपचयः । अत एव सत्काव्यालापानां विष्ण्वंशत्वमसत्काव्यालापानां निषेधश्च स्मर्यते । "प्राकृते संस्कृते चापि" इति शिक्षावाक्येन प्राकृता अपि वैदिकानुकूलशब्दार्था एव कल्याणप्रदा अन्येषां च न म्लेच्छितवैनापभाषितवै इति वैदिकनिषेधविषयत्वमेवेति संक्षेपः। ब्राह्मादिपुराणानामष्टसु प्रमाणेषु ऐतिह्यस्य पुराभूतत्वाद् एकप्रवृत्तिनिमित्तत्वेन पुराणशब्दवाच्यतया प्रमाणरूपत्वं तत्र तेषां पुराणानां विद्याशब्दार्थान्तर्भावस्त्रिकालज्ञेन योगिना याज्ञवल्क्येन आचाराध्याये तृतीयश्लोक उक्तः "पुराणन्यायमीमांसा धर्म्मशास्त्रांगमिश्रिताः । वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्दश" इति । तथा च विद्याशब्दार्थचतुर्दशप्रकारांतर्गतसुगमार्थबोधकत्वनिबंधनचतुर्वर्गफलप्रदत्वसस्त्रीकचतुर्वर्णाधिकारित्वादिगुणकाभिप्रायतो योगियाज्ञवल्क्यप्रथमाधिगणितपुराणशब्दार्थकथनपूर्वकं तत्प्रामाण्यं प्रतिपाद्यते तथा हि पूर्व्वकालार्थकपुराशब्दात् तत्र भव इत्यर्थे सायंचरमितिसूत्रेण ट्युप्रत्यये तस्य अनादेशे पुराणप्रोक्तेषु ब्राह्मणकल्पेष्विति सूत्रे पुराणशब्दनिपातनबोधिततुडागमाभावे महता यत्नेन पुराणशब्दः साधितो व्याकरणे मुनिभिः स च ब्राह्मादिषु योगरूढ्या शक्तः पदार्थबोधनाय पदान्युच्चार्यंते तदभावे तत्साधुत्वबोधनं वृथास्यादिति तेष्वाधुनिकत्वकल्पनं निर्मूलम् । तथा च व्याकरणमहाभाष्ये वाको वाक्यमितिहासः पुराणं वैद्यकमिति गणनम् । यजुर्वेदीयब्राह्मणे सविस्तार इतिहासपुराणं च प्रतिष्ठितमित्युक्तम् । छान्दोग्योपनिषदि इतिहासपुराणं पञ्चमं वेदानां वेदमित्युक्तम् । बृहदारण्यकोपनिषदि एतस्य महतो भूतस्य निश्वसितमित्युक्त्वा इति-

हासः पुराणं श्लोको व्याख्यानानीत्याद्युक्तम्।तथा तत्रैव इतिहास-पुराणं विद्या उपनिषद् इत्युक्तं मनुस्मृतौ अ०३श्लोके २३२ पुराणानि खिलानि चेति श्राद्धे पुराणपठनमुक्तं याज्ञवल्क्यस्मृतौ अ०१श्लोके३५वाक्ये वाक्यं पुराणं चेति।तथाश्लोके४३वेदाथर्व-पुराणानीत्युक्तम्।हारीतस्मृतौ अ०४इतिहासपुराणाभ्यामित्युक्तम्। कात्यायनस्मृतौप्रपा०२खण्डे१४वाक्ये वाक्यं पुराणानि इतिहासानि चान्वहमिति । व्यासस्मृतौ "श्रुतिस्मृतिपुराणानां भवेदध्यापने क्षमः"॥अ०३ "इतिहासपुराणानां वेदोपनिषदां द्विजः"॥ अ०४"इतिहासपुराणानि स भवेद्वेदपारगः"।महाभारते स्वर्गपर्वणि अ०६"अष्टादशपुराणानां श्रवणाद्यत्फलं भवेत् ।"आनुशा० पर्व० अ० ९० पांक्तेयब्राह्मणनिरूपणे। "ये च भाष्यविदः केचित् ये च व्याकरणे रताः। अधीयते पुराणानि धर्म्मशास्त्राण्यथापि च" इत्युक्तम् । विराटपर्व० अ० ५० "वेदान्ताश्च पुराणानि"। तथा आदिपर्वणि उपक्रमणिकाध्याये "इतिहासपुराणानामुन्मेषं निर्मितं च यत्" । इत्याद्युक्तमिति प्रामाण्यविचारः । न च मिथो विरुद्धानीति वाच्यं तत्प्रामाण्यस्योक्तत्वात्तत्प्रणेतुः श्रीवेदव्यासस्य स्वयं भगवदवतारत्वेन प्रमादादिदोषशून्यत्वादाप्ततमत्वेन "स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।" इति वेदार्थोपबृंहकम् । तत्तदुपासकानामुपास्यदेवताद्वारा यथाधिकारं परमात्माधिगमः पुराणानां वैयासिकानामर्थः। यथा वेदानां सर्वेषामुपास्य प्राणादिद्वारा परमात्माधिगमोऽर्थः। यतः सर्वेष्वपि पुराणेषु जगत्कारणमेकमेव परमार्थतोऽविभक्तनामरूपगुणकर्म्मात्मकं ब्रह्म प्रतिपाद्यते यथा वेदैः– "अष्टादशपुराणानां वक्ता सत्यवती सुत" एवेति सम्मतिस्तु सर्वेषामास्तिकानाम्, परन्तु तेषु तत्र तत्र एकस्य स्तुतिरन्यस्य निन्दा कथं प्रतिपादितेति प्राप्ते ब्रूमः।यत्पाद्मे विष्णुनिर्माल्यग्रहणं, देवतांतरनिर्म्माल्यग्रहणं चांडालत्वं च ध्वनितं तत्तु

स्वेष्टदेवतामाहात्म्यविवृद्धयर्थं विधेयस्तुतिसूचनार्थं चाऽस्तीति न देवतांतरनिर्म्माल्यनिन्दनायेति विवेचनीयम् । न हि पुराणायन्तर्घटिकीभूता निन्दा निंदितन्निन्दति, अपि तु विधेयं स्तौति, अथ च तेषु गुणभेदादधिकारिभेदाद्वा यत्र कुत्रापि निन्दनायेति लभ्यते—तत्त्वर्थवादमाश्रित्य स्वेष्टप्रतिपादनार्थमेव दृढयतीति शास्त्रविदां रहस्यं न कश्चिदज्ञो जानाति । एवमेव खल्वर्थवादस्य वेदेपि चरितार्थत्वान्न कस्मिंश्चित्पुराणवाक्ये आस्तिकानां शङ्काऽवसरः । "स्तुतिर्न्निन्दा परकृतिः पुराकल्प" इति श्रीमत्पूज्यपादन्यायसूत्रकारगौतमोक्तार्थवादलक्षणस्य जागरूकत्वात् । ततः समानार्थकत्वेन समानप्रयोजनकत्वेन च प्रमाणानीति प्रथितानि पुराणानि । भाषात्रयकोविदेषु श्रुतिस्मृतीतिहासपुराणानामेक एवार्थ इति विरोधाभावेन पंचलक्षणं दशलक्षणमपि वा पुराणं प्रमाणतमम् । अवांतरविरोधपरिहाररीतयः कल्पभेदश्रोतृवक्तृभेदप्रसंगभेदादिरूपास्तु पुराणवचनैरेव पौराणिकैर्ज्ञायंत इति तदध्ययनतो ज्ञातव्यम् । तेषु सर्वेष्वपि सात्विकांशो निष्कामधर्म्ममोक्षयोः साधकः अर्थकामसाधकौ च राजसतामसांशाविति त्रैगुण्यविषयत्वं वेदवदेव बोध्यम् ।

श्रीभगवन्तो महर्षयः प्राचीनाः सर्व एव स्वसिद्धांतेषु विज्ञानपरिपूर्णेषु प्रकृतिं त्रिधा सप्तधा वा संविभज्य प्रदर्शितवंतः । वस्तुतस्तु सृष्टिविद्यायां प्रकृतेरेवम्विधविभागरीतिद्वयेन सम्वर्णनमभ्रान्तसिद्धान्ततया कृतं बुधैः।वेदाश्च तथैव व्याकुर्वते ।"ये ते पाशा वरुण सप्त सप्त त्रेधा तिष्ठन्ति विशता रुशन्तः ॥ सिनन्तु सर्वे अनृतं वदन्तं यः सत्यवायति तं सृजन्तु ।"इति यजुःश्रुतिः। कारणान्वेषणप्रस्तावेषु यथा प्रकृतेर्भागत्रयमनुसृत्य शास्त्रेषु प्रवर्तते विचारः मुख्यतयैव कार्य्यविचारस्थलेषु तस्याः सप्तधात्वमवलम्ब्य विषयस्वरूपमवधार्य्यते । एवं च शाब्दविज्ञानस्य

सौक्ष्म्यानुसारतः कार्य्यजातस्य तत्सम्बंधिनो नियमबद्धतया प्रदर्शनार्थमेव पुरा सप्तस्वरमयस्य संगीतशास्त्रस्य प्रादुर्भावोऽभवत्। ऊर्ध्वसप्तलोकानामधःसप्तलोकानां च विचारप्रस्तावेषु युक्तिमार्गोऽनुस्त्रियते तथा च चतुर्दशभुवनविचारप्रस्तावोऽपि पूर्वोक्तसिद्धान्तानुसारीति सुविदितम् । अज्ञानभूमिसप्तकं ज्ञानभूमिसप्तकं च तत्सिद्धान्तानुसारत एव संनिर्णीयते । ज्ञानस्वरूपभेदानां सप्तधात्वमनुसन्धायैव सप्तदर्शनशास्त्राणामाविर्भावः समभवदिति वैदिकविज्ञानस्य भ्रमहीनत्वं संसाधयतीति नास्ति संशयलेशः । त्रिधाविभक्तविषयवर्णनप्रस्तावेषु त्रिगुणविभागविज्ञानं सर्वोत्कृष्टतया सर्वशास्त्रव्यापितया च परिकीर्त्यते । तथा चाध्यात्मिकमाधिभौतिकमाधिदैविकमिति त्रिविधं वैज्ञानिकसिद्धान्तसम्मतं गूढरहस्यं पुरा समाविष्कृतमभूत् । तच्च भावत्रैविध्यं निगमागमग्रन्थेषु सर्वत्रैव सर्वविचारमूलकतया विन्यस्तमभिवर्तते । एवं च वेदेषु पुराणतन्त्रादिषु च नैव किमपिभावान्तरम् त्रिगुणविभागभावत्रयमन्तरेणोपनिबद्धं परिलक्ष्यते । एतद्विज्ञानानुसारतया कर्म्मोपासनाज्ञानमिति त्रिकांडभेदतो वेदानां संप्रकाशोऽभूद् वेदेषु च त्रिविधा एव श्रुतयः परिदृश्यन्ते । ताश्च वक्ष्यमाणरूपेण सुप्रसिद्धाः । अत एव "यथा दुग्धं च भक्तं च शर्कराच सुमिश्रितम्। कल्पितं देवभोगाय परमान्नं सुधोपमम्॥ तथा त्रैविद्यमापन्नः श्रुतिभेदः सुखात्मकः।नयते ब्राह्मणान् नित्यं ब्रह्मानन्दं परात्परम् । "इतिस्मृतिः । अध्यात्मादित्रिविधरहस्यं संहितायामस्यामध्यात्मरहस्यवर्णनाध्याये प्रपंचितं तत एव द्रष्टव्यं,श्रुतिवत्पूर्वोक्तभेदत्रैविध्यमनुसृत्य श्रीभगवद्भिः पूर्वाचार्य्यैर्महर्षिभिः पुराणादिशास्त्रेषु च समाधिलौकिकपरकीयेतिरूपं भाषात्रैविध्यं समुपनिबद्धम् तथा च तेषां ग्रन्था यथैवाध्यात्मिकादिभावत्रयगर्भितास्तथैव ते समाध्यादिभाषात्रयोपनिबद्धाश्च परिदृ-

श्यंते । अत एव न कोपि शब्दस्तेषां ग्रन्थेषु प्रयुक्तः समाध्यादि-त्रिविधभाषाबहिर्भूतः समभिलक्ष्यते । तथा च "समाधिभाषा प्रथमा लौकिकीति तथा परा । तृतीया परकीयेति शास्त्रभाषा त्रिधा स्मृता ॥ गुप्तमेतद्रहस्यं वै भाषातत्वं महर्षयः । सम्यक् ज्ञात्वा प्रवर्तध्वं शास्त्रपाठेषु संयताः ॥ समाधिभाषा जीवानां योगबुद्धिप्रदीपिका । नयते नितरामेतान् परमामृतमव्ययम् ॥ सुरम्या लौकिकी भाषा लोकबुद्धिप्रसाधिका । परमानन्दभोगान्सा प्रदत्ते नात्र संशयः ॥ परकीया तथा भाषा शास्त्रोक्ता पापनाशिनी । जीवान्सा पुण्यलोकानां कुरुते ह्यधिकारिणः ॥" इत्यादि श्रीभरद्वाजपुराणसंहितायाम् । त्रिगुणभागानुसारतो जीवानां बुद्धिरपि साधारण्येन त्रैविध्यमवलम्ब्य समुत्पद्यते । त्रिविधाश्च बुद्धिभेदाः प्रधानसम्बंद्धयधिकारानुसारतस्त्रिविधानुशासनान्तर्गतरूपेण प्रसिद्धाः । सप्तदर्शनसमूहास्तु योगानुशासनान्तर्गतत्वादभ्रान्तबुद्धेरेवाधिकारविषया इति निश्चीयते । स्मृत्यादिशास्त्रद्वारेण महर्षयः श्रीभगवतः शब्दानुशासनं राजानुशासनञ्चेत्यनुशासनद्वयं स्फुटतया व्याख्यातवंतः; श्रीभगवता वेदव्यासेन च शान्तिपर्वणि विभागत्रैविध्यमेव संनिबद्धम् । त्रिविधवृत्तीनां क्रमोन्नतिविधानेन त्रिविधाधिकारिणां तुल्यरूपेण कल्याणसाधनार्थं महर्षिभिस्त्रिकालज्ञैर्भाषात्रैविध्यं स्वशास्त्रेषु संप्रकटितम् । यया हि भाषया तत्वं च स्वरूपतश्चाध्यात्मिकभावो ग्रन्थेषु व्याक्रियते सा समाधिभाषेति संकथ्यते । तथा च श्रीमद्भगवद्गीतासु श्रीभगवद्वाक्यानि प्रायशः समाधिभाषाभाषितानीति ज्ञातव्यम् यथा "सर्वेंद्रियगुणाभासं सर्वेंद्रियविवर्जितम् । असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ बहिरंतश्च भूतानामचरं चरमेव च । सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चांतिके च तत् ॥ अविभक्तं च भूतेषु विभक्तमिव च स्थितम् । भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ ज्योतिषामपि

तज्ज्योतिस्तमसः परमुच्यते। ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम्"॥ इत्यादि संबोधनपदान्यपहाय सर्वाण्येव भगवद्वाक्यानि समाधिभाषोपनिबद्धानि नार्जुनप्रश्नवाक्यानि। मुमुक्षूणां बुद्धेः परिशोधनार्थं चित्तस्य च तेषां परमानन्दाभिमुख्यसम्पादनार्थं समाधिगम्या एव विषया यया भाषया लौकिकभावेनेव व्याक्रियन्ते सा लौकिकी भाषेति प्रसिद्धम् पुराणादिषु प्रायो लौकिकभाषा, बाहुल्येन प्रयुक्ता परिदृश्यते यथा "तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिम्पन्नरुणेन शंतमैः। स चर्षणीनामुदगाच्छुचो मृजन्प्रियः प्रियाया इव दीर्घदर्शनः॥ दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं रमाननाभं नवकुंकुमारुणम्। वनं च तत्कोमलगोभिरञ्जितं जगौ कलं वामदृशां मनोहरम्॥ निशम्य गीतं तदनङ्गवर्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः। आजग्मुरन्योन्यमलक्षितोद्यमाः स यत्र कान्तो जवलोलकुण्डलाः॥ दुहन्त्योभिययुः काश्चिद्दोहं हित्वा समुत्सुकाः। पयोधिश्रित्य संयावमनुद्वास्यापरा ययुः॥ परिवेषयन्त्यस्तद्धित्वा पाययन्त्यः शिशून्पयः। शुश्रूषन्त्यः पतीन्काश्चिदश्नन्त्योऽपास्य भोजनम्॥ लिंपन्त्यः प्रमृजन्त्यन्या अञ्जन्त्यः काश्च लोचने। व्यत्यस्तवस्त्राभरणाः काश्चित्कृष्णान्तिकं ययुः॥"इत्यादि, अत्रेदं तत्वं परमानंदपारावारमयानां श्रीकृष्णतत्प्रियतद्धामतत्समयनामवाङ्मनोगोचराणां परमदिव्यानां तद्रसप्रायसंस्कृतश्रीवेदव्यासश्रीशुकाचार्यैर्वर्णनात्सर्वपुराणभारतादिभ्य उत्तरं प्रादुर्भावनात् सर्वोपि श्रीमद्भागवतार्थः प्रायः समाधिभाषार्थ एव। परमुक्तप्रकारकभगवद्भावस्य न सर्वेप्यधिकारिणो यतोऽतप्ततपसां जनानामेव बाहुल्यात् करुणावशतया ताँल्लोकान् भगवत्संमुखान्कर्तुं यया तत्तत्व्यवहृतया भाषया यः सोऽर्थो वर्णित उपनिबद्धः सैव भाषा लौकिकीत्यभिप्रायो महर्षीणाम् तदुक्तमुपसंहारे "मृषा

गिरस्ता ह्यसती रसत्कथा न कथ्यते यद्भगवानधोऽक्षजः । तदेव सत्यं तदु हैव मङ्गलं तदेव पुण्यं भगवद्गुणोदयम् ॥ तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम् । तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽनुगीयते ॥ यत्र च प्राचीनगाथाद्यवलंबनेन समाधिगम्यरहस्यानां धर्म्मानुकूलभावानां वा दृढतया पुष्टिरानीयते तदर्थमेव प्रयुक्ता भाषा परकीयभाषेति संनिगद्यते । पुराणतंत्रशास्त्रादयस्तथेतिहासगाथाप्रभृतयश्च परकीयभाषया बाहुल्येनोपनिबद्धा दृश्यन्ते । उन्नताधिकारिणां पक्षे भाषात्रयमेव पूर्वोक्तं परमानन्ददायकत्वेन धर्म्मोत्साहवर्द्धकत्वेन च परमोपकारीति समाद्रियते । निम्नाधिकारवर्तिनान्तु जिज्ञासूनां पक्षे शेषोक्तमेव भाषाद्वयं विशिष्टमुपकारं सञ्जनयति । उदाहरणार्थं गाथादि यथा—पातिव्रत्यधर्ममाहात्म्यार्थं सत्यवत्सावित्रीगाथा, सत्यरक्षार्थं हरिश्चंद्रविश्वामित्रगाथादि श्रीभारते; दुर्वासांबरीषगाथा, रंतिदेवगाथा, भरतचरितं, इत्यादि श्रीभागवते। ईदृशी जीवदुःखहारिणी भाषा परकीयभाषा तस्या एव बाहुल्यात्पुराणं स्मृतिभ्यो विभक्तम् । जनसाधारण्येन भगवद्भक्तिवैराग्यादिप्रवृत्त्यर्थं पुराणेषु निबद्धा येऽर्थास्तेषु शिरःश्रुत्येकवाक्यतामापादयन्भगवाँच्छ्रीमत्पूज्यपादः कृष्णद्वैपायनवेदव्यासः परमात्मानं प्रार्थयते तत्र तत्र" रूपं रूपविवर्जितस्य भवतो ध्यानेन यत्कल्पितं स्तुत्या निर्व्वचनीयताऽखिलगुरो दूरीकृता यन्मया । व्यापित्वं च निराकृतं भगवतो यत्तीर्थयात्रादिना क्षंतव्यं जगदीश ! तद्विकलता दोषत्रयं मत्कृतम् ॥ " एवं च समाधिभाषायां न कुत्र चित् विरोधः किं तु लौकिकपरकीयभाषाभ्यां वर्णितेऽर्थे एव क्वचिद्भेदो भवितुमर्हतीति पुराणेषु च न विरोधांशः । आध्यात्मिकतत्वस्य पूर्वोक्तरीत्या त्रिधा सप्तधा वा विभागप्रकारं सम्यग् ज्ञात्वैव धर्माचार्यैर्धर्म्मोपदेशाः प्रदातव्या इति महर्षिभिः सर्वैः श्रीभगवद्भिः समादिष्टम् ॥

अगणितसंख्यारूपेणापि प्राकट्यमायातानां तंत्रशास्त्राणामधुना बहव एवोत्कृष्टग्रन्था लोपं गता इति सिद्धं प्रमाणैर्बहुविधैः । यथा हि ब्राह्मणग्रन्था वैदिकानां कर्मोपासनाकाण्डानां मुख्यसहायकरूपतया परिगण्यन्ते तथैव स्मृतिसिद्धकर्म्मकाण्डानां पौराणिकोपासनाविधीनां निर्व्वाहेऽपि तन्त्राणां सहायकत्वमवश्यमेवापेक्षणीयम्।फलतस्तु सर्व्वजीवहितकारिणोऽभ्रान्तसिद्धान्तपूर्णस्य सनातनधर्म्मविज्ञानस्यानुसारेण निगमागमप्रभृतीनि सर्व्वाण्येव शास्त्राणि स्वस्वाधिकारविषयेषु सर्व्वथैव माननीयानि भवन्ति । एतदेव हि विज्ञानमहत्वम् । पूर्वोक्तलक्षणोपेतानि त्रिविधभाषामयानि वेदानुकूलपुराणशास्त्राणि जीवगणानामाधुनिकानां परमोपकारं संसाधयन्ति ।तदनन्तरञ्च भवन्ति चतुर्थाधिकारविषयकाणि तन्त्रशास्त्राणि । तत्र च पुराणरीत्या विद्यमानेऽपि भाषावैचित्र्ये अधिकारभेदस्योपरि विलक्षणमेव लक्ष्यं परिरक्षितम्। अतश्च गुणत्रयभेदानुसारेण तन्त्रेष्वपि त्रिविधाधिकाराः परिदृश्यन्ते।विज्ञानभाष्यतंत्रे च मध्यमोत्तमाधिमात्रनामभिरधिकारा उक्ताः तथा महानिर्वाणतंत्रे च वीराचारपश्वाचारदिव्याचारनाम्नाऽऽचारत्रैविध्यं चोक्तं तत् त्रिगुणाधिकारपरतयैवोक्तम्। अत एव तंत्राणामपि त्रैविध्यमुक्तं श्रीशिववाक्यं यथा—"यदुक्तं ते मया तन्त्रं त्रिविधं त्रिगुणात्मकम् । तामसं कुत्र संप्रोक्तं राजसं चापि कुत्रचित् । सात्विकं तत्र कुत्रापि धीमान् तस्मात्तदुद्धरेत् । तामसं नरकायैव स्वर्गाय राजसं प्रिये । सात्विकं मोक्षदं प्राहुस्तुरीयं निष्कलं शिवे । " इति । तानि च तंत्राणि आगमनाम्ना प्रसिद्धानि तदुक्तं शिवसारतंत्रे—"आगतं शिववक्रेभ्यो गतं च गिरिजामुखे । मतं श्रीवासुदेवस्य तस्मादागम उच्यते।"इति । यद्यपि वेदे निगमशब्दः वेदानुकूलेषु सर्वेष्वपि शास्त्रेषु आगमशब्दो रूढ्या व्यवहृतो दृश्यते तथापि तंत्रेष्वपि तत्तत्प्रवर्तकाचार्यैर्व्यवह्रियते।एवं शास्त्रे-

ष्वपि तंत्रशब्दव्यवहारः पूर्वतंत्रं पाणिनीयतंत्रं इत्यादि। तथा च तत्तत्प्रवर्तकाचार्येभ्यो विस्तारमापन्नं कर्मोपासाज्ञानानुशासनकर्तृ यत्किमपि तदेव तंत्रमुच्यते। उक्तं च रुद्रयामले—"आगमं निगमं चैव तंत्रशास्त्रं द्विधा मतम्। महेश्वरेण यत्प्रोक्तमागमं तन्निगद्यते॥ देवीप्रोक्तं महातंत्रं निगमं तद्विदुर्बुधाः" इति। किं च महर्षिप्रणीतानि यानि यानि तंत्राणि तान्युपतंत्रनाम्ना प्रसिद्धानि। तेषां तंत्राणां नामादिदिग्दर्शनमात्रं यथा—"सिद्धीश्वरं महातन्त्रं कालीतंत्रं कुलार्णवम्। ज्ञानार्णवं नीलतंत्रं फेत्कारीतंत्रमुत्तमम्। देव्यागमं उत्तराख्यं श्रीक्रमं सिद्धियामलम्। मत्स्यसूक्तं सिद्धसारं सिद्धिसारस्वतं तथा। वाराहीतंत्रं देवेशि योगिनीतंत्रमुत्तमम्। गणेशविमर्षिणीतंत्रं नित्यातंत्रं शिवागमम्। चामुण्डाख्यं महेशानि मुण्डमालाख्यतंत्रकम्। हंसमाहेश्वरं तंत्रं निरुत्तरमनुत्तमम्। कुलप्रकाशकं देवि कल्पं गान्धर्वकं शिवे। क्रियासारं निबन्धाख्यं स्वतंत्रं तंत्रमुत्तमम्। सम्मोहनं तंत्रराजं ललिताख्यं तथा शिवाराधाख्यं मालिनीतंत्रं रुद्रयामलमुत्तमम्। बृहच्छ्रीक्रमतंत्रश्च गवाक्षं सुकुमूदिनी। विशुद्धेश्वरतंत्रश्च मालिनीविजयं तथा। समयाचारतंत्रश्च भैरवीतंत्रमुत्तमम्। योगिनीहृदयं तंत्रं भैरवं परमेश्वरि। सनत्कुमारकं तंत्रं योनितंत्रं प्रकीर्तितम्। तंत्रान्तरश्च देवेशि नवरत्नेश्वरं तथा। कुलचूडामणिं तंत्रं भावचूडामणीयकम्। मंत्रदेवप्रकाशश्च कामाख्यानामकं तथा। कामधेनुः कुमारी च भूतडामरसंज्ञकम्। मालिनीविजयं तंत्रं यामलं ब्रह्मयामलम्। विश्वसारं महातंत्रं महाकालं कुलामृतम्। कुलोड्डीशं कुब्जिकाख्यं तन्त्रं चिन्तामणीयकम्।" इति सिद्धसारस्वते। एवं उपतंत्राणि यथा—"सिद्धोक्तान्युपतंत्राणि कापिलोक्तानि यानि च। अत्यद्भुतानि चैतानि जैमिन्युक्तानि यानि च। वसिष्ठः कापिलश्चैव नारदो गर्ग एव च। पुलस्त्यो भार्गवः सिद्धो याज्ञवल्क्यो

भृगुस्तथा । शुक्रो बृहस्पतिश्चैव अन्ये ये मुनिसत्तमाः । ” इति वाराहीतंत्रे । अथान्येषामपि तंत्राणां नामानि यथा— पंचरात्रागमः, श्रीभागवततंत्रम्, पुरुषोत्तमतंत्रम्, वासुदेवाध्यात्म, नारायणाध्यात्म, प्रवृत्त, सत्तत्वविवेकः, ब्रह्मतर्कः, वायुप्रोक्तः, प्रकाशसंहिता, विष्णुरहस्य, नामरहस्य, उपासनारहस्य, कालीसारतंत्र, विद्यावैभव, दशावतारचन्द्रिका, कला, महिषमर्द्दिनी, मातृका, महानिर्वाण, महालील, महाकालसंहिता, मेरु, दामर, वीरभद्र, विजयचिंतामणि, एकजटिका, निर्वाण, त्रिपुरा, कालीविलास, वरदा, वासुदेवरहस्य, आदित्यरहस्य, दुर्गारहस्य, गणपतिरहस्य, सदाशिवरहस्य, बृहद्गौतमीय, वर्णोद्धृत, बृहन्नील, बृहद्योनीरहस्य, ब्रह्मज्ञान, अद्वैतवर्णविलास, पुरश्चरणचन्द्रिका, रसोल्लास, पञ्चदशी, पिच्छिला, प्रपञ्चसार, परमेश्वर, हंसाद्य, नित्य, लील, नारायणी, नारदीय, नागार्ज्जुन, दक्षिणामूर्तिसंहिता, दत्तात्रेय, अष्टावक्र, यक्षिणी, योगसारार्णव, अनूत्तम, योगेश्वर, यामलभैरव, राजराजेश्वरी, रेवती, रामार्चनचन्द्रिका, शिवार्चनचन्द्रिका, दुर्गार्चनचन्द्रिका, स्वरोदय, इन्द्रजाल, कालीतन्त्र, कालीकुलसर्वस्व, कुमारी, कृकलासदीपिका, कंकालमालिनी, कालोत्तर, कल्पसूत्र, गौरीतन्त्र, गन्धर्वतन्त्र, श्रीगणेश, श्रीसूर्य, विमर्षिणी, गुरुतंत्र, गायत्री, गवाक्ष, गवाक्षसंहिता, ज्ञानभाष्य, अन्नकल्प, उत्पत्ति, उत्तर, उड्डीश, यक्षडामर, सरस्वती, लक्ष्मी, शारदा, शक्तिसंगम, आगमसर्वस्व, चीनाचार, ताराहस्य, श्रीश्यामारहस्य, स्कंदयामल, निगमकल्पद्रुमलता, लतासार, ऊर्ध्वाम्नाय, शिवसारतंत्र, शिवसंहिता, विज्ञानभाष्य, कुंडलिनी, बृहत्संहिता, मायावैभव, सनत्कुमाररहस्य, गर्गसंहिता, नारदोक्त, वाल्मीकिसंहिता, पुलस्त्यसंहिता, इत्यादि । तथा योगिनीजालशम्बरं तंत्रं योगिनीजालदर्शनो-

पायप्रतिपादकम् । तत्वशम्बरतन्त्रमिन्द्रजालविद्याविशेषः, पृथिव्यादितत्त्वानामन्यत्रान्यबोधोपायप्रतिपादकम् सिद्धभैरवतंत्रम्, मायिकभैरवतन्त्रम्, कङ्कालभैरवतन्त्रम्, कालाग्निभैरवतन्त्रम्, शक्तिभैरवतन्त्रम्, योगिनीभैरवतन्त्रम्, महाभैरवतन्त्रम्, भैरवनाथतन्त्रम्, भैरवाष्टकमिदं कापालिकमतप्रतिपादकम्, बहुरूपा शक्तिस्तत्प्रतिपादकतन्त्राणां गणो बहुरूपाष्टकम्, यथा ब्रह्माणीतन्त्रम्, इदमेव ब्राह्मीतन्त्रम्, माहेश्वरीतन्त्रम्, कौमारीतन्त्रम्, वैष्णवीतन्त्रम्, इन्द्राणीतन्त्रम्, चामुण्डातन्त्रम्, शिवदूतीतन्त्रं चेति। ब्राम्ह्याद्यष्टकमिदं प्राधान्येन तत्तद्देवताप्रतिपादकम् यामला नाम सिद्धान्तप्रतिपादकानि तन्त्राणि रुद्रयामलादीन्यष्टौ । यथा रुद्रयामलम्, शिवयामलम्, विष्णुयामलम्, ब्रह्मयामलम्, देवीयामलम्, आदियामलम्, गणेशयामलम्, आदित्ययामलम्, शाक्ततन्त्रतया चतुःषष्टितन्त्राणामपि यामलतया व्यवहारः । चन्द्रज्ञानतन्त्रम् कामेश्वर्यादिषोडश नित्याप्रतिपादकं, कापालिकमतदर्शकं च तिथिनामधेयं नित्येति । श्रीमहासंमोहनतन्त्रं जाग्रतामपिनिद्रितोपायप्रतिपादकम् । वामजुष्टं वामकेश्वरं तन्त्रं चतुःशतीत्यपि कथ्यते । महादेवमहादेवीविष्णुदेवआदित्यदेवगणपतिदेवतन्त्राणि, पञ्चकुलाचारप्रदर्शकम्। वातुलम्, वातुलोत्तरम्, कामिकंचेति। त्रीण्येतानि तन्त्राणि क्षेत्रकर्षणादिविधिप्रतिपादकानि । हृद्भेदतन्त्रम् कापालिकाचारप्रदर्शकम् । तन्त्रभेदगुह्यतन्त्रयोः प्रकाशं रहस्यं वा परकृतमन्त्रतन्त्रप्रयोगाणां परावृत्त्युपायाः प्रदर्शिताः । कालावादं कामशास्त्रं वात्स्यायनादिमतम्। कालासारं रूपादिवृद्ध्युपायप्रतिपादकम्। कुण्डिकामतं गुटिकासिद्धिप्रदर्शकम् । गुटिका पानपात्रम् मतोत्तरं तंत्रं रससिद्धिप्रकाशकम् । वीणातंत्रम् । वीणानाम योगिनीसंभोगयक्षिणीत्यस्यानामान्तरम्। तस्याः साधनोपाय-

प्रदर्शकम्।त्रोतलतन्त्रं गुटिकाञ्जनपादुकासिद्धिप्रतिपादकम्।त्रोतलोत्तरतन्त्रे चतुःषष्टिसहस्रयोगिनीनां दर्शनोपायः।पञ्चामृततन्त्रं। पृथिव्यादिपञ्चभूतानां साधनेन मरणाभावप्रतिपादकं। कापालिकतन्त्रम्। रूपभेदादिपञ्चतन्त्राण्युच्चाटनादिप्रतिपादकानि। सर्वज्ञानादितन्त्रपञ्चकं कापालिकसिद्धान्तैकदेशि दिगम्बरमताचारप्रदर्शकम्।पूर्वतन्त्रादि देवीमतपर्यन्तं तन्त्राष्टकं दिगम्बरैकदेशिक्षपणकमताचारप्रदर्शकम्। तंत्रेष्वपि संहितानाम्ना प्रसिद्धो भागोऽस्ति सोऽपि यथा वेदेषु स्मृतिषु पुराणेषु संहितानामकस्तथेति बोध्यम् यथा शिवसंहिता कपिलसंहिता वसिष्ठसंहितेत्यादि। एवमादि निगमागमशब्दवाच्या वैदिकाः प्रमाणग्रन्था बहुकोटिसंख्याकाः पूर्वं प्रादुर्भूता आसन् ते च कालमहिम्नाऽदर्शनं गता इदानीं कतमोंशोऽपि तेषां नोपलभ्यत इति यथालाभं संतोष्टव्यम्। एवमादि बहूनि तंत्राणि संति तेषां वचनानि पंचसंप्रदायप्रवर्तकाचार्याणां निबंधादिषु संगृहीतानि समुपलभ्यंते। तेषां च युगमाहात्म्यानुसारेणांगीकारो यथा "कृते श्रुत्युक्तमार्गः स्यात् त्रेतायां स्मृतिसंभवः।द्वापरे तु पुराणोक्तः कलावागमसम्मतः" इति ताराप्रदीपम्। अपि च " श्रुतिस्मृतिविधानेन पूजा कार्या युगत्रये। आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः ॥ न हि देवाः प्रसीदंति कलौ चान्यविधानतः"। इति विष्णुयामलम्। तथा "अशुद्धाः शूद्रकर्माणो ब्राह्मणाः कलिसम्भवाः। तेषामागममार्गेण सिद्धिर्न श्रौतवर्त्मना"। इति विज्ञानभाष्यतन्त्रम्। नन्वेवं तमोबहुलानि अधर्मपापदुःखफलानि तंत्राणि किमर्थमाविर्भूतानीति चेत्सत्यम्। सर्वविधविद्याऽविद्याज्ञानाज्ञानधर्माधर्मपुण्यपापसुखदुःखादिपरस्परं विरुद्धा गतयो यथैकस्मिन्नद्वितीये कार्यकारणात्मके ब्रह्मणि सर्वदा व्यवहारदशायां सुप्रतीताः परिस्फुरंति ता एव च पुनस्तस्मिन् परमार्थदशायामप्रतीता बाधि-

ता भवंत्येवमेव किल शब्दब्रह्मणि प्रवृत्तिदशायामानुलोम्येन। त्रिगुणमयाधिकारिणां गुणत्रयात्मकास्तत्तद्रूपा उपदेशाः परिस्फुरंति। निवृत्तिदशायां च प्रातिलोम्येन तेषामेव त एवोपदेशा वैपरीत्येन परिस्फुरंति। तद्यथा "त्रैगुण्यविषया वेदाः" "अपामसोमममृता बभूम" "वयं स्याम पतयो रयीणाम्।" "अभिचरं छ्येनेन यजेत" ईदृशानां विभक्ताधिकारिविषयाणां वेदानां "लोके व्यवायामिषमद्यसेवा नित्याऽस्य जंतोर्न हि तत्र चोदना।व्यवस्थितिस्तत्र विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा" इतिस्मृतेः। "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति श्रुतिसंचरितः पंथास्तत्वमस्याद्यैक्यसीमानमवगाहते। एवं श्रुतेरर्थं स्मृतयोऽप्यनुगच्छति। पुराणान्यपि च त्रैगुण्यं भजंते निस्त्रैगुण्ये च पर्यवसानं प्राप्नुवंति। तथैव तंत्राण्यपि, "तंत्रं सात्वतमाचष्टे नैष्कर्म्यं कर्मणां यतः। वैदिकस्तांत्रिको मिश्र इति मे त्रिविधो मखः" "वैदिकी तांत्रिकी दीक्षा" "उभाभ्यां वेदतंत्राभ्याम्" इत्यादि तत्र तत्र श्रीमद्भागवतादिषु सात्विकागमैर्निवृत्तेरेवोक्तत्वादुत्तमसात्विकाधिकारिपराण्यपि तंत्राणि। एवं राजसतामसान्यपि। उपासात्रैविध्यं च स्वयं श्रीभगवतोक्तम् "अंतवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्। देवान् देवयजो यांति मद्भक्ता यांति मामपि" इत्युक्त्या भगवदुपासाश्रैष्ठ्यमन्यदेवाद्युपासायास्त्रिगुणमयत्त्वं चोक्तं परं च, "ये चैव सात्विका भावा राजसास्तामसाश्च ये। मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि॥यजंते सात्विका देवान् यक्षरक्षांसि राजसाः। प्रेतान् भूतगणांश्चान्ये यजंते तामसा जनाः" इति कथनाद्राजसतामसभावयोराविर्भावोऽपि प्रपंचस्य प्रवाहनित्यतया नापूर्वः। गुणत्रयविषयकविज्ञानविचारेषु हि प्राकृतिकेऽस्मिन् प्रपंचे भावानां चातुर्विध्यं प्रतीयते। जडताश्रयाः, क्रियाश्रयाः,

ज्ञानाश्रयाः,विज्ञानाश्रयाश्च यथाक्रमं उद्भिदाः स्वेदजाः अंडजाः जरायुजा इति । यथा ते च तमःप्रधाना रजःप्रधाना रजःसत्वप्रधानाः सत्वप्रधाना इति मनुष्येष्वपि चतुर्भावापन्नेषु प्रातिलोम्येन गुणत्रयसंध्यतिक्रमणार्थं रजस्तमोमयप्रकृतीनधिकृत्य तथा तथोपासनाविधीनामावश्यकत्वात्तदाविर्भावः । अकरणान्मदकरणं श्रेय इति वचनादधिभूतमात्रपरदृष्टीनामतिनास्तिकजडानां कुत्रचिदधिदैवे समाकर्षणे नास्तिकाधमत्वं संपादयितुं तदावश्यकत्वम् । यदि गृहे निवसेत्तंत्रं तत्र लक्ष्मीः स्थिरायते।यज्ज्ञानात्साधकाः सर्वे सर्वैश्वर्यमवाप्नुयुः ॥सारात्सारतरं तंत्रं सर्वसारस्वतप्रदम् ॥ इति बृहन्नीलतन्त्रम्। "तथा समस्तशास्त्राणां तंत्रशास्त्रमनुत्तमम्॥" इति मत्स्यसूक्तं। "स ज्ञानी ब्रह्मवित्साधुर्यस्तंत्रं वेत्ति कालिके" इति महानिर्वाणतंत्रम् । इत्यादितंत्रवचनैर्यन्माहात्म्यमुच्यते तथा "स्त्रीशूद्रद्विजबंधूनां तन्त्रज्ञानेऽधिकारिता।एकदेशे परोक्ते तु नतु ग्रंथपुरःसरः" इत्यधिकारिनिर्णायकभागवततंत्रादिवचनैर्योऽसावधिकारो ब्रह्मज्ञानेपि स्त्रीशूद्रादीनामुक्तः स सर्वोप्यनुग्रहस्तंत्राणामेवेति सार्वजनीनता तंत्राणां भूषणं न तु दूषणम्। किं च तंत्राणामुत्तमत्वं बहुत्रदृष्टचरं यत अधिभूतादिभावत्रयाणां अध्यात्मरहस्याध्यायोक्तानां विज्ञानविस्तरस्तथा चतुर्दशानां विद्यानामुपवेदसहितानामष्टादशानां वा विद्यानां विज्ञानविस्तरः परिपूर्णस्तंत्रेषु कृतो दृश्यते । अत एव सर्वविधजीवहितकारित्वं तंत्राणाम् ।अधिकारिणामनिर्णयादेव तंत्रेष्वतंकापंकप्रक्षेपः क्रियते जनैरिति । श्रुतिस्मृतिपुराणरहस्यमेव तंत्रेषूच्यते नान्यत् । देशकालमहिम्ना तु पुराणवत्तंत्रेष्वपि मूलग्रंथोच्छेदनूतनग्रंथप्रक्षेपादिरूपः प्रपंचोऽस्त्येवेत्येवमादिकारणैर्मुह्यते जनस्तंत्रमहोदधौ।अपि च यथा हि वेदत्रयेण सहाऽथर्ववेदस्य विद्यते विलक्षणः सम्बन्धस्तथैव शास्त्रांतरैः सह तंत्राणामपि वर्तते विशिष्टसम्बन्ध इति मा-

ननीयम् । अधिकारविषयत्वेऽपि यथाऽथर्ववेदानां परमोपकारित्वं माननीयत्वं च समवधार्य्यते, तथैव तंत्रशास्त्रसमूहानामपि सर्वजनीनतया परमोपकारित्वं माननीयत्वश्चास्तीत्यत्रनास्ति संशयलेशः । एवमधिकारविषयवैचित्र्यात् कलिकालेन च तमःपरिणामकालेन संबद्धत्वात् तंत्राणि वहुधा शिववाक्यरूपेण प्रसिद्धानि ।

अनंतशास्त्रं बहु वेदितव्यं स्वल्पश्च कालो बहवश्च विघ्नाः । यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमिश्रम् ॥ इमां भगवदाज्ञां तु हृदि कृत्य जगद्धितम् । विचार्य संगृहीतेयं मधुसूदनसंहिता ॥ टिप्पणीपरिशिष्टाभ्यां सहिता प्रमिता हिता । अनया विश्वहितकृत्प्रीणातु मधुसूदनः ॥ एष सद्धर्मसिद्धांतः पूर्वैरेव निरूपितः । तत्तन्त्रतस्तु संक्षिप्तसारत्वान्नगतार्थता ॥ धर्मदृढबद्धमूलो वेदस्कन्धः पुराणशाखाढ्यः । क्रतुकुसुमो मोक्षफलो मधुसूदनपादपो जयति । योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः । यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथा तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥ तस्य श्रीगुरुदेवस्य पदाब्जे तु समर्पिता । संहितामालिका सेयं तत्कृपागुणगुंफिता । ज्ञानविज्ञानपूर्णाय विविधाव्ययरूपिणे । शाश्वताय नमस्कुर्मो वेदाय च भवाय च ॥ यैरिमे गुरुभिः पूर्वं ऋषिरूपेण मानतः । व्याख्याताः सर्वसिद्धांतास्तान्नित्यं प्रणमाम्यहम् ॥ तदेतदृचाप्युक्तम् । तद्विष्णोः परमं पदꣳसदा पश्यंति सूरयः । दिवीव चक्षुराततम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॐ तत् सत् ॥

इति श्रीश्रीमन्मधुसूदनसंहिता समाप्ता ॥



श्रीनिगमागममण्डली कार्य्यालय

एवं

# निगमागमपुस्तकालय का

पता,—

श्रीमथुरापुरी। उत्तर--पश्चिम प्रदेश।

श्रीनिगमागममण्डली प्रकाशित नाना अपूर्व ग्रन्थरत्नों का सूचीपत्र प्रार्थना करनेपर विना किसी व्ययके भेजा जाताहै।

पुस्तक मिलनेका पता,

पं० श्रीधर शिवलाल
ज्ञानसागर छापाखाना
मुंबई।

पं० श्रीधर शिवलाल
अजमेर, नयाबाजार.